ANANTBHATT KAVI'S.

# BHARATA CHAMPÛ.

WITH

ANTAHPRAVESHIKÂ COMMENTARY

BY

Gaanjan Chintaman Deo.

BOMBAY

Printed at Ganpat Krishnaji's Press.

K. GURUSWAMI & Co.

25 Kalabadevi Road Bombay.

श्रीमदनंतभट्टकविविरचिता

# भारतचंम्पूः

देवकुलोत्पन्नेन चिंतामणशास्त्रिसूनुना

गजाननेन कृतान्तःप्रवेशिकया टीकयासहिता

साच

मुंबापुर्यां

के० गुरुस्वामिना

' गणपत कृष्णाजी ' मुद्रणयंत्रालयेमुद्रिता.

प्रथमावृत्तिः

शके १८२२.

॥ श्रीः ॥

# अथ भारतचंपूः ।

## प्रथमस्तबकः ।

कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमाला-
खेलल्लोलंबकोलाहलमुखरितदिक्चक्रवालांतरालम् ॥
भत्नं वेतंडरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वातांकूराजिहीर्षोदरविवृतफणाशृंगभूषाभुजंगम् ॥ १ ॥

कल्याणं मंगलं वः युष्माकं विधत्तां करोतु करटः गंडस्थलं मदधुनी मदोदकनदी लोलं चंचलं कल्लोलमाला महालहरीपरंपरा लोलंबः भ्रमरः कोलाहलः कलकलः मुखरितं नादयुक्तं कृतं दिक्चक्रवालं दिङ्मंडलं अंतरालं मध्यभागः भत्नं पुरातनं वेतंडरत्नं हस्तिश्रेष्ठो गजाननः प्ररोहतां उत्पद्यमानानां वातांकूरः अल्पवायुः जिहीर्षा हरणेच्छा दरं ईषत् विवृतफणाशृंगं प्रसारितफणाग्रभागः भूषा भूषणभूता भुजंगः नागराजा ॥१॥

तुहिनकिरणवंशस्थूलमुक्ताफलानां विपुलभुजविराजद्वी-
रलक्ष्मीविभूम्नाम् ॥ हसितसुरपुरश्रीरस्ति सा हस्ति-
नाख्या रिपुजनदुरवापा राजधानी कुरूणाम् ॥ २ ॥

( तुहिनं हिमं ) तुहिनकिरणवंशः चंद्रवंशः (वंशः वेणुः) स्थूलमुक्ताफलानां पृथुलमौक्तिकानां विपुलं बहुलं विराजन् शोभमानः विभूमा महत्त्वं हसिता तुच्छीकृता सुरपुरश्री अमरावतीशोभा दुरवापां दुःखेनापिप्राप्तुमशक्यां कुरवः कुरुदेशानां राजानः ॥२॥

यस्यामुदग्रनृपमन्दिरचन्द्रशालावातायने गतिवशाद्व-
पुषि प्रसक्ताम् ॥ दीपाग्रधूममषिकां शिशिरांशुबिंबे
मोहात्कुरंग इति मुग्धजना वदंति ॥ ३ ॥

यस्यां हस्तिनापुर्यां उदग्रं अत्युच्चं चंद्रशालाशिरोगृहं वातायने गवाक्षे गतिवशात् कदाचिद्गमनवशात् वपुषि अमृतमये दीपाग्रं दीपशिखा धूममषिकां धूमजन्यकज्जलं शि-

शिरांशुबिंबं चंद्रबिंबं मोहात् अज्ञानात् कुरंग इति ( आकारसादृश्यत्वात् ) हरिणोपमिति ॥ ३ ॥

ग्रीष्मेषु शीतकरकांतकृतोदरासु यद्गोपुराग्रिमदरीषु
पथागतस्य ॥ विश्राम्यतो हरिहयस्य विलंबनेषु
चिह्नं तदीयदिनसंततिदीर्घभावः ॥ ४ ॥

शीतकरकांतः चंद्रकांतः उदरं भित्त्याद्यंतरीयभागः गोपुरं पुरद्वारं अग्रिमं उपरितनं विश्राम्यतः विश्रांतिमनुभवतः हरिहयस्य सूर्याश्वस्य तदीयानि ग्रीष्मर्तुसंबंधीनि दिनसंततिः दिनसमूहः दीर्घभावः दीर्घत्वम् ॥ ४ ॥

यत्रांगनावदनयामवतीशदृष्ट्यचंद्राश्मसौधगलितः
सलिलप्रवाहः ॥ वृंदारकेंद्रनगरीबृहदुत्सवाय
मंदाकिनीतिलभते महतीमभिख्याम् ॥ ५ ॥

यत्र यस्यांनगर्यां वदनयामवतीशः मुखचंद्रः दृष्यंतः स्रवंतः चंद्राश्मा चंद्रकांतमणिः सौधगलितः अधोभागस्थाकाशसमीपेपतितः सलिलप्रवाहः ( चंद्रकांतीयः ) जलप्रवाहः वृंदारकेंद्रनगरी अमरावती अभिख्यां अभिधानम् ॥ ५ ॥

दीप्रैरगारमणिभिर्दिवसायमानां निश्चिन्वते मनसि
यत्र निशां युवानः ॥ कार्तांतिकैरखिलकालनिवेद-
नाय घंटामणेरभिहतस्य घनारवेण ॥ ६ ॥

दीप्रः स्वतः सिद्धप्रकाशः अगारं गृहं मणिभिः हीरकादिरत्नैः निश्चिन्वते निश्चयं कुर्वंति यत्र यस्यां नगर्यां युवानः तरुणपुरुषाः कार्तान्तिकैः कालनिवेदिभिः निवेदनाय ज्ञापनाय घंटामणिः घंटामध्यवर्तिमणिः घनारवः गंभीरशब्दः अभिहतस्य ताडितस्य ॥ ६ ॥

वक्त्रं विलासमणिदर्पणधार्यमाणं वामा हिमांशुरय-
मित्यवधार्य यस्याम् ॥ आदर्शबिंबधृतिरश्रुतदृष्टपूर्वा
तस्येति तादृशधियं विनिवारयंति ॥ ७ ॥

वक्त्रं वदनं विलासमणिदर्पणं विलासार्थे यत्हीरकदर्पणं धार्यमाणं स्थाप्यमानं वामा सुंदरी हिमांशुः चंद्रः यस्यां नगर्यां आदर्शबिंबधृतिः दर्पणे बिंबसत्वं २ ( दर्शः अमावास्या ) अमावास्यापर्यंतं चंद्रबिंबस्थितिः अश्रुतदृष्टपूर्वा कदापि न श्रुता न दृष्टा तादृशधियं चंद्रमितिबुद्धिं विनिवारयंति दूरीकुर्वंति ॥ ७ ॥

आलापकालसमपल्लवितांकवीणासौरभ्यपातिमधुपा-
रवसंकुलस्य ।। तंत्रीस्वनस्य समितौ तरुणीस्वन-
स्य जानाति यत्र चतुरोऽपि न तारतम्यम् ।। ८ ।।

पल्लविता वादनार्थमंगुलीयुक्ताकृता सौरभ्यपाति सौगंध्यविषयेपतनशीलं मधुपारवसंकुलं भ्रमरनादमिश्रितं तंत्री तंतुवाद्यं समितौ सभायां यत्र यस्यां नगर्यां तारतम्यं न्यूनाधिकभावम् ॥ ८ ॥

शालीनतामविगणय्य सखीसमाजे पश्चात्कृतस्य कमितुः प्रणय-
प्रकोपात् ।। मुग्धाः समीक्ष्य मुकुरायितरत्नभित्तौ छायां क्षणानु-
तपनं शमयंति यस्याम् ।। ९ ।।

शालीनतां धैर्याभावं अविगणय्य त्यक्त्वा कमितुः कांतस्य प्रणयप्रकोपात् प्रेमजन्यकलहात् मुग्धाः अनिपुणस्त्रियः समीक्ष्य सम्यग्दृष्ट्वा छाया प्रतिबिंबं अनुतपनं पश्चात्तापम् ॥ ९ ॥

चित्रं दिदर्शयिषुणा जनितस्य यस्यां मध्यं विनैव विधिना
महिलाजनस्य ।। अंगं नितंबजघनादि यतो यतोधस्तुंगं कुचा-
द्युपरि याति ततोऽनुकूलम् ।। १० ।।

चित्रं आश्चर्यं दिदर्शयिषुणा लोकान्प्रति दर्शयितुमिच्छुना जनितस्य उत्पादितस्य मध्यं मध्यमावयवं विधिना ब्रह्मणा महिलाजनस्य स्त्रीजनस्य नितंबः कटिपश्चाद्भागः जघनः कटिपुरोभागः अधः अधोभागः तुंगं उच्चं उपरि ऊर्ध्वभागे याति गच्छति ततः तस्यांदिशि ॥ १० ॥

पंकेरुहाणि परिखामवतीर्य यस्यां प्राकारभित्तिमभितः परिवे-
ष्टयंति ।। अंतस्थितिं विदधतामबलाजनानामास्यानि जेतुम-
खिलानि किलात्मभासा ।। ११ ।।

पंकेरुहं कमलं परिखां परिखोदके अवतीर्य प्रविश्य अभितः सर्वतः विदधतां कुर्वतां आस्यं मुखं जेतुंकिल जेतुमिव आत्मभासा आत्मकांत्या ॥ ११ ॥

(गद्यम्) या खलु पुरा कुरुधराधिपापराधसमेधितक्रोधेन हलधरे-
ण निजायुधेन हठात्कर्षणशिक्षया तत्क्षणं समुत्क्षिप्तदक्षिण-

क्षितिभागा तदीयभुवनभूषणायमानां भोगावतीमात्मना विजेतुं भागीरथीपाथःपथेनावतीर्य कृतप्रस्थानेवाद्यापि दृश्यते ॥ १ ॥

या नगरी पुरा पूर्वकाले खल्विति इतिहाससूचकं कुरुधराधिपः राजा दुर्योधनः समेधितः सम्यक् वृद्धिप्राप्तः हलधरः बलरामः समुत्क्षिप्तः ऊर्ध्वभागंनीतः क्षितिः भूमिः तदीयभुवनं तस्य ( शेषावतारस्य बलरामस्य ) लोकः ( पातालम् ) भूषणायमाना भूषावदाचरंती भोगावती नागराजधानी आत्मनाविजेतुं स्वयंपराजेतुं पाथःपथः जलमार्गः अवतीर्य अवतरणंकृत्वा कृतप्रस्थानं कृतगमनप्रारंभः ॥ १ ॥

( पद्यम् ) उपेत्यतां पांडुरुदारविक्रमः प्रजामनः पल्लवयन् प्रशासनात् ॥ यशः प्रकाशैर्यमुनासखीसखैर्निनाय लोकं निजनामवाच्यताम् ॥ १२ ॥

उपेत्य प्राप्य तां नगरीं उदारविक्रमः महापराक्रमः पल्लवयन् विकासयन् यमुनासखी गंगा तस्याः सखायः मित्राणि सदृशाइत्यर्थः तैः यमुनासखीसखैः निनाय( शुभ्रं )चकार निजनामवाच्यतां निजनामवाच्यतां ( पांडुरिति ) निजनाम तस्य वाच्यतां शुभ्रत्वम् ॥ १२ ॥

( गद्यम् ) यं पराशरसुतो निखिलावनिदेशावनाय निजजननीनिदेशवशमना मनागितराश्चर्यतपश्चर्यालंकर्मीणः समानोदर्यस्य विचित्रवीर्यस्य कुटुंबिन्यामंबालिकायां संपादयामास ॥ २ ॥

यं पांडुं पराशरसुतः व्यासः निखिलावनिदेशावनाय सकलभूप्रदेशसंरक्षणाय निदेशः आज्ञा मनागितराश्चर्यं बहु आश्चर्यं अलंकर्मीणः कर्तुमकर्तुंसमर्थः कुटुंबिनी पत्नी ॥ २ ॥

( पद्यम् ) चित्रं चरित्रं जगतीतलेऽस्य न श्लाघयामास नरेषु को वा ॥ स यत्स्वयं पांडुरपि स्वकेन गुणेन रक्तानकरोत्समस्तान् ॥ १३ ॥

चित्रं चरित्रं आश्चर्यकारकंचरित्रं जगतीतलं भूतलं पांडुरपि राजा पांडुरपि २ शुभ्रोऽपि रक्तान् अनुरक्तान् २ रक्तवर्णान् समस्तान् सकलान् लोकान् ॥ १३ ॥

अंतर्भवत्कृष्णमृगाजिनांकैः सुनिर्मलैः षोडशदानकीर्तैः ॥ खंडैर्मनुष्येंदुरकारि धात्रा मृषायमब्धेरजनीति वार्ता ॥ १४ ॥

अजिनं वधः २ चर्म सुनिर्मलैः सुतरां निर्मलैः षोडशदानकीर्तिः रत्नधेन्वादि षोडश महादानानां किर्तिः अमुष्य राज्ञः इंदुरकारि इंदुः ( चंद्रः ) अकारि कृतः धात्रा ब्रह्मणा अयं इंदुः अब्धेरजनीति वार्ता मृषा सकाशात् अजनि जात इति वार्ता मिथ्या ॥ १४ ॥

जग्राह निग्राहपरः परश्रियां करे कराग्रेण करेणुचंक्रमः ॥ कुंतीं शकुंतेशरथो यथा रमां समुद्रकांचीं च समद्रकन्यकाम् ॥ १५ ॥

जग्राह परिणीतवान् निग्राहपरः ग्रहणपरः परश्रीः शत्रुसंपत् करी हस्ती चंक्रमः गतिः शकुंतेशरथः ( शकुंतानां पक्षिणां ईशः पतिः गरुडः स एव रथः वाहनं यस्य सः ) विष्णुः रमां लक्ष्मीं समुद्रकांचीं पृथ्वीं मद्रकन्यका माद्री ॥ १५ ॥

( गद्यम् ) अथ कदाचन मृगयोपलालितहृदयो नरेश्वरोयमश्वे शशिश्वेततेजसि विश्वातिशायिनि विजितमातरिश्वनि कृताधिरोहः पार्श्वधृतविश्वकद्रुभिरनेकवागुरोपकरणानुरोधैर्योधैरनुद्रुतो मृदुभद्रविनयाभ्यां यदुमद्रतनयाभ्यामनुविद्धः सिद्धगणगणनीयमहिमवतो हिमवतोवजगाहे महतीमटवीतटवीथिकाम् ॥ ३ ॥

अथ अनंतरं मृगयोपलालितहृदयः मृगयोत्सुकः नरेश्वरः राजापांडुः शशिश्वेतं चंद्रमिव शुभ्रं विश्वातिशायिनि ( निजगतिकौशलेन ) विश्वस्मिन् अतिशयेनवर्तते मातरिश्वा वायुः विश्वकद्रवः मृगयाकुशलश्वानः वागुरा मृगबंधिनी उपकरणं साधनं अनुद्रुतः अनुगतः मृदुभद्रं शुभं यदुमद्रतनयाभ्यामनुविद्धः कुंतीमाद्रीभ्यां युक्तः गणनीयं मान्यं महिमा पराक्रमः हिमवान् हिमालयपर्वतः अवजगाहे प्रविवेश अटवी अरण्यं तटवीथिका तटपंक्तिः ॥ ३ ॥

( गद्यम् ) तत्र स तावदतिक्षुल्लकवनमल्लिकामतल्लिकोद्वेल्लितधम्मिल्लोऽवलग्नदृढलग्नकच्छपुटविच्छुरितच्छुरिको निषंगानुषंगमांसलितमांसलललितः परनिरासपरं शरासनवरं करे कुर्वाणो गीर्वाणगणचक्रवर्तिविक्रमः क्रमेण विविधमृगचक्रवधं विधातुमुपचक्रमे ॥ ४ ॥

क्षुल्लकं अतिसूक्ष्मं वनमल्लिका वनपुष्पं मतल्लिका प्रशस्तं उद्वेल्लितः गुंफितः धम्मिल्लः संयतकचाः अवलग्ने मध्यभागे दृढलग्नः दृढसंबद्धः कच्छपुटः कटिहृदयचर्म-

वेष्टकं विच्छुरितंअंतःस्थापितं छुरिका लघुखड्गः निषंगः तूणीरः अनुषंगः संबंधः मांसलितः मांसलः अंसः स्कंधः ललितः सुंदरः शरासनं धनुः कुर्वाणः धर्त्ता गीर्वाणगणचक्रवर्ती ( गीर्वाणाः देवाः ) इंद्रः चक्रं समूहः विधातुं कर्तुं उपचक्रमे आरेभे ॥ ४ ॥

भूभुजोऽस्य सविधे विचरंत्योर्भोजमद्रतनयोर्दृशि शोभाम् ॥
जेतुकाममिव सर्वसमष्ट्या प्रादुरास पुरतो मृगयूथम् ॥ १६ ॥

भूभुजः राजा पांडुः सविधे समीपे भोजतनया कुंती मद्रतनया माद्री दृशि नयने शोभा कांतिः जेतुकाममिव इच्छुमिव समष्ट्या समुदायेन प्रादुरास प्रादुर्बभूव मृगयूथं पशुसंघम् ॥ १६ ॥

क्षोणीपतौ मदकलं प्रतिकृष्णसारं तूणीमुखे पतितपा-
णिनखांकुरेऽस्मिन् ॥ एणीकुलानि तरलैर्यमुनाजलानां
वेणीमिवाक्षिवलनैर्विपिने वितेनुः ॥ १७ ॥

क्षोणीपतिः राजा मदकलं मदसुंदरं पाणिः हस्तः तूणी भस्त्रा एणीकुलं हरिणीकुलं तरलैः चंचलैः वेणी प्रवाहः अक्षिवलनैः दर्शनपरंपराभिः विपिनं अरण्यं वितेनुः रचयामासुः ॥ १७ ॥

कुरंगयूनां कुरुतेस्मभीतिं गुरोः कुलस्यामृतदीधितेर्नः ॥
सजातिरेषां तनुते कलंकमितीव रोषादिषुभिः स पांडुः ॥ १८ ॥

कुरंगयुवातरुणहरिणः गुरुः उत्पादकः अमृतदीधितेः चंद्रस्य तनुते कुरुते रोषः क्रोधः इषुः बाणः ॥ १८ ॥

प्रजवं हयं गमयते ततस्ततः पतिता नृपाय शल्ली-
शलालिकाः ॥ गहने वनेऽपि पिशुनत्वमाचरन् ग्रहणे
वराहकुलवर्तनी भुवाम् ॥ १९ ॥

प्रजवः वेगवान् हयः अश्वः गमयते प्रापयन्तस्मै ततस्ततः तत्तत्स्थले शल्लीशलालिकाः शल्यसंज्ञकपशोःस्थूलरोमान् गहनं दुर्गमं पिशुनत्वं सूचकत्वं ग्रहणे स्वीकारविषये वराहकुलं सूकरसमूहः वर्तनीमार्गः ॥ १९ ॥

वेशंतपंकविहृतेर्विनिवृत्य सद्यः प्रत्युद्यतां ध्वनिषु मत्स-
रिणां हयस्य ॥ भूदार एष वनपोत्रवतामतानीत्
भूदारशब्दमसहिष्णुरिवांतमेषाम् ॥ २० ॥

वेशंतः अल्पसरोवरं पंकः कर्दमः विहृतेः क्रीडायाः प्रत्युद्यतां संमुखमापततां वनपोत्रवतां वनसूकराणां हयः अश्वः भूदारः राजा २ सूकरः अतानीत् अकरोत् अंतं वधं एषां सूकराणाम् ॥ २० ॥

तूर्णं प्रधाव्य तुरगं स्वयमन्यतोऽसौ पांडुः कुलं परिववार
लुलाययूनाम्॥ अग्रे विषाणकरधूननदुर्विधत्वात्सत्यापि-
तद्विरदभावविपर्ययाणाम् ॥ २१ ॥

तूर्णं शीघ्रं प्रधाव्य गमयित्वा तुरगः अश्वः लुलायः महिषः परिववार रुरोध अग्रे पुरोभागे विषाणं हस्तिदंतः करः शुण्डा धूननं चालनं दुर्विधत्वात् अभावात् सत्यापितः याथार्थ्येनज्ञापितः द्विरदभावविपर्ययः हस्तिनः इति बुद्धिर्जाता ॥ २१ ॥

आकर्ण्य क्षितिपहयारवानसह्यानामूलं कुपितधिय-
स्तिरो विषाणम् ॥ व्याधूयांतिकतरुषु क्षणान्निचख्नु-
र्व्याक्रष्टुं पुनरथतच्चिरं न शेकुः ॥ २२ ॥

क्षितिपहयारवान् भूपतिहस्त्यश्वशब्दान् आमूलं मूलपर्यंतं तिरः वक्रं विषाणं शृंगं व्याधूय कंपयित्वा अंतिकतरुषु समीपवृक्षेषु निचख्नुः आरोपयामासुः नशेकुः नशक्तावभूवुः ॥ २२ ॥

कुरुतेति ततः सहैव वासं कुलकूटस्थकृतांतवाहनेन ॥
मदधुतविषाणमंडलाग्रे महिषौघे निचखानमंडलाग्रम् ॥ २३ ॥

वासं स्थितिं कूटस्थः मूलपुरुषः कृतांतवाहनं महिषः मदधुतं मदेन कंपितं विषाणं शृंगं मंडलाग्रं करवालः निचखान रोपयामास ॥ २३ ॥

तन्न चित्रमवनीपतेस्ततश्चंद्रहासपतनं चकार यत् ॥
पोषितेषु वनमध्यचर्यया पुंडरीकनिवहेषु मीलनम् ॥ २४ ॥

चित्रं आश्चर्यं अवनीपतिः राजापांडुः चंद्रहासः खड्गः २ चंद्रिका पोषितेषु पुष्टिंनीतेषु वनमध्यचर्यया वनमध्ये संचारेण ( वनं अरण्यं २ जलं ) ( चर्यास्थि-

त्या ) पुंडरीकः व्याघ्रः पुंडरीकं कमलं निवहः समूहः मीलनं नाशं २ संकोचम् ॥ २४ ॥

गहनमस्तशरारुमृगव्रजं कृतवताप्यमुना जविवाजिना ॥
ममृगिरे हरयो मदशालिनो मनुजपेन गिरीशदरीशयाः ॥ २५ ॥

गहनं अरण्यं अस्तः हतः शरारुः घातुकः मृगव्रजः पशुसमूहः जवः वेगः वाजिः अश्वः ममृगिरे अवशिष्टाइति हरयः सिंहाः मदः गर्वः मनुजपः राजा गिरीशदरीशयाः पर्वतस्य दरीषु शेते ॥ २५ ॥

विस्फारघोषमवकर्ण्य विनिर्गतानां हुंकुर्वतां तरुणकेसरिणां गुहाभ्यः ॥ या केवलं प्रथममानन एव भल्लैस्तां पंचतां स विदधे सकलेऽपि देहे ॥ २६ ॥

विस्फारः धनुः घोषं शब्दं अवकर्ण्य श्रुत्वा केसरीणां सिंहानां विदधेचकार पंचतां विस्तृततां २ मरणम् ॥ २६ ॥

(गद्यम्) एवमश्रांतमृगयापरिश्रांतमपरिमितस्वेदशीकरनिकरकोरकितफालमूलमातेनिरे तमाश्यानं तुहिनगिरिदेश्यानंदनीयमंदिमानो मानससरोरविंदमकरंदबिंदुसंदोहसौरभी पारदृश्वानो मातरिश्वानः ॥ ५ ॥

अश्रांतं निरंतरं स्वेदः घर्मः शीकरः बिंदुः निकरः समूहः फालमूलं भालोर्ध्वभागः आतेनिरे चक्रुः आश्यानं शुष्कं तुहिनगिरिदेश्यानंदनीयं हिमपर्वतसंभवाः श्लाघनीयं मानससरोरविंदं मानससरोवरकमलं बिंदुसंदोहः बिंदुसमूहः सौरभ्याः सौगंधस्य दृश्वानः दृष्टवंतः मातरिश्वानः वायवः ॥ ५ ॥

(गद्यम्) अनंतरमसौ परंतपः समंततः शकुंतरवनिरंतरादिगंतरादखिलमृगकुलं शरण्यादरण्यादुत्प्लवमानस्य कस्य चिदनुप्लवनमंदितजवि चमूरोश्चमूरोः सरणिमनुसरमाणस्तदीयतनूरुहचित्रबिंदुरुचिनिकरैरिव गगनमुत्पतद्भिः खुररजोभिरनुमीयमानतुरगगतिर्दूरमतिपपात ॥ ६ ॥

परंतपः परान् शत्रून् तापयति दंडयति सः शकुंतानां रवैः पक्षिणां शब्दैः शरण्यः रक्षणेसाधुः उत्प्लवमानः उड्डीयमानः अनुप्लवनेन मंदिताः पश्चाद्धावनेन मंदाःकृताः जवः वेगः चमूरवः सेनासक्थीनि सरणिः गमनमार्गः तदीयं चमूरुसंबंधिनं तनूरुहं लोम रुचिनिकरः कांतिसमूहः अतिपपात जगाम ॥ ६ ॥

( गद्यम् ) तत्र तावत् क्वचन लतागुल्मपरिसरे स नरनाथः परिकथिततरुणिमप्रथिमकलेवरमशिथिलरतिसुखसनाथं हरिणमिथुनं नयनपथस्यातिथीचकार ॥ ७ ॥

तत्र तत्रस्थले क्वचन कुत्रचित् वनलतागुल्मपरिसरः वनलतासमूहमध्यभागः नरनाथः राजापांडुः परिकथितं प्रकटीकृतं तरुणिमप्रथिमा तारुण्यातिशयः अशिथिलंनिबिडं सनाथं युक्तं अतिथीचकार ददर्श ॥ ७ ॥

( पद्यम् ) तिग्मेन बाणेन जघान तस्मिन्युग्मे नराणामधिपः पुमांसम् ॥ वातायुराकारमसौ महर्षेर्जातायुरंतः सहसाऽऽललंबे ॥ २७ ॥

तिग्मं तीक्ष्णं वातायुः हरिणः आकारं रूपं जातायुरंतः जातः आयुषः अंतो यस्य सः आललंबे दध्रे ॥ २७ ॥

( गद्यम् ) ततः कृपामंदमनाः किंदमनामधेयः संदानिततनुः स्यंदमानरुधिरेण महारुषा कल्परविकल्पमहारुषा तस्मिन्महीभृति संभोगसंभेदकमंभोजदृशां दंभोलिमिव सहस्राक्षः शापमुदस्राक्षीत् ॥ ८ ॥

कृपामंदमनाः कठोरः किंदमनः महर्षिविशेषः संदानिता युक्ता स्यंदमानं गलत् रुधिरं रक्तं महारुषा महाव्रणेन कल्परविकल्पमहाः प्रलयकालिकसूर्यसदृशं तेजो यस्य ( महारुषामहाक्रोधेन ) महीभृत् राजा २ पर्वतः अंभोजदृक् कमलनयना दंभोलिमिव वज्रमिव सहस्राक्षः इंद्रः उदस्राक्षीत् उत्ससर्ज ॥ ८ ॥

तदनु तापसशापेन विरचितमनस्तापेन तेन धरणीपतिना चतुरंगं बलमिव सप्तांगं राज्यमपि व्यसृजत ॥ ९ ॥

तापसः ऋषिः तापः दुःखं धरणीपतिः राजा बलं सैन्यं राज्यमपिव्यसृजत् राज्यं त्यक्त्वा अरण्यवासं चकारेत्यर्थः ॥ ९ ॥

(पद्यम्) अष्टांगयोगानवतोस्य राज्ञो मिष्टान्नमासीन्मृ-
दुकंदमूलम् ॥ गर्भो वनस्याजनि केलिसौधो दर्भोऽपि
सिंहासनतां जगाहे ॥ २८ ॥

अवतः पालयतः मिष्टान्नं घृतशर्करायुक्तं मधुरान्नं गर्भः मध्यभागः केलिसौधः क्रीडासौधो जातः दर्भाः कुशाः जगाहे प्रापेतिभावः ॥ २८ ॥

(गद्यम्) अहो नरपतितापसयोः समानरूपफलमिदमाच-
रितम् ॥ तथाहि– ॥ १० ॥

अहो आश्चर्यं नरपतिः राजा समानरूपफलं तुल्याकारं फलं यस्य तथा-विधम् ॥ १० ॥

(पद्यम्) बाणशापप्रयोगाभ्यां बाधितौ तावुभाव-
पि ॥ तपस्वितां यतः सद्यस्तादृशीमुपजग्मतुः ॥ २९ ॥

बाधितः पीडितः तपस्वितां तापसत्वं २ शोच्यत्वं सद्यः तत्क्षणे उपजग्मतुः प्रापतुः ॥ २९ ॥

(गद्यम्)क्रमादतिपतिते चावरोधवधूजनानुरोधगुणदात्रे गणरात्रे॥११॥

क्रमात् मासादिक्रमात् अवरोधवधूजनः अंतःपुरस्त्रीजनः अनुरोधगुणदात्रे अ-नुकूलतागुणछेदके गणरात्रे निशावह्न्यः ॥ ११ ॥

(पद्यम्) अपाकरिष्यन्ननपत्यभावमपत्यभावं भुवनं करिष्यन् ॥
उवाचदेवीमुचितं स पांडुरुपह्वरे जातुचिदूहदक्षः ॥ ३० ॥

अपाकरिष्यन् दूरीकरिष्यन् अनपत्यभावं नास्ति अपत्यं संततिर्यस्य तस्य भावं अपत्यभावं नास्तिपत्युः अभावो यस्मिन् तत् देवी पट्टराज्ञी कुंती उचितं समयोचितं उपह्वरे एकांते जातुचित् कदाचित् ऊहदक्षः विचारचतुरः ॥ ३० ॥

परिपालयतोऽपि मे महीं परिपूर्तिर्नतनूजदुर्गतेः ॥
प्रजया हि मनुष्य इत्यमौ प्रथने हि श्रुतिवर्णपद्धतिः ॥ ३१ ॥

मेमम महीं पृथ्वीं परिपूर्तिःपूर्णता दुर्गतेःदारिद्र्याद्धेतोः श्रुतिर्वेदः प्रथतेप्रसिद्धावर्तते पद्धतिःपरंपरा ॥ ३१ ॥

गात्रं न केवलमशेषबुधोपलाल्यं गोत्रं च तत्र भवतः कुमुदैकबंधोः ॥ आपांडुवर्ततइति स्वयमेव मन्ये यस्मात्प्रजां न लभसे यदुवीरकन्ये ॥ ३२ ॥

गात्रं शरीरं केवलंएकं बुधाःदेवाः २ ज्ञानिनः उपलाल्यंलोभनीयं तत्र भवता पूज्यस्य कुमुदैकबंधुःचंद्रः अपाण्डु आसमन्तात्पांडु २ पांडुपर्यंतं गोत्रंकुलं मन्येतर्कयामि यदुविरकन्या कुन्ती ॥ ३२ ॥

न ह्यतीव विधिरप्यसुतानां नह्यते फलमिति श्रुतिसिद्धेः ॥
जीवतो मम यथाऽहवसाध्यो मीलतोऽपि न तथा परलोकः॥३३॥

विधिः वेदशास्त्रविहितकर्म असुतानां अनपत्यानां नह्यतेनसंबद्धोभवति, ददाति आहवः यज्ञः २ युद्धं मीलितःमृतस्य परलोकः स्वर्गः २ शत्रुलोकः ॥ ३३ ॥

अहं किमंबा किमभीष्टतापदे तवेति मातुर्धुरितातपृच्छया ॥ प्रलोभतुल्यं प्रवदंतमर्भकं मुदा हसन् जिघ्रति मूर्ध्नि पुण्यभाक् ॥ ३४ ॥

अभीष्टतापदं इष्टतास्थानं धुरिअग्रभागे पृच्छाप्रश्नः लोभतुल्यं लोभानुरूपं मुदा हसन् मूर्ध्निजिघ्रति सभाग्यवानित्यर्थः ॥ ३४ ॥

निंद्यते पितृभिस्तप्तैर्निरपत्यधनः पुमान् ॥
अध्वनीनैर्गतिश्रांतैरवकेशीव पादपः ॥ ३५ ॥

तप्तैःसंतप्तैः निरपत्यधनः पुत्ररूपधनरहितः अध्वनीनः पथिकः अवकेशी वंध्यः पादपः वृक्षः ॥ ३५ ॥

कदापि तातशब्दस्य कल्पभूमिरुहामिव ॥
नार्थीभवितुमर्हामि नरवाहनसन्निभः ॥ ३६ ॥

कल्पभूमिरुहः कल्पवृक्षः अर्थी याचकः नार्हामि योग्यो नभवामि नरवाहनसन्निभः कुबेरतुल्यः ॥ ३६ ॥

किं भोगवैभवयशःक्षितिजीवितायैरंभोरुहाक्षि नियमैरनघैस्त्वमेव ॥ शापातिरेकदवपावकशायिनो मे तापापनोदविधये तनयं प्रसूष्व ॥ ३७ ॥

किं किंप्रयोजनं भोगः विषयसुखं यशः कीर्तिः क्षितिःपृथ्वी जीवितं आयुः अंभोरुहाक्षि कमलनयने नियमैःव्रतोपवासादिनियमैः अनघैः निष्पापैः शापातिरेकः शापतीव्रता दवपावकशापिनः दवाग्निः तत्रशेते तस्य तापापनोदविधये तापनाशकर्म कर्तुम् ॥ ३७ ॥

(गद्यम्) इत्यसंकोचतः शोचतः पत्युरग्रभुवि समग्रमंदाक्षरमणीयं मंदाक्षरमणीयंत्रितमिदं वचनं पृथाऽपि कथयामास ॥१२॥

अग्रभुवि अग्रभागे समग्रं संपूर्ण मन्दाक्षंलज्जा रमणीयं सुंदरं ( मन्दाक्षरमणिः अल्पस्वरेनोच्चारितं अक्षररत्नं ) यंत्रितं गुफितं २ निबद्धं पृथा कुन्ती ॥ १२ ॥

( गद्यम् ) राजन् पुरा खलु पिता मम पितामहसमानस्य निशांतमधिवसतः कृशां तनुलतां तपसा वहतोऽपि दिशांततिषु निशांतरविकांतभृशां तरंगरुचां तरंगपरंपरां तरलयितुरशांतमनसो मुनेरुपांतपरिचरणाय मामनुशासितयौवराज्यामपि नियोज्यामकरोत् ॥ १३ ॥

पितामहः ब्रह्मा निशान्तं गृहं अधिवसतः तिष्ठतः कृशः क्षीणः तनुलता शरीरलता दिशांततिषु दशदिक्षु निशांतः प्रातःकालः रविकांतः सूर्यकांतः भृशं अत्यन्तं अंतरंगः आप्तः २ सदृशः रुचिः कांतिःतरंगः लहरी परंपरापंक्तिः तरलयितुः प्रसारकस्य अशान्तमनः अपराधासहिष्णुः उपांतः समीपभागः परिचरणा सेवा अनुशासितं पालितं यौवराज्यं बाल्यं नियोज्यां दासीम् ॥ १३ ॥

( पद्यम् ) ततो निदेशात्समयेषु लब्धुं मया महायत्नजुषा महर्षेः॥ आरामवल्लीरपहाय तस्य भ्रूवल्लिमेव प्रतिहाय तस्थे॥३८॥

निदेशः आज्ञा समयः पदार्थापेक्षाकालः अपहाय त्यक्त्वा प्रतिहाय प्रतिपाल्य तस्थे स्थितम् ॥ ३८ ॥

यथायथा सेवनयत्नजन्मना निदाघतोयेन निषेक्तमंगकम् ॥
तथातथा वर्द्धततापसांतिके महा विकासा मम भक्तिवल्लरी ॥३९॥

सेवनयत्नजन्मना-सेवाश्रमोद्भवेन निदाघतोयेन घर्मजलेन निषिक्तं सिक्तं अंगकं अल्पंअंगं तापसांतिके दुर्वासऋषिसमीपे २ इंगुदीवृक्षनिकटे भक्तिवल्लरी भक्तिरूपालता ॥ ३९ ॥

तपस्विनस्तस्य तपःकृशस्य सरूपतामाप्तुमिव श्रयद्भिः ॥
दिने दिने मे दयनीयरूपैरंगैरशेषैरतिकार्श्यमापे ॥ ४० ॥

तपस्विनः ऋषेः दुर्वासस्य सरूपतामुक्तिः श्रयद्भिः आश्रयद्भिः दयनीयरूपं द-यावियाकृतिः मेमम अंगं अवयवः अतिकार्श्यं अतीवकृशत्वं आपेप्राप्तम् ॥ ४० ॥

आपादनेन समिधामभिषेकवारामभ्यर्चनाप्तु मनसाम
पि तापसेंद्रः ॥ मय्येव शिष्यजनता ममतां वितन्व-
न्नंतेवसंतमपि कोपमपाचकार ॥ ४१ ॥

आपादनं संपादनं वारां जलानां अभ्यर्चनंपूजा सुमनसः पुष्पं तापसेंद्रः दुर्वासः शिष्यजनताममताशिष्यविषयिणोप्रीतिः वितन्वन् कुर्वन् अंतेवसंतं समीपेस्थितं अ-पाचकार तत्याज ॥ ४१ ॥

एकां समां तत्र वसन् कदाचिदेकांसमां पार्श्वगतामवेक्ष्य ॥
समाधिद्दृत्यासह मौनमुद्रां समापयामास तपोधनेंद्रः ॥ ४२ ॥

समांवर्षं तपोधनेंद्रः दुर्वासः समापयामास विसर्जयामास ॥ ४२ ॥

( गद्यम् ) वत्से भवत्सेवासंप्रदायेन संप्रति भृशं प्रसी-
दामीति व्याहृत्य स मुनिरनुकंपितचेता मह्यमत्यर्थम-
भीप्सितार्थसमर्थापनपरतंत्रं कमपि मंत्रमुपादिक्षत् ॥ १३ ॥

भवत्सेवासंप्रदायः त्वत्सेवारीतिः संप्रति सांप्रतकाले भृशंअतिशयं प्रसीदामि प्रस-न्नोस्मि व्याहृत्य उक्त्वा सः मुनिः अनुकंपितंकृपायुक्तं अभीप्सितार्थः इष्टार्थः स-मर्थापनपरतंत्रंदापनतत्परं उपादिक्षत् उपदिष्टवान् ॥ १३ ॥

( पद्यम् ) अपि क्रुधामावसतेरमुष्मान्मत्वा गुरुत्वं वरमंत्रलाभे ॥
अपुष्पवत्यामपि मे दशायामामोदभारोधिकमाविरासीत् ॥ ४३ ॥

क्रुध्क्रोधः आवसतेः स्थितिस्थानस्य गुरुत्वंदेशिकत्त्वं २ महत्त्वं वरमंत्रः मंत्रश्रेष्ठः अपुष्पवतीदशा बाल्यावस्था ( पुष्पं स्त्रीरजः ) आमोदभारः हर्षातिरेकः २ सुगं-धातिशयः ॥ ४३ ॥

( गद्यम् ) अधुना तस्य प्रभावेण शतमखमुखासु निखि
लासु लेखलेखासु ये ये पराध्यास्ते रहसि ध्यान

मात्रसाध्यसान्निध्याः स्वस्यानुरूपगुणविभवानात्म-
भवान्मयि विकसदनुकंपाः संपादयिष्यंति ॥ १४ ॥

शतमुखमुखाः इंद्रादयः लेखलेखा देवपंक्तिः परार्ध्यः श्रेष्ठः रहसि एकांते अनु-कंपा दया आत्मसंभवान् औरसपुत्रान् ॥ १४ ॥

(पद्यम्) इति नृपाय कृपायतचेतसो यदुसुता मुनिनेतुरनुग्रहम्॥
अदशनव्रणपीडमहस्पतेरभिदधे रतिसंगमनं विना ॥ ४४ ॥

कृपायतंकृपाविकसितं मुनिनेतुः ऋषीणांनायकस्य अनुग्रहं प्रसादं अदशनव्रण-पीडं ( दशनाः दंताः तेषांव्रणानांक्षतानां या पीडा सानास्ति यस्मिन् ) दक्षयज्ञे पूष्णः दंतपातित्वात् नविद्यतेव्रणपीडायस्मिन्तत् अहस्पतिःसूर्यः अभिदधेउवा-च ॥ ४४ ॥

इति वचनमयीं सुधां किरंतीं यदुनृपतेस्तनयांप्रशंसमानः ॥
पतिरनुमनुते स्म पौरवाणां प्रकृतमहोत्सवपारदर्शनाय ॥ ४५ ॥

सुधाअमृतं किरंतींवर्षंतीं यदुनृपतेस्तनयाकुंती पौरवाणांपतिः राजापांडुः अनुम-तेस्म अनुमोदितवान् प्रकृतमहोत्सवः पुत्रोत्पादनमहोत्सवः ॥ ४५ ॥

- तदनंतरम्॥ धर्मात्प्राप युधिष्ठिरं पवनतो भीमं च भीमं द्विपां
जिष्णोर्जिष्णुमतीव धृष्णुमनघा कुंतीमुनेर्विद्यया ॥
अन्या सापि तथैव तत्र नकुलं रूपास्पदं गीष्पते
सच्छात्रं सहदेवमप्यजनयन्नासत्ययोरंतिकात् ॥ ४६ ॥

धर्मात् यमधर्मात् युधिष्ठिरः धर्मराजा पवनः वायुः द्विषांभीमं शत्रूणां भयोत्पा-दकं जिष्णुः इंद्रः जिष्णुः अर्जुनः अतीवधृष्णुः प्रगल्भः अनघानिर्मलाचरणा अ-न्यासामाद्री तत्रतत्स्थले रूपास्पदंलावण्यसंपन्नं सच्छात्रं समानं नासत्ययोः अश्वि-नीकुमारयोः गीष्पतिः बृहस्पतिः अंतिकात्समीपत्वात् ॥ ४६ ॥

तदनु वासवनंदनसंभृताः सपटुगीतिरवप्रमदालयः ॥
सुमनसस्तु यथोचितमाचरन् निपतनं भुवि नृत्तविधिं दिवि ॥४७॥

वासवः इंद्रः नंदनं नंदनवनं नंदनः पुत्रः ( वासवनंदनः जयंतः ) संभृतः संपा-दितः २ पुष्पः सपटुगीतिरवः मधुरगायनशब्दसहितः २ गुंजारवसहितः प्रम-

दालयः कामिनीपंक्तयः २ मत्तभ्रराः सुमनसः देवाः २ पुष्पाणि यथोचितं यथा-योग्यं भुविभूमौ आचरन् अकुर्वन् नृत्तविधिं नृत्यं दिवि आकाशे ॥ ४७ ॥

जन्मोत्सवो महानेषां जलमत्यच्छमावहन् ॥
विद्यामनन्य सामान्यां व्रीडां कुंभभुवोऽनयत् ॥ ४८ ॥

आवहन् कुर्वन् विद्या जलस्वच्छीकरणविद्या अनन्यसामान्या अव्यभिचा-रिणी व्रीडालज्जा कुंभभुवः अगस्त्यमुनेः अनयत् प्रापयामास ( अगस्त्योदये जलं निर्मलं भवतीति पुराणोक्तम् ) ॥ ४८ ॥

स्वस्य चक्रगतिं सख्युः स्वयमप्याश्रिता इव ॥
जवात्प्रदक्षिणज्वाला जज्वलुर्यज्वपावकाः ॥ ४९ ॥

स्वस्य आत्मनः सख्युः मित्रस्य ( वायोः ) चक्रगतिः चक्राकारभ्रमणम् पावकः अग्निः ॥ ४९ ॥

सामोदो भीमसंभूतिसंभूताशौचवत्तया ॥
संकुचन्निव संस्पर्शे समीरो मंदमाववौ ॥ ५० ॥

सामोदः हर्षसहितः २ सुगंधसहितः भीमसंभूतिः संभूता भीमजन्मजाता अशौच-वत्तया जननाशौचवशात्तया संकुचन्निव संकोचं कुर्वन्निव मंदम् स्वल्पम् समीरः वायुः ॥ ५० ॥

कन्यकात्वेऽपि मय्येषा कामुकीति स्मरन्निव ॥
प्रसूतिदिवसं कुन्त्याः प्रादियुतदहस्करः ॥ ५१ ॥

एषा कुंती कामुकी इच्छावती प्रादियुतत् अतिप्रकाशितवान् अहस्करः सूर्यः ५१

पुष्पात्प्रागेव सुषुवे पुत्रमेषेति वीरुधः ॥
फलेग्रहय एवासन् प्रसूनात्प्राक् पृथावने ॥ ५२ ॥

पुष्पम् कुसुमम् २ रजोदर्शनम् वीरुधलता फलेग्रहयः फलधारिण्यः पृथा-वनम् कुन्त्याः निवासारण्यम् ॥ ५२ ॥

( गद्यम् ) तदनु गुणगणैरभंगुरशुभंयुताविकासमये समये ॥ १५ ॥

तदनुतदनंतरम् गुणगणः मंगलवारनक्षत्रादि अभंगुरम् अशाश्वतम् शुभंयुः शुभान्वितम् ॥ १५ ॥

प्रजाधिपोऽसौ प्रथमं युधिष्ठिरे सुतेषु तेजस्विषु तेषु पंचसु ॥
प्रभाकरे पंचतपा इवोन्नते प्रपातयामास विलोचनद्वयम् ॥ ५३ ॥

प्रजाधिपः राजापांडुः तेजस्विन् प्रतापवान् प्रभाकरःसूर्यः पंचतपाः पंचाग्निभिः साध्यम् तपोयस्यसमुनिः प्रपातयामास न्यस्तवान् उन्नतः उच्चः विलोचनद्वयम् चक्षुर्द्वयम् ॥ ५३ ॥

(प०) तपस्विनीनां स्तनपायिनस्ते दरक्वणत्कीचकदत्तकर्णाः ॥
दिने वनांते वसुधेंद्रपुत्रा वल्केषु निद्रासुखमन्वभूवन् ॥ ५४ ॥

तपस्विनी ऋषिपत्नी स्तनपायिनः दुग्धपायिनः दरम् छिद्रं २ ईषत् क्वणत् वायुनाशब्दायमानः कीचकः वेणुः दत्तकर्णाः ( श्रवणार्थं ) अर्पिताः कर्णाः ते दिनांतः सायंकालः वसुधेंद्रपुत्राः पांडुकुमराः वल्कं वल्कलं अन्वभूवन् अनुभूतवंतः ॥५४॥

क्षुत्पीडया स्तनरसे कलहं शिशूनां कुंती तदा शमयितुं
कुचकुंभयुग्मे ॥ एकं युधिष्ठिरधनंजययोश्चभागमेकं
समीरणसुतस्य च संविभेजे ॥ ५५ ॥

स्तनरसम् स्तनदुग्धं शिशूनाम् बालानाम् तदापुत्राणां बाल्यदशायाम् एकम् स्तनम् युधिष्ठिरधनंजयौ धर्मार्जुनौ समीरणसुतः वायुपुत्रः भीमः संविभेजे विभागम् कृतवती ॥ ५५ ॥

निशाचरैः समं बाल्ये नियोद्धुमिव कौतुकी ॥
उत्तानशयने मुष्टिमुदग्रां मारुतिर्दधौ ॥ ५६ ॥

निशाचरः राक्षसः नियोद्धुं बाहुयुद्धम् कर्तुं उदग्राउच्चा मारुतिःभीमः बाल्यम् बालदशा ॥ ५६ ॥

(गद्यम् ) ततःक्रमेण गतेषु कतिपयेषु वासरेषु ॥

पयः दुग्धम् वासराः दिवसाः ॥

(पद्यम् ) पद्भिरात्मपितृयोषिति भूमौ स्पर्शनं परिहरंत इवैते ॥
जानुभिः करसरोजसहायैश्चंक्रमं चमदकुर्वत बालाः ॥ ५७ ॥

पद्भिःस्पर्शनं चरणैःस्पर्शनं आत्मपितृयोषिति आत्मजनकस्य भार्यायां परिहरंतइव वर्जयन्तइव करसरोजसहायैः हस्तकमलयुक्तैः चंक्रमंगमनं चमत्सुन्दरं बालाः कुन्तीपुत्राः ॥ ५७ ॥

आदाय भीममतिमांसलमुत्तमांगेप्याघ्राय जानुकृतचं-
क्रममाश्रमांते ॥ बाहालतैव वहनाद्विरराम शश्वत् कौतू-
हलं न तु कदाचन तापसीनाम् ॥ ५८ ॥

अतिमांसलं अतिपुष्टं उत्तमांगं मस्तकं बाहालता भुजलता चंक्रमंगमनं आ-श्रमांते आश्रमसमीपे कौतूहलं कौतुकं तापसी ऋषिपत्नी ॥ ५८ ॥

वृद्धतापसपुरःप्रसारितं वेणुदंडमवलंब्य शैशवे ॥
भावयन्निव गदापरिग्रहं भाविनं पवनभूश्चचार सः ॥ ५९ ॥

तापसपुरः मुनिरग्रभागे अवलंब्यगृहीत्वा शैशवं बाल्यं भावयन्निव सूचयन्निव गदापरिग्रहं गदाग्रहणं पवनभूःभीमः चचार ( इतस्ततः ) जगाम ॥ ५९ ॥

मुनिसुतैरविशेषजुषो वने मुहुरमीनवशैशवकेलिषु ॥
मलिनतामनयंत कलेवरं मदकलाः कलभा इव धूलीभिः॥६०॥

अविशेषजुषः समानवर्तिनः अमी पाण्डुकुमाराः नवशैशवकेलिषु नूतनबाल्यसं-बंधिक्रीडासु मदकलाः मदेनसुन्दराः कलभाः हस्तिशावकाः मलिनतां मालिन्यम् ६०

तत्र तत्र मृदुपांसुषु पांडोः पुत्रपादतलविन्यसनेन ॥
छत्रकेतुकुलिशैः स्फुटरेखैश्चित्रवत्यभवदाश्रयभूमिः ॥ ६१ ॥

तत्र तत्स्थले पांसुः धूलिः पादतलविन्यसनेन पादतलहेतुना केतुः ध्वजः कु-लिशंवज्रं स्फुटः आकृतिसूचकः चित्रवती चित्रयुक्ता ॥ ६१ ॥

लीलास्मितैः सृक्वियुगाद्गलद्भिर्लालाजलानां ललितैः पृषद्भिः ॥
बाला वधुस्ते हृदि मौक्तिकानां माला धुतोल्लेखनरंध्रसूत्राः ॥६२॥

लीलास्मितं लीलायुक्तं मंदहास्यं सृक्वियुगात् ओष्ठप्रांतात् गलद्भिः पतद्भिः पृषद्भिः बिंदुभिः हृदिवक्षस्थले धुतंरहितं उल्लेखनं उत्तेजनं रंध्रसूत्रंच यासांताः धुतोल्लेखन-रंध्रसूत्राः ॥ ६२ ॥

अत्यंतबाल्यादमृतायिताभिरन्योन्यमर्धोक्तिभिराह्वयत्सु ॥
स भीमसेनोऽजनि पांडुसूनुष्वर्धोक्तनामापि च पूर्णनामा ॥ ६३ ॥

अमृतायिताभिः अमृतवदाचरन्तीभिः अन्योन्यं परस्परं आह्वयत्सु आह्वानं कु-र्वत्सु भीमसेनार्धोक्तनामापि भीमइत्युक्तेपि ॥ ६३ ॥

(गद्यम्) तदानीमयमंबालिकासूनुरविलंबितं संक्रंदन इव
पंचनंदनागमसंपदा तया मुदममितां बभार ॥ १६ ॥

अंबालिकासूनुः राजापांडुः अविलंबितं द्रुतं संक्रंदनः इंद्रः पंचनंदनागमसम्पदा पंचपुत्रप्राप्तिरूपयासम्पदा २ (इंद्रस्य) नंदनवनवृक्षाणां ऐश्वर्येण अमिदं बहुलं बभारदधे ॥ १६ ॥

(पद्यम्) पुत्रेषु तेषु क्रमपोषितेषु विलोकयंत्या विहरत्सु कुंत्याः॥
आप्याययामासतुरंतरंगं प्राप्यापि माद्रीतनयौ यमत्वम् ॥ ६४ ॥

क्रमपोषितः क्रमेणपोषितः विहरत्सु क्रीडां कुर्वत्सु आप्याययामासतुः तुष्टिं निन्यतुः अंतरंगंमनः माद्रीतनयौनकुलसहदेवौ यमत्वं अन्तकत्वं २ युगत्वम् ॥ ६४ ॥

तैरादराद्दनलतासु दृढीकृतासु दोलाविधेः परिचितस्य
महर्षिपुत्रैः ॥ पर्यायलब्धमसकृत् पवमानसूनोरा-
रोहणं द्रुतमभूदवसानभूमिः ॥ ६५ ॥

तैः युधिष्ठिरादिभिः दोलाविधिः आंदोलनकर्म परिचितः अभ्यस्तः असकृत् वारंवारं पवमानसूनुः भीमः द्रुतं शीघ्रं अवसानभूमिरभूत् समाप्तिरभूदित्यर्थः॥६५॥

भीमेन दंतयुगुले विधृतं यमन्ये वन्येभमारुरुहुरद्रि-
निभं सगर्भ्याः ॥ शुंडां प्रगृह्य विजयः स्वयमेव मा-
नी तं लीलया रदपथेन समारुरोह ॥ ६६ ॥

युगलं युग्मे अन्ये धर्मादयः वन्येभः वनहस्ती अद्रिनिभं पर्वततुल्यं सगर्भ्यः भ्रातुः प्रगृह्यधत्वा विजयः अर्जुनः रदपथं दंतमार्गः ॥ ६६ ॥

(गद्यम्) तदनु विधिवदुपनतानां क्रमेण मधुरेण
शिरसा वयसा च विधृतवपुषां विनयगौरवपुषां सकलासु
कलासु कौशलमुन्मीलयतां तेषां यशांसि बलभेदन-
मदावलस्य धाम्नोर्युगलमपि युगपदुल्लंघयामासुः ॥ १७ ॥

विधिः शास्त्रं उपनीतं कृतोपनयनं वयः तारुण्यं विधृतं स्वीकृतं गौरवं आधिक्यं उन्मीलयतां प्रकटयतां बलभेदनमदावलः इंद्रगजः (ऐरावतः) धाम्नोः स्थानतेजसोः युगपल्लंघयामासुः उपरिगतानि ॥ १७ ॥

(पद्यम्) नवतरुणिमलक्ष्मीनंदनीयं शरीरं कुरुवृषभसु-
तानां कुर्वती नेत्रपात्रम् ॥ मुनिततिरिति मेने मोहनाय
त्रिलोक्याः स्वविशिख इव कामः सोऽपि किं पंचधाभूत्॥६७॥

तरुणिम्नः तारुण्यस्य नंदनीयंश्लाघनीयं कुरुवृषभः कुरुश्रेष्ठः पात्रंविषयं मेनेमनुतेस्म विशिखः बाणः पंचधाभूत् पंचस्वरूपो जातः ॥ ६७ ॥

( गद्यम् ) अथ कदाचिदखिलहरिदंतरनिरंतरवलमानमलयपवमानकंपितचंपकसंपादितसौरभसंपदनुकंपितनिखिलनिर्लिपपथाः केसरकुसुमकेसरशिखरभासुरधूलिधूसरदिशोमनसिजविजयसहकारचतुरसहकारपल्लवतल्लजपरिचर्वणगर्वायमाणकलकंठयुवकंठोक्तपथिकजनसंदोहजीवितसंदेहाःवनदेवतावदनतिलकायमानतिलकावल्लीकलिकापलितंभावुकनभोविभागा मदनहुत भुगंगारसदृशकमलभृंगारमधुरससंगाररचितमदभृंगारवविभवतुंगा अरहितमिथुनशृंगाररसाः समुन्मिषद्वासंतिकामिषेण सीमंतिनीरतेरुदंतं दुरतं मनसिविचिंत्य रहसि वसंतं नृपं तमिव हसंतोवसंतोदयवासरा मंदमंदमरण्यांगणधरण्यां कमपि विकासमापादयामासुः ॥ १८ ॥

हरिदंतरंदिङ्मध्यभागः वलमानेनगंत्रा सौरभसंपत् सुगंधश्रीः अनुकंपितः युक्तः निर्लिपपथः देवमार्गः केसरकुसुमं बकुलपुष्पं केसरशिखरं केसराग्रभागः भाः कांतिः धूसरः ईषत्पांडुः मनसिजः मदनः सहकारः साह्यकरणं सहकारः आम्रवृक्षः पल्लवतल्लजः प्रशस्तपल्लवः परिचर्वणंभक्षणं कलकंठः कोकिला कंठोक्तः ( कंठात् उक्तः ) स्पष्टमुक्तः संदोहः संघः संदेहः शंका तिलकायमाना तिलकवदाचरंती पलितंभावुकः शुभ्रीभवन् मदनहुतभुक् मदनाग्निः भृंगारः हिमुखंपानपात्रं मधुरसः मकरंदः २ मद्यरसः आरचितः कृतः आरवविभवं शब्दैश्वर्यं तुंगः अधिकः अरहितः युक्तः मिथुनानां स्त्रीपुरुषाणां समुन्मिषत् विकसत् वासंतिका पुष्पलता उदंतः वृत्तांतः दुरंतः दुष्टपरिणामः रहसि एकांतस्थाने वासरः दिवसः मंदमदंअतिमंदं धरण्यांक अतिसुंदरं विकासं वैभवं आपादयामासुः संपादितवंतः ॥ १८ ॥

किं शुकस्य वदने रुचिरत्वं किं शुकस्य हृदयेऽपि वशित्वम् ॥
किंशुकस्य कुसुमेषु नंदती शंसतिस्म मधुपालिरितीव ॥ ६८ ॥

किंशुकः पलाशवृक्षः शुकः कीरः २ शुकमुनिः किंनकिंनपि वशित्वं इंद्रियनिग्रहत्वं नंदतीनादंकुर्वती मधुपालिः भ्रमरपंक्तिः ॥ ६८ ॥

कुरबकेरवकेलिभृतः सुधासमधुरं मधुरं मधुपट्पदाः ॥
पपुरवापुरवार्यमपि स्मयं नृपवने पवनेरितपादपे ॥ ६९ ॥

कुरबकः वृक्षविशेषः रवकेळिं शब्दक्रीडां सुधाअमृतं धूःभारः मधुमकरंदः मयं स्मयः मदः पवनेरितपादपः वायुकंपितवृक्षः षट्पदः भ्रमरः ॥ ६९ ॥

( गद्यम् ) अथास्मिन्नमुना तपोवनकुटीरपरिसरे पटीरगिरिबंधुना गंधवहस्तनंधयेन सन्निधिं नीयमानो मद्रजः परिग्रहस्तपस्यंतमपि मनस्यंतः कं परितापसंपदा निर्लिपेदित्यर्थांतरमप्यलिगिरा बोधयंत्यामिव वासंत्यामियं क्षणादेव क्षितिपतिरिक्षुधन्वनो लक्ष्यतामध्यरुक्षत् ॥ १९ ॥

तपोवनकुटीरः तपोवनपर्णशालापरिसरः आसमंताद्भागः पटीरगिरिबंधुः मलयगिरिसंबधि गंधवहः वायुः स्तनंधयः बालः (गंधवहस्तनंधयः मंदवायुः ) रजः परागः परिग्रहः परिजनः मद्रजपरिग्रहः पत्नी मद्रराजकन्यामाद्री वासंतीमाधवीलता अर्थांतरमपि उक्तवाक्यमपि अलिगिरा भ्रमरनादेन क्षितिपतिः राजा इक्षुधन्वामदनः लक्ष्यं शरव्यं अध्यरुक्षत् आरोहणं कृतवान् ( इक्षुधन्वनोलक्ष्यतामध्यरुक्षत् मदनवशोजातः ) ॥ १९ ॥

( पद्यम् ) परित्हृत्य तनुं चित्ते बाणं कामो मुमोचयत् ॥
अंतरेवातिरक्तोभूद्व्रणस्तद्बहिर्नृपः ॥ ७० ॥

परिहृत्यवर्जयित्वा अंतरेवचित्तेएव अतिरक्तः अनुरक्तः २ रक्तवर्णः बहिः बहिर्भाग ॥ ७० ॥

कं केलिदेशमुपयाम्यधुनेति तावत् कंकेलिसंवलनकल्पितचित्रशोभम् ॥ माद्र्या करेणुरिव साकमसौ करेण्वा गूढं ययौ कुरबकद्रुलतानि कुंजम् ॥ ७१ ॥

केलिदेशः क्रीडास्थलं उपयामिगच्छामि कंकेलिसंवलनंअशोकवृक्षवेष्टनं कल्पितचित्रं अद्भुतं करेणुरिव हस्तीव करेणुहस्तिनी ॥ ७१ ॥

शापं च मृत्युप्रदमग्रजातेस्तापं च पत्युः स्मरजं निरीक्ष्य ॥
दूरेनरस्मिन्सुरतेऽपि देव्या दोलायमानं त्हृदयं तदासीत् ॥ ७२ ॥

अग्रजातिः ब्राह्मणः स्मरजतापं मदनजनितंदुःखं निरीक्ष्य विचार्य अस्मिन् पांडौ हृदयंचित्तं देवी माद्री ॥ ७२ ॥

चाटुप्रयोगे चतुरः स पांडुः प्रसूनतल्पे प्रविवेशितायाः ॥
क्षौमं बिभेद स्मरराजधान्याः क्षौमं करांभोजदलेन तस्याः ॥७३॥

चाटुः प्रयोगः प्रियवचनं प्रसूनतल्पं पुष्पशय्या प्रविवेशिता नीता क्षौमंप्राकारं राजधानी वरांगं क्षौमं सूक्ष्मवस्त्रं करांभोजदलेन हस्तकमलपत्रेण ॥ ७३ ॥

(गद्यम्) तत्र तौ राजदंपती मुनीशापबलपरिचिचीषयेव मुहुर-भंगुरालिंगनमंगलतरंगितकुचकुंभसंभृतघर्मजलनिर्मितमदनयौवराज्याभिषेकमधरितमधुरसमधुरिमाधरबिंबचुंबनाडंबरविडंबितांबरचरकुटुंबिजीवनमतिजवपंफुल्यमानधम्मिल्लविगलदविरलबकुलमुकुलपुनरुक्तपुष्पतल्पमविगणितवीणागुणक्वणितभणितमसृणितमतिचिरमुषितमसमशरसमरमुन्मीलयामासतुः ॥२०॥

परिचिचीषया परीक्षितुमिच्छया मुहुः वारंवारं अभंगुरं दृढं तरंगितौप्रवृद्धौ संभृतं संपादितं मधुरिमामाधुर्यं आडंबरेणविडंबितं व्यापारेणउपहसितं अंबरचरकुटुंबिजीवनं देवानांअमृतं पंफुल्यमानधम्मिलाः विस्रंसितबद्धकेशाः पुनरुक्तं पुष्टं तल्पंशय्या क्वणितंनादः भणितं रतिकूजितं मसृणितं व्याप्तं मुषितं रहितं असमशरः मदनः उन्मीलयामासतुः प्रवर्तयामासतुः ॥ २० ॥

(पद्यम्) आयुषः संततिं दीर्घामावहन्नपि पौरवः ॥
आयुषः संततेरंतमारुरोह रतेरिव ॥ ७४ ॥

आयुः आयुष्यं २ राजाआयुः संततिः परंपरा पौरवः राजापांडुः ॥ ७४ ॥

नृपस्य दूरीकृतपाशसंगमं यमं विहायैकमुपेयुषो वधूम् ॥
अजस्रमूरीकृतपाशसंगमो यमो परः सन्निदधे लतागृहे ॥७५॥

पाशसंगमः भवपाशसंयोगः यमं योगं २ अहिंसादिरूपं विहायत्यक्त्वा उपेयुषः संगच्छमानः ऊरीकृतं स्वीकृतं पाशसंगमः पाशधारी यमोऽपरः अपरोयमः कृतांतः सन्निदधेसमीपस्थोबभूव ॥ ७५ ॥

आलिंगनेन कुरवो हरिणेक्षणानामामोदगौरवभृतो भु-

वि सर्व एव ॥ तन्मध्यभागपि तदा स कथं नु पांडुरा-
लिंग्य मद्रतनयामवधिं प्रपेदे ॥ ७६ ॥

कुरवः कुरवकवृक्षः हरिणेक्षणानांस्त्रीणां आमोदः सुगंधः २ हर्षः गौरवभूतः आधिक्यपूर्णः सः पांडुः अवधिः अंतः ॥ ७६ ॥

निद्रया किल निमीलितं मृतेर्मुद्रया निजमुदीक्ष्य वल्लभम् ॥
उद्रवा करमुदस्य विह्वला मद्रराजतनया रुरोद सा ॥ ७७ ॥

किलसत्यं निमीलितं निश्चेष्टं मृतेर्मुद्रा मरणचिह्नं वल्लभः पतिः उद्रवं उच्चस्वरं उदस्य उत्क्षिप्य ॥ ७७ ॥

तन्निशम्य समवेत्य कुमारैस्तादृशं पतिमवेक्ष्य रुदंत्याः ॥
भोजपुंगवभुजोऽश्रुविपातैर्भूरपिस्वयममुंचत बाष्पम् ॥ ७८ ॥

ततः रोदनं निशम्यश्रुत्वा तादृशं मरणमुद्रायुक्तं भोजपुंगवभूः कुंती अमुंचत् मुमोच बाष्पं अश्रुऊष्माणम् ॥ ७८ ॥

माद्र्या ततोऽनुमृतया सह तस्य राज्ञो निर्वर्तितासु तनयै-
र्निखिलक्रियासु ॥ भुयोऽपि तौ समनसां पुरतः प्रकाशं
जायापती तु सुरतोत्सवमन्वभूताम् ॥ ७९ ॥

अनुमृता गमनविधिनापश्चान्मृता निर्वर्तितासु कृतासु क्रिया और्ध्वदेहिककर्म सुमनसांपुरतः देवानां अग्रभागे ( अमरावत्यां ) जायापती माद्रीपांडूश्च सुरतोत्सवः देवत्वेनआनंदः २ सुरतोपभोगेन आनंदः अन्वभूतां अनुभूतवन्तौ ॥ ७९ ॥

( गद्यम् ) तदनु नव्यवैधव्यबहुविधव्यथायाः पृथायाः पुरतो नि-
र्मर्यादपितृशोकविदीर्यमाणधैर्यसोदर्यजनपरिवार्यमाणाय हृ-
दि विदितनिखिलधर्मजातायधर्मजाताय महत्यामपि विपत्यां
वैयात्येन भवितव्यमिति राजनियमांकुशं प्रकाश्य काश्यपादयो
दयोपेताः शतशृंगमुनिपुंगवास्तुंगमणिसौधशृंगसंकुलं कुलक्रमा-
गतं कुरुनगरमेतानवतारयामासुः ॥ २१ ॥

सोदर्यजनैः बंधुभिः हृदिमनसि धर्मजातं धर्मसमूहः धर्मजातः धर्मपुत्रः वैयात्यं धार्ष्ट्यं नियमांकुशं नियमनकर्तारं दयोपेतः क्षमाशीलः तुंगं उन्नतं शृंगसंकुलं शि-

स्वरऽपातं कुलक्रमागतं पुत्रपौत्रादिक्रमेणप्राप्तं कुरुनगरं हस्तिनापुरं अवतारयामासुः प्रवेशयामासुः ॥ २१ ॥

(पद्यम्) मंदं मंदमुपेत्य तत्र सदयो मत्पांडुपुत्रांकुराः क्वेति प्रेमपुरःप्रसारितकरः कुर्वन्दृढालिंगनम् ॥ स्पर्शं स्पर्शमिमान्निजांकगमितान् भ्रातुः स्मरन् कौरवश्चोतद्भिर्नयनांबुभिः सविदधे लोकं नदीमातृकम् ॥ ८० ॥

क्वेति क्वसंति स्पर्शंस्पर्शंस्पृष्ट्वास्पृष्ट्वा निजांकगमितान् स्वसमीपभागंप्रापितान् सदयः कौरवः धृतराष्ट्रः इमान् धर्मादिपांडवान् चोतद्भिः गलद्भिः विदधेचकार नदीमातृकंवृष्टिंविनानदीजलसंपन्नम् ॥ ८० ॥

पांडवेषु दृढतापरिणाहप्रायरूपबलसंपदियत्ताम् ॥
स्पर्शनं विदधतैव दृशांधः पाणिना परिममौ धृतराष्ट्रः ॥ ८१ ॥

परिणाहः विशालता इयत्तां एतावत्त्वं विदधता कुर्वता दृशांधः धृतराष्ट्रः परिममौ ज्ञातवान् ॥ ८१ ॥

दत्वा तत्तत्प्रत्यहं यद्यदिष्टं यावत्स्वेषामात्मजानां शतेऽपि ॥
पांडोः पुत्रेष्वंबिकासूनुरेतेष्वेकैकस्मिन्प्रेम तावद्बबंध ॥ ८२ ॥

अंबिकासूनुः धृतराष्ट्रः स्वेषामात्मजानां स्वकीयपुत्राणां बबंधदधार ॥ ८२ ॥

(ग०) एवं वत्सभावेऽपि भक्तिमत्सु तेषु निजपितृवत्सलतामसकृत्समीक्ष्य मत्सरेण दुर्मनायमानो हृदयालवालेसुयोधनो राधेयप्रधानदुर्बोधमेधोत्सेधसविधधरणीरुहमधिरूढामकुतोरोधां विरोधविषवीरुधमेधांचक्रे ॥ २२ ॥

वत्सभावेपिबाल्येपि वत्सलताप्रेम असकृत्वारंवारं हृदयालवालं हृदयरूपवृक्षमूलजलाधारः राधेयप्रधानाः कर्णप्रमुखाः सविधधरणीरुहः समीपवृक्षः उत्सेधः उन्नतः विरोधविषवीरुध् द्वेषरूपाविषवल्ली एधांचक्रेवर्धयामास ॥ २२ ॥

(पद्यम्) तीव्रोदयानविनयान् दधतां क्रमेण दुर्योधनाद्यसुहृदां दुरहंकृतीनाम् ॥ पट्टाभिषेकमभिलष्यति कालभागे कुट्टाकभावकुतुकं कुरुतेस्म भीमः ॥ ८३ ॥

अविनयः अन्यायः दधतां कुर्वतां असुहृत्शत्रुः दुरहंकृतिः दुरभिमानः अभिल-ष्यति इच्छति कालभागः ललाटावयवः कुट्टाकभावं कुतुकं ताडनरूपकौतुकम्॥८३॥

पंचधा प्रवहंतीनां पवनात्मज एव सः ॥
कौरवक्रोधसिंधूनां क्रमात्संगमभूरभूत् ॥ ८४ ॥

पंचधा पंचस्वरूपैः पवनात्मजः भीमः ( भीमएवसंगमभूरभूत् भीमएवतत्क्रोध-विषयोजातः इतिभावः ) ॥ ८४ ॥

इत्यनन्तभटकृतभारतचंप्वाम्
प्रथमस्तवकः समाप्तः ॥

---

द्वितीयस्तवकः ।

( गद्यम् ) एकदातुतेसर्वेंपिसुपर्वसरितः सलिलेषुचिरंविहृत्यसमुत्तीर्णा वीचीभिरनीचीभिरुत्कूलितफेनकूटेष्विवपटगृहवाटीषुपरिगृहीतमनोहरांबरपटीरहाराभ्यवहाराः कुमाराः कुशलकुशीलवबालककुलशीलितविचित्रवादित्रकलशीरवविवशीकृतमनसः सुखमासामासुः ॥ १ ॥

सुपर्वसरित् भागीरथी विहृत्यक्रीडित्वा समुत्तीर्णाःबहिर्निर्गताः वीचिःलहरी अनीचःमहान् उत्कूलितंऊर्ध्वकूलंप्रापितंकूटःराशिः पटगृहवाटीपटमण्डलसमूहः परिगृहीतः स्वीकृतःअंबरंवस्त्रं पटीरःचंदनःअभ्यवहारःभोजनं कुशीलवबालककुलशीलितंगायकसमुदायेनवादितंकलशीवाद्यविशेषं विवशीकृतमनःस्वायत्तीकृतमनाः आसामासुः निषेदुः ॥ १ ॥

( पद्यम् ) रहसिनलिनतल्पेरत्नपर्यंककल्पेदिनविरतिसमीरैःसेव्यमानःसभीमः ॥ तटभुविकुसुमानांतादृशैर्गंधपूरैरधिकमलसतायाहानिदद्रौनिदद्रौ ॥ १ ॥

रहसिएकांतस्थले नलिनतल्पंकमलशय्या पर्यंककल्पंपर्यंकसदृशंदिनविरतिसमीरः सायंकालसंबंधिवायुः तादृशंगन्धपूरःअनुपमगंधसमूहः अलसतानिद्रालस्यं हानिद्रुः श्रमहानिकरवृक्षः ॥ १ ॥

(गद्यम्) अथनिशीथेतथाभूतस्यतस्यजिघांसयाकुरुनरेंद्रनंदने-नचोदितैर्नरेन्द्रैरुपेत्ययुगपदेवझटितिनिभृतंसमुद्घाटितेषुनियंत्रण पेटकेषु ॥ २ ॥

निशीथःमध्यरात्रं तस्यभीमस्यजिघांसाहंतुमिच्छाकुरुनरेंद्रनन्दनचोदितः दुर्योधन-प्रेरितः नरेंद्रःविषवैद्यःनिभृतंगुप्तंनियंत्रणंसर्पकारागृहभूतम् ॥ २ ॥

(पद्यम्) सुतेपितृस्वादिमसंप्रदायशुशुत्सयेवश्वसनाशनेंद्राः॥ समीरसूनुंसमुपेत्यजिह्वाबहिःप्रसारान्बहुशोवितेनुः ॥ २ ॥ सुप्तस्यतस्यतुसुयोधनभृत्यमुक्तावाताशनाश्वसकलावनदेवताश्च ॥ आशीर्द्वयंवपुषिचायुषिचप्रतेनुःपूर्वानतत्रचरमैवपुपोषवीर्यम् ॥ ॥ ३ ॥ मर्मदत्तदशनाभुजंगमामारुतेर्वपुषिसुप्तभूरुहः॥ मुष्टिमेयतनवोविरेजिरेमूलिकाइवबहिर्विनिर्गताः ॥ ४ ॥

पिताभीमपितावायुः स्वादिमसंप्रदायःस्वादुत्वरीतिः शुशुत्साशोधनेच्छा श्वसनाशानःसर्पःसमीरसूनुःभीमः वितेनुःचक्रुःबहुशःजिव्हाबहिःप्रसारान्वितेनुः चंचलजिह्वाभिःपस्पृशुः ॥ २ ॥ भृत्यःपरिचारकःमुक्तःबहिर्निष्कासितः वाताशनःसर्पः वपुःशरीरं आशीःआशीर्वचनं २ सर्पदंष्ट्रा प्रतेनुःप्रयुपुजुः ( पूर्वाआशीःनपुपोषसर्पदंष्ट्रादंशेननमृतः चरमैवआशीःर्वीर्यंपुपोषवनदेवता-( वीर्यं )-शीर्वचनेनभीमस्यायुर्वृद्धिर्जाता ) ॥ ३ ॥ मर्मदत्तदशनः मर्मस्थानेकृतदंशः मारुतिःभीमःसुप्तभूरुहःनिद्रास्थानसंनिधवृक्षस्य मुष्टिमेयः परिमातुंयोग्यः विरेजिरेशुशुभिरेमूलिकाअल्पमूलं बहिर्विनिर्गतः बहिःप्रकटीभूतः ॥ ४ ॥

(गद्यम्) अपरेद्युरपिपुनराजीवंतंनिद्रारुणनयनराजीवंतं समुग्धधीः स्निग्धइवजग्धिकेलिकायामारालिककरदापितकवलनिचोलितकरालगरलविह्वलंप्रह्वलंबिशिरसंरज्जुभिः परिणाह्यपरिणाहिनीभिरत्युद्दंदांद्दुदिशूलंशूलकीलितेनिर्जरसरिदंतर्जलेविसर्जयामास ॥ ३ ॥

अपरेद्युःतदुत्तरदिनेपुनराजीवंपुनःसजीवंनिद्रारुणनयनराजीवंनिद्रयारक्तवर्णनेत्रकमलंतं[illegible]मुग्धधीःसःदुष्टबुद्धिःदुर्योधनःजग्धिकेलिकाभक्षभोजनक्रिया आरालिकःबल्ल

यः कवलनिघोलितंमोदकाच्छादितं करालगरलविव्हलं भयंकरविषेणव्याकुलं मव्हलंवि अधोलंवि परिणाह्यव्यवस्थापरिणाहिनीदीर्घाअसुहृत्शत्रुः निर्जरसरिदंतर्जलेभागीर थीजलमध्ये ॥ ३ ॥

( पद्यम् ) तेषांतदानींधृतराष्ट्रजानांनीरेचनीरेदिविषत्तटिन्याः ॥
मरुत्सुतंमारयितुंप्रवीरंसारागुणाःसाधनतामवापुः ॥ ५ ॥

धृतराष्ट्रजानांदुर्योधनादीनां नीरंउदकं दिविषत्तटिनीभागीरथीमरुत्सुतःभीमः मारयितुंहंतुं २ मदनतुल्यंकर्तु सारागुणाःमहादोषाः २ दृढरज्जवः ( गुणाःविषदाःसूदाः) साधनतांसहायम् ॥ ५ ॥

( गद्यम् ) पातालभुवितदागमनकौतुकिनावासुकिनासंमानितःस धृतिमानितस्ततोष्टासुदिशासुतदनुगुणपरिगणनदिनगणात्ययशं किभिरितरैरपत्यैःसहविचित्यवत्सरिपुभर्त्सनभीमक्वानिषीदसी- तिविषीदंत्याःकुंत्यानवममपिवासरमनवममेवसंजनयन्प्रभंजनभू रमृतांजनैरिवदृशौरंजयामास ॥ ४ ॥ आगतस्यतस्यमदावला- युतवलावहानांपृदाकुपरिषदुपदापितदशकलशपीयूषाणांपाना- द्विशेषपरिपोषगात्रंसवित्रीभुजांतरइवकौरवव्हृदयेपिमोदविषाद संपदौनममतुः ॥ ५ ॥

गमनकौतुकंगमनाश्चर्यं वासुकिःनागराजा इतस्ततःतस्मिन्स्थलेअनुगुणपरिगणनं अनुरूपसंख्या अत्ययशंकिभिःअतिक्रमेणशंकितैःविचित्यअन्वेषणंकृत्वाहेरिपुभर्त्सन रिपुपराजयकारिन् क्वानिषीदसिकुत्रनिषण्णोसि विषीदंतीखेदंकुर्वतीअनवमंउत्तमंवा सरःदिनंप्रभंजनभूःभीमः ॥ ४ ॥ — मदावलायुतवलावहानांदशसहस्रगजानांवल समर्पकाणां पृदाकुपरिषत्नागसभा पानाद्विशेषपरिपोषगात्रं प्राशनात्पूर्वस्मादतिश यितंपुष्टंशरीरं सवित्रीभुजांतरेमातुर्भुजमध्यभागे ॥ ५ ॥

तदनंतरं ( पद्यम्) काष्ठांपरांकार्मुककौशलस्यकाष्ठाःपरास्तानपि तद्यशोपि॥प्रज्ञादृगारोपयितुंप्रवृत्तोव्यज्ञापयद्विष्णुपदीतनूजम्॥६॥

परांकाष्ठांपरमावधिं कार्मुककौशलंधनुर्विद्यापटुत्वं काष्ठाःदिशःप्रज्ञादृकधृतराष्ट्रः आरोपयितुंनेतुंव्यज्ञापयत्विज्ञापितवान् विष्णुपदीतनूजःगंगापुत्रःभीष्मः ॥ ६ ॥

( गद्यम् ) सोऽपिकृत्यविदामग्रणीरपरेणेवशरजन्मनाकृपेणबहुरू पेणनिरवद्यवीरयशोनिषद्यांचापविद्यामापाद्यापितांपुनरुक्तयितुं दिशिदिशिजैत्रगुणंपौत्रगणंमहताधननिवहेनसहविविधधनुरागम प्राणस्यद्रोणस्यचरणयोरुपहारीचकार ॥ ६ ॥

कृत्यविदाग्रणीः कार्यविदांश्रेष्ठः शरजन्माकार्तिकेयःकृपःकृपाचार्यः निरवद्यः निर्दोषः निषद्याआपणरूपाआपाद्यसंपाद्य पुनरुक्तयितुंअधिकंकर्तुं जैत्रगुणः जयनशीलगुणः पौत्रगणःधर्मदुर्योधनादिभीष्मस्यपौत्रसमूहः धनुरागमःधनुर्वेदः चरणयोरुपहारीचकारनिकटेस्थापितवान् ॥ ६ ॥

(पद्यम्)सिंधुजातकलशीभुवोस्तयोःस्नेहभारमवलोक्यतादृशम्॥ तत्रपौरनिकरःसमाचरच्चित्रपूरजठरेनिमज्जनम् ॥ ७ ॥ कुमारास्तूर्णमारुक्षन्कुंभयोनेरनुग्रहात् ॥ कोटिंकोदंडसारस्यगुणिनस्तेगुणाइव ॥ ८ ॥ कूलस्थस्यानुकुर्वन्कुरुसुतसदसःकुंभयोनेः कदाचित्स्नातुंमध्येजलानांचिरकृतवसतेःसिंधुभूवर्धमानः ॥ आदौपादौनिपीड्यस्फुटकमलरुचौबिभ्रदंतेवसत्वंग्राहोजग्राहक श्चित्स्वयमपिविजयास्त्रागमांतंमहांतम् ॥ ९ ॥

सिंधुजातःभीष्मः २ समुद्रसमूहः कलशीभूवःद्रोणः २ अगस्त्यःतादृशस्नेहभारः लोकविलक्षणस्नेहातिशयः पौरनिकरःपुरजनसमूहः समाचरत्अकरोत् चित्रपूरजठरे आश्चर्यपूरमध्यभागेनिमज्जनंस्नानम् ॥ ७ ॥—तूर्णंशीघ्रं आरुक्षन् आरोहणंकृतवंतः कुंभयोनिःद्रोणाचार्यःअनुग्रहः शिक्षणप्रसादः कोटिःअग्रः २ उत्कर्षःकोदंडसारस्य धनुःश्रेष्ठस्य ॥ ८ ॥ — कूलस्थःगंगातीरस्थःसदःसमूहः कुंभयोनिःद्रोणाचार्यः सिंधुभूःभीष्मः २ नदीप्रदेशः निपीड्यवंदित्वा २ निपीडयित्वा कमलरुक्कमलकांतिः अंतेवसत्वंशिष्यत्वं २ समीपवर्तित्वं ग्राहःनक्रः विजयास्त्रागमांतंविजययुक्तास्त्राणां आगमःशास्त्रं तस्य अंतंपारं २ अर्जुनास्त्रस्यआगमेनप्राप्त्याअतं नाशंजग्राहस्वीचकार ॥ ९ ॥

( गद्यम् ) ततस्तेसर्वोत्तराअपिशरासेषुदक्षिणागुरुदक्षिणांकुरुत मह्यंद्रुह्यतोद्रुपदस्ययुधिबलाद्गृहीतस्यसमर्पणमितिगुरुणाचो-

दिताः सर्वेऽप्यहंपूर्विकया विमतेषु कृतावज्ञसेनं याज्ञसेनपुरं निरुध्यचिरमयुध्यंत ॥ ८ ॥

उत्तराःउदग्देशस्थाः २ श्रेष्ठाः दक्षिणाःदक्षिणदेशस्थाःकुशलाःद्रुह्यतःद्रोहंकुर्वतः गुरुणाचोदिताःद्रोणाचार्येणप्रेरिताः अहंपूर्विकयाविमतेषुकृतावज्ञसेनंअहंपूर्वमहंपूर्वमि तिगर्वोक्तिनाकृतावज्ञायस्याःसासेनायस्मिन्तत् याज्ञसेनपुरंद्रुपदराज्ञःपुरंपांचालनगरीं निरुध्यवेष्टित्वा ॥ ८ ॥

(पद्यम्) कृत्तेभल्लैर्धनुषिसगुरुद्रोहिणस्तस्यजीवग्राहेबाहांचलपरिचलत्खड्गवल्लीसहायः॥पुत्रावल्यांसुबलदुहितुःपूर्वपक्षीभवंत्यां सिद्धांतोभूद्दिविभुविबुधैःश्लाघितःसव्यसाची॥१०॥पार्थमेवपुरतोनिधायतेपौरवास्तदनुसन्निधौगुरोः ॥ भक्तिभिर्व्यनमयन्निजं शिरःपार्थतस्तुपरिभूतिलज्जया ॥ ११ ॥ अथोगुरुर्नीतमधिज्यधन्वनापुरःप्रदेशंपुरुहूतसूनुना॥ तरंगिताक्षंतमवेक्ष्यविद्विषंवचो गभीरंवदतिस्मसस्मितः ॥ १२ ॥

गुरुद्रोहिणःद्रुपदस्य ग्राहेग्रहणविषये बाहांचलेहस्ताग्रे पुत्रावलिःपुत्रपंक्तिःसुबलदुहितागांधारीपूर्वपक्षीभवंत्यांअसमर्थायां सिद्धांतोभूत्समरसमाप्तिकारीचअभवत् दिवि स्वर्गलोकेभुविभूलोके बुधाःदेवाः २ पंडिताः सव्यसाचीअर्जुनः ॥ १० ॥ पौरवाः पुरुवंशोद्भवाःकौरवाःपांडवाःपरिभूतिःपराभवः ॥ ११ ॥ गुरुःद्रोणःनीतंस्थापितं अधिज्यंसज्जं धनुर्यस्यसःअधिज्यधन्वा पुरुहूतसूनुःअर्जुनः तरंगितेचंचलेअक्षिणीनेत्रेयस्यतंतरंगिताक्षं विद्विषंशत्रुंद्रुपदराजानंवदतिस्मउवाच ॥ १२ ॥

(गद्यम्)अरेक्षत्रियसत्तमपुरामहत्तरमग्निदेश्यमग्निवेश्यंमुनिमस्त्रपरिश्रमायप्रश्रयेणसहशुश्रूषमाणस्त्वंमत्कृतेपितुरनंतरंममाधिराज्यपदस्यप्रथममर्धंभवतेवितीर्यततःपरमर्धमहमनुभविष्यामीति यद्यथाप्रत्यशृणुथास्तत्तथानिर्वर्तितंखलुधिग्विप्रमितिक्षुरप्रवरप्रायेणविप्रियवचनेनप्रथीयसींमममनसिव्यथांवितीर्णवनामहार्णवरशनावतींवसुमतींस्वयमेवानुभवताभवता ॥ ९ ॥

महत्तरःअतिमहान् अग्निदेश्यंअग्नितुल्यंअग्निवेश्यांअग्निवेश्याख्यं अस्त्रपरिश्रमःअस्त्रविद्याभ्यासःविनयःमत्कृतेमदर्थे आधिराज्यपदस्यप्रथममर्धं आधिंमनसिव्यथां भवतेतुभ्यंवितीर्यदत्वा परमर्धं अवशिष्टंअर्धं ( राज्यपदं ) यथाभव्यश्रृणुथाःयथाप्रकारेणप्रतिज्ञामकरोत् निर्वर्तितंखलुनिश्चयेनकृतंखलुक्षुरप्रवरप्रायेणबाणतुल्यतीक्ष्णत्वेनप्रथीयसींमहत्तमांवितीर्णवतादत्तवतामहार्णवरशनावतींसमुद्रकांचींवसुमतींपृथ्वीम् ॥ ९ ॥

( पद्यम् ) आबालवृद्धंजडसक्तमेवजनाःसमस्ताद्द्रुपदंयदाहुः ॥
तस्मात्त्वयिस्वीकृततादृशाख्येकथंनुभज्येतनमित्रतेजः ॥ १३ ॥

जडसक्तं जलसक्तं २ मूर्खासक्तं द्रुपदंवृक्षमूलं २ द्रुपदराजानं आहुःवदंतितादृशाख्यातादृशंनाम मित्रतेजःसूर्यतेजः २ मित्रोपकृतिः ॥ १३ ॥

( गद्यम् ) इतिव्याजस्तुतिवचनेनपौरवांतेवसताभार्गवान्तेवसताप्रधर्षितःपार्षतस्तेनसार्धमर्धराज्यपरिवर्तनेनपरमंगीकृत्यकृत्यविदांककुदस्तौजंभरिपुकुंभसंभावावुभावप्युपयममेवप्रवर्तयितुंकृतकतुनिर्वर्तनःसोमकांतिकोपास्यौपुत्रौभागीरथीतटवनावसथस्ययाजस्यमुनिराजस्ययाजनानुग्रहेणपरिजग्राह ॥ १० ॥

अंतेसमीपेभार्गवांतेवसतापरशुरामशिष्येण परिवर्तनंविनिमयः परंकेवलंककुदःश्रेष्ठः जंभरिपुकुंभसंभवौअर्जुनद्रोणौ उपयमंविवाहं २ यमसमीपत्वं ( मरणं ) सोमःचंद्रः २ शिवः आस्यंवदनम् ॥ १० ॥

( पद्यम् ) तातोऽपिधर्मतनयंतपनीयपीठमारोप्यचक्षुरिवलब्धममुंतपोभिः॥ आवर्जितैःकलशवारिभिरभ्यषिंचदानंदबाष्पसलिलैरवनिंचपौराः॥१४॥ आबिभ्रतौधरणिमंगदनिर्विशेषंनानाधनायतिभिरस्यनयोदिताभिः ॥ पस्पर्शसमस्तमपिवासवसन्निभस्यकोशीबभूवकुतुकैःसहकौरवाणाम् ॥१५॥ पारेसिंधुप्रथितमथतंप्रत्यहंवर्द्धमानंसोढुंपार्थाभ्युदयमपटोःस्वात्मजस्यानुरोधात् ॥ प्रीतोराजाप्यनुजतनयप्रेममार्गैर्प्रयातुंमातुर्दोषादिवबहिरगादंतरप्यंधभावम् ॥ १६ ॥

तातोपिधृतराष्ट्रोपिधर्मतनयःयुधिष्ठिरःतपनीयंसुवर्णपीठंसिंहासनं चक्षुरिवलब्धं (अंधस्य ) नेत्रलाभःसुखदःतद्वत् आवर्जितैःगंगादिनदीभिःसंपादितैः कलशवारिभिः कल

शोदकैः ॥ १४ ॥ आबिभ्रतःधारयतः अंगदनिर्विशेषंकेयूरतुल्यं धनायतिःधनप्राप्तिः नयोदितःनीत्युत्पन्नः पस्त्यंगृहं वासवसन्निभःमहेंद्रतुल्यः कोशीवभूवद्रव्यपरिपूर्णबभूवकुतूकःहर्षः ॥ १५ ॥ पारेपरतीरेसिंधुःसमुद्रःप्रथितंख्यातंपार्थाभ्युदयः युधिष्ठिरादिपृथापुत्राणांकीर्तिःअपटुःअसमर्थः स्वात्मजःदुर्योधनः राजाधृतराष्ट्रः अनुजस्यपांडोःमातुर्दोषःअंबिकायाः व्यासंप्रतिगमनसमये नेत्रबंधनापराधः बहिरिव अंतरपिअंधभावंअगात् बहिरिंद्रियेनेत्रेअंधत्वमिवअंतःकरणेअंधत्वं प्राप्तवान् (विचारहीनोजातः)१६

( गद्यम् ) तदनुसौबलीजानिरसौबलीयसामर्षेणधर्षितःसहजविनयंधर्मतनयमाहूयकृतावहित्थोगिरमित्थमुत्थापयामास ॥११॥ वत्ससंप्रतिवारणावतंपुरमुपेत्यवारणाननगुरोरुत्सवंवारणायविपदांनिषेव्यसहानुजैस्तत्रवास्तव्योनिरवधिसुखमनुशाधिवसुधामिति १२

सौबलीजानिरसौ गांधारीपतिर्धृतराष्ट्रः बलीयसामर्षेणधर्षितः प्रबलक्रोधेनपराजितःगिरमुत्थापयामासभाषणमुवाच ॥ ११ ॥ उपेत्यगत्वावारणाननःगजाननःगुरुःपिताशंकरः निषेव्यअनुभूय तत्रवास्तव्यःवारणावतनगरेवसन् अनुशाधिपालय वसुधापृथ्वी ॥ १२ ॥

( पद्यम् ) तस्याशयंत्हृदिविदन्नपिधर्मसूनुस्तातस्यवाचमविलंव्यतथेत्यगृह्णात् ॥ तत्तादृशेषुगुरुशासनपालनेषुकूलंकषंगुणगणेनकुलंहिपूरोः ॥ १७ ॥ धर्मभूरनुजैःसाकंतद्गिरातत्पुरंययौ ॥ कर्मचोदनयाजीवःकायमन्यमिवेंद्रियैः ॥ १८॥ सविनयमथदर्शितंमहीयःसचिववरेणपुरोचनेनशत्रोः ॥ जतुगृहमभजंनतत्रपार्थाजगदिवनूत्नमशेषवस्तुपूर्णम् ॥ १९॥ तत्रतेविदुरभृत्यभाषितैःसौबलेयशतमन्युहेतुना ॥ पंचतामपिपरांधनंजयप्रापणेनजतुधाम्नमेनिरे ॥ २० ॥ शिशमयिपुरपिद्विषांसमंत्रीनिभृतशरारुरिमान्निगूढभावान् ॥ अवसरमनलाहृतेनिकेतेप्रतिदिनमेधयितुंप्रतीक्षतेस्म ॥ २१ ॥

तस्याशयःधृतराष्ट्रस्यअभिप्रायः विदन्नपिजानन्नपि अविलंव्यंशीघ्रंअगृण्हात् स्वीचकार गुरुशासनंपितृराज्ञा कूलंकषंपूर्णगुणगणःगुणसमूहःधर्मभूःयुधिष्ठिरः कर्मचोदनया

पापपुण्यरूपप्रेरणयाकायंदेहम् ॥ १८ ॥ महीपःविशालं सचिववरःअमात्यश्रेष्ठःशत्रोः दुर्योधनस्य जतुगृहं लाक्षागृहंतत्रवारणावतपुरेनूत्नंनूतनं अशेषवस्तुपूर्णंसकलपदार्थसंपन्नम् ॥ १९ ॥ सौबलेयशतमन्युःदुर्योधनःहेतुःकारणं ( शतमन्युःक्रोधः ) पंचतांमरणं २ पंचसंख्यांधनंजयःअर्जुनः २ अग्निःप्रापणंप्राप्तिः जतुधामलाक्षागृहंमेनिरेमानितवंतः ॥ २० ॥ शिशमयिषुरपिशमयितुमिच्छुरपिद्विषांशत्रूणांमंत्रीसचिवःपुरोचनःनिभृतंगुप्तं शरारुःघातुकःनिगूढभावःस्वनाशरूपगुप्ताभिप्रायः अनलावृतेअग्न्युद्दीपकलाक्षादिपदार्थावृते निकेतंगृहं एधयितुंवर्धयितुं प्रतीक्षतेस्मप्रतीक्षांचक्रे ॥ २१ ॥

( गद्यम् ) जातुचिदपत्यैःसहभृत्यभावमिषादमीषामामिषफले
षुविपंनिनीषंत्यानिषादयोषितइवतस्यपुरोचनस्यनिद्रायामपि
द्राघिमाणंदातुकामेनतत्रसद्मनिक्षणदायामाशुशुक्षणिंक्षणान्नि
क्षिप्यजननीसोदरजननीचेतरसुखसंवेशमाणिमंचायमानभुजशि
खरसीमेनभीमेनविदुरकिंकरकृतालिंगयासुरंगयानिर्जग्मे ॥ १३ ॥

जातुचित्कदाचित् भृत्यभावमिषंसेवकभावकपटं अमीषांडवाः आमिषफलंमांसभक्ष्यफलं निनीषंतंस्थापयितुमिच्छंतं निद्रायाःद्राघिमाणंनिद्रादीर्घत्वंमरणं दातुंकामःइच्छायस्यसःदातुकामः सद्मनिगृहेक्षणदायांरात्र्यां आशुशुक्षणिंअग्निं नीचेतरत्बहुलं यत् सुखसंवेशंसुखनिद्रां मंचायमानंमंचकवदाचरंतंचसुरंगालिंगंभूतलांतर्गतगुप्तमार्गः निर्जग्मेबहिर्निर्गतम् ॥ १३ ॥

(पद्यम्) पार्थद्विषांविग्रहमेकमेकंविभज्यसप्तापिशिखाःकृशानोः ॥
स्वीकृत्यतृप्ताःस्वशिरःप्रकंपैःसंश्लाघिरेतत्रसमीरसूनुम् ॥ २२ ॥
प्रपश्यतांपौरनृणांप्रभातेसांक्रामिकंरोगमिवाभितापम् ॥
आविभ्रतामश्रुभिरेवशांतिरापादितत्राग्निहठात्क्रियायाः ॥ २३ ॥
तत्रालयेदग्धतनूनथैतान्निश्चित्यपार्थान्निजचारवाचा ॥
दुःखापदेशेनसुयोधनाद्याः संमोदबाष्पंससृजुःसभायाम् ॥ २४ ॥

विग्रहंशरीरंकृशानुसप्तशिखाःअग्नेःसप्तजितःस्वशिरःप्रकंपः स्वाग्रचालनंसमीरसूनुं संश्लाघिरेभीमंश्लाघितवत्यइव ॥ २२ ॥ पौरनृणांपौरजनानांसांक्रामिकरोगःसंसर्गजन्यरोगःआविभ्रत्धारयत्शांतिरापादिशांतिःसंपादिताहठात्बलात्कारात् क्रियादाह

कर्म ॥ २३ ॥ तत्रालपेलाक्षागृहेचारवाघागुमदूतकथनेनदुःखापदेशःदुःखमिषं संमोह बाष्पंआनंदयुक्तेनेत्रजलंसंसृजुतस्त्वजुः ॥ २४ ॥

(गद्यम्) तावत्सोपिगंधवहसूनुरंधतमसधुरंधरंसक्थिजवसमुत्थि तमरुदुत्पाटिततरुविटपविघट्टनसमुद्भ्रांतशकुंतकुलबद्धनिध्वान मध्वानंविलंघ्यकस्यचित्काननकासारतीरतरोरधिपरिसरमेतानव- तार्यतदीयपरिरक्षणविचक्षणजागरःक्षणमवतस्थे ॥ १४ ॥

गंधवहसूनुःभीमःअंधतमसधुरंधरंगाढांधःकारव्याप्तंसक्थिजवसमुत्थितं ऊरुवेगसमुत्थितंमरुत्वायुः विटपविघेट्टनसमुद्भ्रांतं शाखाभ्रंशोत्कटभ्रमवंतंशकुंतकुलंपक्षिसमूहःबद्धनिध्वानःआरब्धशब्दःअध्वामार्गः कासारःतडागःअधिपरिसरंसमीपंविचक्षणजागरः जागृतिदक्षःअवतस्थेतस्थौ ॥ १४ ॥

तत्रकापितरुणीतडिदाभातंयपौजतुगृहेसुखितेन ॥ चूषणायत मस्तांवनमार्गेचोदिताहुतवहेनशिखेव ॥ २५ ॥ अधरोष्ठविभाग रेखिकामुदृशोस्यावदनेऽस्तिवानवा॥ इतिसाह्यदितस्यसंशयंपरि मार्ष्टुकिलमौनमत्यजत् ॥ २६ ॥ एतांप्रशास्तिभुजयावनराज्य सीमामेकःस्वयंनरभुजामृषभोहिडिंबः ॥ अर्धांशभाग्जनवधेस ममंतकेनतुल्याभिधानपदयास्वसृमान्मयायः ॥ २७ ॥ वीतशं कमिहतेऽद्यतिष्ठतः कीदृशंककुदमित्ययंमम॥ चित्तरंगभुविनृत्त कौशलीमुत्तरंगयतिचित्रलासकः ॥ २८ ॥ रुधिरंपातुकामेनतेन वोहंतुमीरिता ॥ अधरंपातुकामाहमस्मितेरूपसंपदा ॥ २९ ॥ अद्यतेसविधमापतेदसौत्स्द्यमेतदुचितंवचःश्रृणु ॥ मारणंरिपुपु तन्वतामुनामारणंकुरुमहान्बलेनसः ॥ ३० ॥ उपयामविधौत्वर स्वमेरूपयामारशराःशरारवः दिविवाभुविवाथदिक्षुवारमथेत्वामु पनीयरंहसा ॥ ३१ ॥ इत्येनांभाषमाणांरजनिचरपतिःक्रोधाग्नि गैःस्फुलिंगैर्दग्धैर्वीक्ष्णोरभीक्ष्णंस्फुटघटितभुजास्फोटवाचाटिता शः॥ बिभ्राणोबभ्रुकेश्यंत्वमिहवससिकोमृत्युवक्त्रार्धजग्धोदुर्बुद्धे तिष्ठयामिकपुनरितिगिरामेदुरःप्रादुरासीत्॥३२॥ तस्मिन्रक्षसि

सिनेदिष्टेनादृक्षपरुषाक्षरे॥ अपमृत्युरिवोदस्थादनिलस्यात्मसंभ
वः॥३३॥ दृक्षेणदृक्षंगिरिणागिरीद्रंहस्तेनहस्तंवचसावचश्च॥ पर
स्परेणप्रतिरुध्यघोरंसमीकमेतौसममादधाते ॥ ३४ ॥ स्वसुःसम
क्षंस्वयमेवमुष्ट्यावलंविडौजाइववज्रसख्या ॥ हिडिंबमेनंयम
राजधानीकुटुंबिमुख्यंकुरुतेस्मभीमः ॥ ३५ ॥

तडिदाभाविद्युत्कांतिसदृशांगातंभीमंजतुगृहसुखितःलक्षागृहभक्षणात्तृप्तः तमसांचूष णायअंधःकारनाशायचोदिताप्रेरिताहुतवहःअग्निः ॥२५॥ रेखिकारेखाचिह्नं वानवा अस्तिवानास्तिपरिमार्ष्टुंदूरीकर्तुम् ॥ २६ ॥ प्रशास्तिसंरक्षतिभुजयाभुजबलेननरभुजामृ षभःराक्षसश्रेष्ठःअंतकेनयमेनतुल्याभिधानपदंतुल्यवाचकशब्दः स्वसृमान्वर्ततेभगिनी युक्तःवर्तते ॥२७॥ इहअयवीतशंकंतिष्ठतःइहवनेअद्यनिःशंकंतिष्ठतःककुदंधैर्यं २ प्राधा न्यंचित्तरंगभूःचित्तरूपारंगभूमिःनृत्तकौशलीमुत्तरंगयतिनृत्यचातुर्यंप्रगटयतिचित्रलासकः आश्चर्यकारकनटः ॥ २८ ॥ तेनहिंडिबेनवःयुष्मान्हंतुमोरिताहंतुंप्रेरिताअधरंपातुका मास्मित्वद्रूपमोहिताऽस्मि ॥ २९ ॥ असौसविधमापतेत्हिडिंबःसमीपंवेगेनागच्छेत्मे ह्यंमत्प्रियंउचितंवचःहितकरभाषणंअमुनाराक्षसेन ॥३० ॥ उपयामविधिःविवाहकर्म त्वरस्वत्वरांकुरुमारशरःमदनबाणःशरारुःप्राणघातुकः दिक्षुदूरदेशो रमयेरमयिष्ये रंहः वेगः ॥ ३१ ॥ एनांहिडिंबांरजनिचरपतिःराक्षसराजाहिडिंबःअक्ष्णोःस्फुलिंगैःनेत्रक्रो धाग्निकणैःअभीक्ष्णंनिरंतरंघटितभुजास्फोटः कृतहस्तताडनंवाचाटितः गर्जनायुक्तःकृतः आशाःदिशःबभ्रुकेश्यंपिंगलवर्णकेशसमूहंजग्धःभक्षितःगिरामेदुरःभाषणयुक्तः ॥ ३२ ॥ रक्षसिनेदिष्ठेराक्षसस्यअतिसमीपेतादृक्षंतादृशमुक्तंपरुषंरौद्रं उदस्थादुदतिष्ठदनिलस्या त्मसंभवःभीमः ॥ ३३ ॥ प्रतिरुध्यनिरुध्यघोरसमीकंघोरयुद्धंएतौआदधातेभीमराक्ष सौचक्राते ॥ ३४ ॥ स्वसुःसमक्षंराक्षसभगिनीहिडिंबातस्याःसमक्षंबलंबलासुरंविडौ जाइवइंद्रइववज्रसख्यावज्रतुल्यायमराजधानीकुटुंबमुख्यंकुरुतेस्मजघानेत्यर्थः ॥३५॥

(गद्यम्) तदनुतिमिरकदंबेनेवहिडिंबेननिर्मुक्तात्तस्मादहर्मुखादि ववनात्संध्ययेवसरागयातयाकमलपालिकयासहतपनभानवइव राजसूनवस्तेनिष्क्रम्यशालिहोत्रमुनेःसदसिवीतिहोत्रभासंव्या संभगवंतमासेव्यतत्रतन्निदेशादहानिकानिचिदतिवाहयांचक्रुः १५॥

अहर्मुखंउषःकालःसरागयाआरक्तया २ प्रीतियुक्तयाकमलपालिकयासहहिडिंब

पामहराजसूनवःपांडवाःमुनेःसदसिमुनेराश्रमे वीतिहोत्रभासंअग्निसदृशवर्णआसेव्य सेवनंकृत्वानिदेशःआज्ञा ॥ १५ ॥

( पद्यम् ) पुत्रंतत्रघटोत्कचंपवनभूसंगादनंगातुराप्रासंसर्वगुणैर्मनो जवसतांप्रासूतनक्तंचरी ॥ कुर्यांवःस्मृतएवकर्मसुहरेःशक्तेरपिस्रं सनामित्युक्त्वासपितॄन्यथाभिलषितंयुक्तस्तयानिर्ययौ ॥ ३६ ॥

पवनभूसंगात्भीमसंगमात्अनंगातुराकामविह्वलाहिडिंबामनोजवसतां पितृतुल्यत्वं नक्तंचरीराक्षसीहरिःइंद्रःशक्तिःबलं स्रंसनांध्ययं कुर्यांअभिलषितंइच्छितम् ॥३६॥

( गद्यम् ) ततस्तेवन्याशनैर्धन्याधारितवसुधासुधाशनाकृतयःप्रावृ षमिववकवलाक्रांतांपातालनगरीमिवप्रत्यहंवर्धमानबलिशोकाममं गराज्यसीमामिवसूर्यतनयानुकूलप्रतिष्ठांरविरथाक्षधुरमिवैकचक्रां पुरींक्रमादाक्रम्यकस्यचित्गृहमेधिनोगृहमध्यमेत्यसुखमध्यवा- त्सुः ॥ १६ ॥

वन्याशनैर्धन्यः वनफलमूलभक्षणैःस्वस्तिमान्वसुधासुधाशनःभूदेवःब्राह्मणःबकवला क्रांताबकासुरस्यशक्त्याअधिष्ठिता २ बकवायसव्याप्तावालःदैत्यः २ देवभागःसूर्यतन यानुकूलप्रतिष्ठायमुनातीरानुरोधस्थितिः २ कर्णानुकूलप्रतिष्ठाएकचक्राएकचक्रवती २ नगरीविशेषागृहमेधीगृहस्थाश्रमीगृहमध्यमेत्यसुखंप्राप्तसुखंअध्यवात्सुःवसंतिस्म॥ १६॥

( पद्यम् )भिक्षामटद्भिरथतत्रपृथाकुमारैरर्धंविभज्यपृथगर्पितमन्न राशेः ॥ आकंठमभ्यवहरन्निखिलैःप्रतीकैःपुत्रोबभूवमरुतःपु नरुक्तपोषः ॥ ३७ ॥ तत्रतत्रद्विजैरेतेपृष्टानाशंपृथाभुवाम् ॥ इत्यूचुर्वयमत्रैवविद्मस्तेषांतुसंस्थितिम् ॥ ३८ ॥ यक्षेणकेना पिहतोहिडिंबइतिब्रुवाणेषुमिथोद्विजेषु ॥ आकूतगर्भंहसितं सगर्भ्याश्चक्रुर्मुखंवीक्ष्यसमीरसूनोः ॥ ३९ ॥

भिक्षामटद्भिःभिक्षांगच्छद्भिःअभ्यवहरन्भक्षयन्तःप्रतीकैः अवयवैःद्विगुणितपोषःपुन रुक्तपुष्टिर्यस्य ॥ ३७ ॥ नाशंपृष्टाःमरणंपृष्टाःविद्मःजानीमःसंस्थितिंस्थितिं २ मरणं॥ ॥ ३८ ॥ आकूतंअभिप्रायःसगर्भ्याःधर्मादिभ्रातरः ॥ ३९ ॥

( गद्यम् )एकदासायमंतर्गृहेनिरवग्रहंनिष्पतद्भिर्बाष्पैस्तरंगितोत्त मांगमुत्संगभुविपत्युरपत्यंपुरोधाययातुधानापराधभयानुरोधेनमं

दितंक्रंदितमुत्सृजंतींकुंतीसमुपसृत्यविषादनिदानंविप्रायताक्षीम
प्राक्षीत्सापितांकृपालुतयात्दिलगद्गदांगद्गदाक्षरमाचचक्षे ॥१७॥

सायंसायंकालसमये निरवग्रहंअप्रतिबंधं निष्पतद्बाष्पंगलन्नेत्रोदकंतरंगिततरंगसं जातंउत्तमांगंशिरंउत्संगभूःसमीपभूमिः पुरोधायअग्रभागेनिधाय यातुधानःबकासुरः मंदितंक्रंदितं मंदरोदनं उत्सृजंतीप्रकटयंतीविप्रायताक्षीदीर्घनेत्रा विप्रपत्नीविषादःदुःखं निदानंकारणंअप्राक्षीत्पप्रच्छसमुपसृत्यसमीपभागंगत्वालगद्गदः संजातरोगः गद्गदाक्षरमाचचक्षेअव्यक्ताक्षरंकथयामास ॥ १७ ॥

(पद्यम्) साधयेयमिनिधर्मसंग्रहंसंदधातिमिथुनंपरस्परम् ॥ आ
धयेपरमनेकजन्मनोरावयोरजनिपापसंग्रहः ॥४०॥ अयिकिंब्र
वीमिपरिपाकमंहसामतिभीषणोबकइतिक्षपाचरः ॥ स्वपुराद
रात्स्वयमुपागतोयमोयमुनावनांतमवलंब्यवर्तते ॥ ४१ ॥ माभू
न्नाशोयुगपदितिनोभीरुभिर्जातुपौरैःपूर्वैर्लब्ध्वावसरमसकृत्प्रार्थ
नाभिःप्रक्लृप्तम् ॥ एकैकस्मिन्नहनिवितरत्येकमेकंपुमांसंकृत्वा
तस्मैबलिमिहजनस्तुंगमन्नस्यराशिम् ॥ ४२ ॥ तादृशः
प्रलयकालकठोरोवासरःसतुममालयभूमेः ॥ द्वारितिष्ठतिबकात्प
रितुष्टात्पारितोपिकमिवाद्यजिघृक्षुः ॥ ४३ ॥ बालानिवप्रवय
सोपिनराशनोयंभुंजीतचेन्ममसएवहिपुण्यपाकः॥ बालेनभाव्य
मितितद्वलिषुव्यवस्थाकंठेपुनःकलयतिक्रकचस्यधाटीम् ॥४४॥
संतानमूलमिदमेकमपत्यमास्तेसंवर्तकालसहजश्चसराक्षसेंद्रः ॥
संभूयतेचसमयःक्षपयामहत्यासंतीर्यतांकथमियंसखिमेविपत्तिः ४५

मिथुनंसंदधाति जायापतित्वेनमिलतिआवयोः दंपत्योः ॥ ४० ॥ अंहस्परिपाकः पापपरिणामः अतिभीषणःपरमभयंकरःक्षपाचरःराक्षसः यमुनावनांतमवलंब्ययमुनाती रवनमधिष्ठाय ॥ ४१ ॥ युगपत्एककाले नःअस्माकं जातुकदाचित्भीरुपौरैःभयशी लपुरजनैः अवसरंलब्ध्वाअवकाशंलब्ध्वाअसकृत्प्रार्थनापुनःपुनःप्रार्थनाप्रक्लृप्तंप्रतिदिवस देयत्वेननिश्चितं पुमान्पुरुषः बलिंवितरतिबलिंददाति तुंगमन्नंमधुरान्नम् ॥ ४२ ॥ क ठोरवासरःरौद्रदिवसः ममालयभूमिःमद्गृहस्थलं संतोषेणयद्दीयतेतत्पारितोषिकंजिघृक्षुः गृहीतुमिच्छुः ॥ ४३ ॥ नराशनःराक्षसःबकःप्रवयसोपिभुंजेत् वृद्धानपिभक्षयेत् पुण्य-

पाकःपुण्यफलोदयः क्रकचस्यधाटींकलयति करपत्रायुधशैलीकरोति ( कंठे ) कंठछेद दुःखंकरोतीत्यर्थः ॥ ४४ ॥ संतानमूलंवंशवृक्षंसंवर्तकालसहजः प्रलयकालसमः समयः क्षपयासंभूपते दानकालःसंनिधोभवति महत्यादीर्घयादुःखेनसंतीर्यतां निवार्यतां॥४५॥

( गद्यम् ) इत्युदीर्यसरभसावगाहनत्हृदयसमुत्कूलितंशोकसरःपूर मिवनयनसलिलंविशृंखलंखेलयंत्यैतस्यैतनयेपुद्वितीयःसमरेष्वद्वि तीयःसुतःसखितेदीयतेसएवतत्प्रीणनप्रणाशनयोर्बलीभविष्यति माभैषीरितिसानरदेवमहिषीप्रत्यश्रौषीत् ॥ १८ ॥

इत्युदीर्यइत्युक्त्वा सरभसःसवेगः त्हृदयसमुत्कूलितंत्हृदयादूर्ध्वंगतं विशृंखलं अ-निवार्यं अद्वितीयःउपमारहितः प्रीणनंतृप्तिःप्रणाशनंप्राणहरणं बलिःदेयबलिः२ बल-वान् माभैषीतिप्रत्यश्रौषीत् भयंत्यागंकुरुइति प्रतिज्ञातवती नरदेवमहिषीपट्टराज्ञी कुंती ॥ १८ ॥

( पद्यम् ) अनयोरथदंपत्योरश्रुहेतोःशुचःपदे ॥ आनंदस्यातिरे कोभूदादेशइवतत्क्षणम् ॥ ४६ ॥ तमिमंप्रसुवारहस्युदंतंगदितो वायुसुतोबलावलेपात् ॥ मनसानबकंलिलेहराज्यामनसाधारित मन्नराशिमेव ॥ ४७ ॥

शुचःपदेशोकस्यस्थाने अश्रुहेतुःअश्रुकारणं अतिरेकःअतिशयः आदेशइवअभूत् रूपांतरइवअभूत् ॥ ४६ ॥ प्रसूर्माता रहसिएकांतस्थले उदंतःवृत्तांतः गदितोवायुसुतः उक्तोभीमः बलावलेपः सामर्थ्याभिमानः नलिलेहनमानितवान् अनः शकटः ॥ ४७ ॥

( गद्यम् ) अपरेद्युरखिलजनानंदकरेभगवति दिनकरेमंदेहकुलमय स्कंदितुमुदयगिरिशिखरमधिरूढे ॥ १९ ॥

अपरेद्युः अपरस्मिन्दिने मंदेहकुलयवस्कंदितुं राक्षसवर्गपराजेतुं अधिरूढः प्राप्तः ॥ १९ ॥

( पद्यम् ) सशकटमधिरुह्यभीमसेनोदधिकलशीकुलशीफरान्नरा शिम् ॥ बकभवनवनंविवेशशाखानगरमिवांतकवीरराजधान्याः ॥ ४८ ॥ कंकास्थोच्चयकल्पितांतकचमूशाटीकुटीविभ्रमेतत्रकु ञ्जतदौपवाह्यमहिषश्वासोग्रचक्रानिले ॥ गृध्रध्वांक्षसृगालघोष

विकसद्रक्षोपदानस्तवेभुंजानःशकटस्थएवसतदाचक्रेमहत्क्ष्वेडि
तम् ॥ ४९ ॥

कुलशीफरं समूहेनयुक्तंअंतकवीरःयमःशास्वानगरं लघुग्रामः ॥ ४८ ॥ कंकालो
ग्रपकल्पितं मानवशरीरास्थिसमूहेनकृतं अंतकचमूशाटीकुटीविभ्रमः यमस्यसेनायाःपट
मंडपभ्रमः चक्रानिलःवात्यानिलः ध्वांक्षाःवायसाः घोषविकसनशब्दप्रकटीभवन् रक्षो
पदानस्तवः राक्षसस्यवीरकर्मस्तुतिः भुंजानःभक्षयन्सन्क्ष्येडितंगर्जना ॥ ४९ ॥

(गद्यम्) सोऽपितदिदंनिशम्यबलिपुरुषविशेषभारमंदितशकटाग
मेनप्रथममेवकृतोन्मेषंरोषंद्विगुणयन्गिरिकंदरमंदिरमुखात्सरभसं
विनिर्गत्य ॥ २० ॥

सःबकराक्षसः कंदरमंदिरंगुहागृहमुखात्सरभसं द्वारात्सवेगम् ॥ २० ॥

(पद्यम्) एवंकोवापराध्नोत्यमुमविगणयन्बाहुमत्रेतिघुष्यन्व्यक्तो
रोरक्तरेखाकृतविरुदजगद्धातुकत्वप्रशस्तिः ॥ क्रोशन्मर्त्यांगखाद
त्वरणपरिचलत्सृक्किलग्नास्थिदंडस्थूलेदंष्ट्रेदधानःपवनभुवमभिप्रा
द्रवद्यातुधानः॥५०॥ निजभुजयुगलीनियंत्रणाभिर्नियमितयत्न
परस्परावुभौतौ ॥ निगडितनयनंनिलिंपपंक्तेर्निरवहतांनिपुणं
नियुद्धशिल्पम् ॥ ५१ ॥ पुत्रस्यवायोर्भुजदौर्ललित्यंबकंवनेतत्र
चिरंचरंतम् ॥ निन्येदशांकामपिराक्षसस्त्रीनेत्रांबुवर्षर्तुविलास
योग्याम् ॥ ५२ ॥ तंविकृष्यपुरसीम्निनिशीथेतत्क्षणात्कुणपमर्श
नदोषम् ॥ मार्ष्टुकामइवमारुतसूनुर्मातुरंघ्रिमुपसेवितुमागात् ॥
॥५३॥आलोक्ययातुशवमेतदशेषपौरैरह्नोमुखेपरवशीक्रियतेस्म
चेतः॥ आश्चर्यपूरपरिमेलनफेनिलाभिरानंदसागरतरंगपरंपराभिः
॥ ५४ ॥ भवनमेत्यतदागृहमेधिनःपवनजेप्रवणीकृतमूर्धनि ॥
प्रयुयुजेसममाशिषमक्षतैःप्रमुदितःपुरितत्रमहाजनः ॥ ५५ ॥
निशिजातुनिकेतवेदिकायानिकटेसुप्तसुखंनिषेव्यपार्थान् ॥
पथिकोपररात्रजागरूकःप्रबभाषेगिरमीदृशंप्रसंगात् ॥ ५६ ॥

कोवाअपराध्नोतिकःपुरुषः अपराधंकरोति घुष्यन्गजर्पन् व्यक्तःप्रकटः विरुदंवि-
न्हंप्रशस्तिः ख्यातिः मर्त्यांगखादःमनुष्यांगभक्षणं त्वरणंत्वरासृक्किणःओष्ठः लग्नःयुक्तः

पवनभूःभीमः यातुधानः अभिप्राद्रवत्राक्षसःबकःसंमुखमापतत् ॥ ५० ॥ युगलीनियं प्रणंयुग्मेननियमनं नियमितयत्नःनिरुद्धप्रयत्नः उभौभीमबकौनिगडितनयनंबद्धनेत्रं नि- लिंपपंक्तिःदेवगणः नियुद्धंनिरवहतांबाहुयुद्धंअकुरुताम् ॥ ५१ ॥ भुजदौर्ललित्यंबाहू नांदुश्चेष्टितत्वं चरंतःसंचरंतः ॥ ५२ ॥ सीम्निसमीपभागे नीशीथेमध्यरात्रे कुणपमर्श नंशवस्पर्शः मार्ष्टुंपरिहर्तुंआगात्आगच्छत् ॥ ५३ ॥ यातुशवंराक्षसस्यप्रेतंअह्नोमुखे प्रभाते परवशीक्रियतेस्मपरवशंचक्रे परिमेलनंअंतःप्रवेशः फेनिलःफेनविशिष्टःतरंगःल हरी ॥ ५४ ॥ गृहमेधीगृहस्थाश्रमीपवनजःभीमः प्रवणीकृतंनम्रीकृतंमूधामस्तकं आ- शिषंप्रयुयुजेआशिर्वादंकृतवान् ॥५५॥ जातुकदाचित्निकेतवेदिकागृहस्यपरिष्कृतभूमिः सुप्तिसुखंनिपेव्यनिद्रासुखंअनुभूयअपररात्रेरात्र्युत्तरभागे पथिकःविप्रः गिरंवृत्तम् ५६॥

पांचालिकांयुवमनोरथरत्नसौधपांचालिकांत्विदमिमेतिममेतिकृ
त्वा ॥ अद्यस्वयंवरमहायनृपाःप्रयांतिदूतैःसमंद्रुपदभूपतिराजधा
नीम्॥५७॥भोक्तुमन्नमपिसूपसमग्रंदोग्धुमप्यभिनवप्रसवागाः॥
लभ्यतेद्विजगणोपिचतस्माद्वत्सलादुहितुरुत्सवकाले ॥ ५८ ॥
नहितत्रभवेदपार्थताविजयःसिद्धिमुपैष्यतिस्फुटम्॥ युगपत्सुख
मस्तुवोमहत्द्रुतमागच्छततन्महौजसः ॥ ५९ ॥ इतिवाचमुप
श्रुतिंद्विजातेस्त्विदिकृत्वामुधयेवनिर्मितांताम् ॥ पथिभूसुरयूथम
ध्यभाजःप्रतिपांचालपुरंप्रतस्थिरेते ॥ ६० ॥

पांचालिकाद्रुपदराजकन्या सौधपांचालिकासौधपुत्तलिकामहायआनंदोत्सवा य प्रयांतिगच्छंतिद्रुपदभूपतिराजधानींपाचालनगरीम् ॥ ५७ ॥ नवप्रसूःनूतनप्र सूःगाःधेनवःवत्सलः कन्यास्नेहयुक्तः दुहिताकन्या ॥ ५८ ॥ अपार्थताव्यर्थत्वं २ पांडवराहित्यंविजयः गमनोद्योगः २ अर्जुनःयुगपत्एकस्मिन्कालेद्रुतंशीघ्रंमहौजसः प राक्रमशीलाः ॥ ५९ ॥ वाचमुपश्रुतींवेदतुल्यंवाक्यं शुभशकुनं मुधाअमृतं भूसुरयूथ मध्यभाजः ब्राह्मणसमूहमध्येगताः प्रतस्थिरेनिर्गताः ॥ ६० ॥

(गद्यम्) तेपुनरनेकदिननीतजनपदवनसीमानःपथिकृतोदयेन
भगवतापराशरदायादेनजनुसदनपरिच्यवनेनवोनवोहर्पःपार्पन-
स्यसमुन्मिषतीतिगिरानुगृहीताःसाक्षात्प्ररोहताभुजप्रतापानलेने
वफाल्गुनकरवल्लिगतेनमहताल्लाततेजसानितांतसीमंतितसंतम-
सयापदव्यात्रिविष्टपतटिनींप्राविक्षन् ॥ २१ ॥

तेपांडवाःनीतंलंघितं कृतोदयंकृतप्रगटणंपराशरदायादः व्यासः ( दायादः पुत्रः ) जतुसदनपरिच्यवनं लाक्षागृहात्सुखनिर्गमनं समुन्मिषतिवर्तमानेभविष्यति अनुगृहीतः अनुगृहंकृतःसाक्षात्प्ररोहता प्रत्यक्षाविर्भवता अनलःअग्निः फाल्गुनःअर्जुनःवल्गितंचं चलंअलातंसाग्निकाष्ठंनितांतसीमंतितंअत्यंतवर्धमानंपदवीमार्गः त्रिविष्टपतटिनींप्राविक्षन् भागीरथींप्राविशन् ॥ २१ ॥

(प०) इंदीवरात्प्रतितरंगमनुप्रविष्टैर्विवैरिवाब्धिदुहितुस्तरुणीकदं
बैः॥क्रीडन्समंपयसिचित्ररथोविलोक्यपार्थान्रुरोधकुपितःप्रधनं
चिकीर्षुः॥६१॥अस्त्रमात्मसमनामदैवतंसंप्रयुज्यसमरेधनंजयः॥
तत्रतस्यरथमग्रवर्तिनंजातुषालयसहायमाततनोत् ॥ ६२ ॥ गंध
र्वाणांपत्युर्गर्वजुषःसौरसैंधवेतस्मिन् ॥ पाथसिभंगःशिशिरोरोध
सिभंगस्तुतापहेतुरभूत् ॥ ६३ ॥ सख्यस्यलाभात्सपदिप्रतुष्यन्
कुशीलवेंद्रःकुरुनंदनानाम् ॥ प्रादर्शयत्स्वांप्रथमंविनीतिंपश्चाद
मीषांपदवींचरम्याम् ॥ ६४ ॥ धर्मभूरथसहोदरैःसमंधौम्यमध्व
निसमीक्ष्यविश्रुतम् ॥ प्राणिनामयमहिंसकोपिसन्पादपीडनम
मुष्यकॢप्तवान् ॥ ६५ ॥

इंदीवरंकमलं अब्धिदुहितालक्ष्मीःकदंबःसमूहः चित्ररथःगंधर्वविशेषःपयःउदकंप्रध नंयुद्धम् ॥ ६१ ॥ आत्मसमनामास्त्रंधनंजयइतिआत्मनामतस्यअस्त्रंअःयस्त्रंधनंजयः अर्जुनःअग्रवर्तिनंपुरोभागेस्थितं जातुषालयसहायंलाक्षागृहसमंआतनोत् ददाहेत्यर्थः ॥ ६२ ॥ गर्वजुषःगर्वयुक्तस्य सौरसैंधवेभागीरथ्याःसंबंधिनिपाथसिःउदके भंगः लह री शिशिरोभूत् शीतलोभूत् रोधसिभंगःतीरेपराजयः तापहेतुरभूत् मनःसंतापकारणं ( उष्णं ) चाभूत् ॥ ६३ ॥ सख्यस्यलाभः स्नेहःकुशीलवेंद्रःगंधर्वराजाविनीतिंनम्र तांरम्यापदवीरम्यमार्गः ॥ ६४ ॥ धर्मभूःयुधिष्ठिरः धौम्यःमहर्षिविशेषःअध्वनिमार्गे विश्रुतंप्रसिद्धं अहिंसकःअपीडकःपादपीडनंपादसंवाहनं कॢप्तवान्करोति ॥ ६५ ॥

यथातिथ्यविधौप्रीतःसपुरस्कुरुतेस्मतान् ॥ तथाध्वगमनेतेऽपितं
प्रश्रयवशंवदाः ॥ ६६ ॥ धौम्यस्यसुधामधुरिमधौरेयीभिःस्वयं
वरकथाभिः ॥ द्रुपदपुरःसरणिरेषांह्रित्राण्यभवत्पदानीव ॥६७॥

भूदेवेष्वतिनिविडेपुमध्यभाजांपंचानामपियुगपत्पृथासुतानाम् ॥
पुस्फोरद्रुपदपुरंपुरःप्रदेशेवक्राब्जेसरभसमक्षिदक्षिणंच ॥ ६८ ॥

प्रीतःतुष्टः पुरस्कुरुतेस्मआतिथ्यंचकार २ अग्रेप्रकुर्वन्नृप्रश्रयवशः स्नेहाधीनः ॥६६॥ सुधामधुरिमधोरेयीभिः अमृततुल्याभिःसरणिःमार्गः द्वेवात्रीणिपदानिद्वित्राणिपदानि अभवत् अल्पमार्गोजातइत्यर्थः ॥ ६७ ॥ भूदेवःविप्रःमध्यभाजांमध्यभागेस्थितानां वक्राब्जंमुखकमलं दक्षिणाक्षिसरभसंपुस्फोर दक्षिणनेत्रंसवेगंस्फुरतिस्म (पुस्फोरज्ञा नविषयंबभूव) ॥ ६८ ॥

कुमारिकायाद्रुपदस्यभूपतेःकुचोपमाद्रव्यमिवाभिवीक्षितुम् ॥
कुरूद्वहास्तत्रपुरेकुतूहलात्कुलालगेहंप्रथमंसमाविशन्॥६९॥ ता
मागमन्नथपुरींशतशःससैन्याःस्मारंयुगोदयमिवाद्भुतमावहंतः ॥
भूपाःसुताभुजमुदस्यपठद्भिरग्रे पर्यंनिबद्धविरुदंपटुबंदिवृंदैः ॥
॥ ७० ॥ द्यावाभूमीनिरुंधन्पदुबलरजसांश्रेणिभिःसीरपाणिर्वे
गादागात्सवीरःस्वविनयगुरुणाशौरिणान्वीयमानः ॥ आहारश्चा
युधंचद्विपदवमतयेयेनसंसेव्यमानेतंद्वेहालाहलत्वंरणभुविवहनो
नामतःकृत्यतश्च ॥ ७१ ॥ बिभ्राणोमणिदीप्रकुंडलधरंकर्णत्रयं
पार्श्वयोरग्रेचातिमनोज्ञरूपमखिलेष्वंगेषुदुर्योधनः ॥ सेनादुंदु
भिनादनुंदिलनभाःस्वस्यानुबिंबायितैरासीदत्सनवाधिकैःपरिवृत
प्रांतोनवत्यानुजैः ॥ ७२ ॥ तदनुपरितःकीर्णैःपुष्पैस्तरंगितसौर
भंमणिमयमहामंचारूढावनींद्रपरंपरम् ॥ अगरुजनितैर्धूपैरालिह्य
मानवितानकंस्वनितपटहंप्रापुःपार्थाःस्वयंवरमंडपम् ७३ जाग्रत्सो
ममकीर्तिसोमनिमिषत्पद्मावकाशात्ययात्प्राप्तेंदीवरनित्यवासघ
टितश्यामप्रभाश्रीरिव ॥ पांचालस्यसुताततःपरिजनैःसार्द्धंपुरः
पश्यतांराज्ञांबुद्धिमिवाधिरुह्यशिबिकांरंगस्थलींप्राविशत्॥७४॥
द्रौपदीमुखशशिद्युतिसंपत्कौमुदीमहतिरंगतटाके ॥ पक्ष्मचक्रयु
गलंनृपतीनांतत्क्षणंविजघटेवहुदूरम् ॥ ७५ ॥ तांपश्यतःसदसि
तस्यमहीसुराणांवामेतरेमहतिवासवनंदनस्य ॥ अंतर्बलस्यसप
दिप्रकटीबभूपोरुह्वलग्नंकिलभुजेस्फुरणंबभूव ॥ ७६ ॥

द्रुपदकुमारिकाद्रौपदी कुचोपमाद्रव्यंकुचसदृशवस्तुकुरूद्वहाःपांडवाःकुलालःकुंभकारः समाविशन्प्रविविशुः ॥ ६९ ॥ तांपांचालपुरींस्मारंमदनसंबंधिनं अद्भुतंयुगोद्य अलौकिकयुगकाण्डप्रान्तिः प्राप्तयुगंपटुःसमर्थःबंदिवृंदैःबंदिजनैः ॥ ७० ॥ द्यावाभूमीनिरुंधन्आकाशपृथिव्यौआच्छादयन् श्रेणिःपंक्तिःसीरपाणिः बलरामःस्वविनयगुरुणा स्वाभाविकविनयेनपूज्येनशौरिःश्रीकृष्णः द्विषद्वमतयेशत्रुजयापहालामद्यंहलंसारं हालाहलत्वंविषत्वम् ॥ ७१ ॥ बिभ्राणःधार्यमाणः दीप्रंदेदीप्यमानं कर्णत्रयंद्वौकर्णौराधेयश्चमनोज्ञंसुन्दरं अंगेषुअवयवेषु २ अंगदेशेषुअनुबिंबायितं प्रतिबिंबवदाचरितम्॥७२॥ परितःकीर्णैःआमक्षितैः सौरभःसुगंधःअवनींद्रः राजाआलिह्यमानं बध्यमानम् ॥७३॥ निमिषत्प्रभावकाशात्ययः संकुचत्कमलावासस्थाननाशः सोमःचंद्रःइंद.वरंनीलकमलं श्रीःलक्ष्मीःरंगस्थलीसभा ॥ ७४ ॥ द्युतिःकांतिःतटाकःसरोवरं चक्रयुगुलंचक्रवाकयुग्मंविजघटेबहुदूरम् विपुक्तंबभूव ॥ ७५ ॥ सदसिसभायांमहीसुरःविप्रः वामेतरःदक्षिणः वासवनंदनःअर्जुनःसपदितत्क्षणेउद्दल्गनंबहिर्निर्गमनम् ॥ ७६ ॥

(गद्यम्) तावत्सरभसमुपेत्यसाक्षादादेष्टुमनाःप्रद्युम्नइवधृष्टद्युम्नः सायकैः साकंसकाशमुपनीतंस्वयंवरदिदृक्षयासपरिवारंप्रत्यासन्नमिवपन्नगपतिंचापंपुरस्कृत्यकन्यावलोकनधन्यान्राजन्यानेवमवादीत् ॥ २२ ॥

आदेष्टुमनाःआज्ञापयितुमनाः प्रद्युम्नःकामःदिदृक्षयाद्रष्टुमिच्छया पन्नगपतिःवासुकिःसकाशमुपनीतंसमीपमानीतंधन्यःकृतार्थःराजन्यःक्षत्रियः ॥ २२ ॥

(पद्यम्) बाणेनसंप्रतिनृपादिविलक्ष्यमेतत्तच्छायवद्भुविनिपातयितुंपटुर्यः ॥ मौर्वीमिमामिवसदक्षिणएवपाणौकुर्यात्सवसारमभदर्श्यममस्वसारम् ॥७७॥ इत्थंप्रगल्भमुदितारभसेनपीठादुत्थायचापमुपसृत्यकरेऽपिकृत्वा ॥ आत्मानमेवकृतयत्नमनैपुणीतिमौर्वीलतांनतुमहीपतिपंक्तयस्ताः ॥ ७८ ॥ दृष्ट्वाथराजकमिदंद्विजमध्यसंघान्निर्गत्यसंसदिनिलिंपपतेःकुमारः ॥ चापेशरंकरधृतेसमधत्तलज्जांभूपेषुभूरिकुनुकंपुरुपेंद्रपुत्र्याम् ॥ ७९ ॥ वीरेणतेनविशिखैर्नविलूनमूलंचक्रभ्रमेणपतयाल्लुनदाशरथ्यम् ॥ आस्मिन्समाजवलयेत्वयमेवदोष्मानित्याहिताभिनयलीलमिवाबभामे ॥ ८० ॥ निष्पतत्सुरकल्पांजलिपुंजात्पुष्पवर्षमभितःकुरुवीरम्॥

मंदह्रासः निविक्रमलक्ष्म्याःसंदधेसकलचेनमिवृद्धिम् ॥ ८१ ॥
पांचालपुत्रीप्रहिताःकटाक्षाःपांडोस्तनूजंपरितोववल्गुः ॥ मांग
ल्यमालावतरेदिहेतिमाध्वीलिहःपूर्वमिवोपयाताः ॥८२॥ जन
नांतरनेत्रवारिसृष्टत्रिपथाहेमपयोजगुंफितेव ॥ बलवैरिभुवस्त
याऽधिकंठंवरणेचंपकमालिकावितेने ॥ ८३ ॥

दिविनभसिलक्ष्यं लक्ष्यंकर्म तच्छायवत् तच्छायातत्प्रतिबिंबंतद्वत् दक्षिणएवपाणौ कुर्यात् पाणिग्रहणंकुर्यात्स्वसारंस्वबलंस्वसारंभगिनीं (पाणिःहस्तः) ॥ ७७ ॥ रभसेनवेगेन पीठंआसनंआर्तिपीडा २ धुनुष्कोटिंमहीपतिपंक्तिःराज्ञांसमूहः ॥७८॥ राजकंराजवर्गनिलिंपपतिःइंद्रः कुतुकंसमधत्तआश्चर्यं स्थापयामास पुरुपेंद्रपुत्रीद्रौपदी ॥ ७९ ॥ विशिखःबाणः विलूनंच्छिन्नंपतयालुपतनशीलं शरव्यंलक्ष्यंवलयमंडलं दोष्मानविजयशालीलीलाचेष्टा ॥ ८० ॥ पुंजःसमूहःकुरुवीरः अर्जुनःवर्षवृष्टिअभितः आसमंतात् ॥ ८१ ॥ प्रहितःप्रेषितःपरितोववल्गुः समंतात्बभ्रमुः उपयाताःमाध्वीलिहःआगताःभ्रमराः ॥ ८२ ॥ नेत्रवारिसृष्टंनेत्राश्रूत्पादितं त्रिपथाभागीरथीहेमपयोजंसुवर्णकमलंबलवैरिभूः अर्जुनःअधिकंठंवितेनेकंठेस्थापिता ॥ ८३ ॥

(गद्यम्) तदनुसमहावीराग्रेसरःसमग्रगुणशेखरितांनरपतिसुतामि वशरासनलतामुद्वहन्राज्ञांबलमवज्ञायसभांगणान्निश्चक्राम ॥ ॥२३॥ तदात्वएवखलोपमखिलानस्माननतिस्मयेनविस्मरन्कस्मैचिद्दुहितरंविप्रायप्रायच्छदितिद्रुतंद्रुपदायद्रोहमुंचिद्यतःकतिचनराजन्यान्जन्याभिमुखान्प्रतिमुखभोन्मेपेणसरभसभुजोच्चीतैरुपवीतैःकंठमावेष्ट्यममायंपष्टेर्ममायंविष्टरस्यलक्ष्यमितिजातिचापलंकुर्वाणान्धरणिगीर्वाणान्भवतांपुनराशीरेवजयराशीकरणायालमितिसस्मितंमिवर्तयन्नमर्त्यपतिकुमारोयुधिसमारोपितधनुर्गुणनिरर्गलनिर्गलितेनशरनिकरेणतेषांपरेषामधिकांदिशिदिशिकांदिशीकतांदिदेश ॥ २४ ॥ तावदस्यराजसंघस्यजंघालतामनुकुर्वद्भिरिवरथार्वद्भिरपरार्णवाभ्यर्णमवतीर्णवतितूर्णमर्णोजबंधौतेननिःहनांदीमिमपरइवनांदयितामनुरंजयन्नयमपिधनंजयस्तामेववामभ्रुवमाससाद ॥ २५ ॥

धीराग्रेसरःवीरश्रेष्ठः समग्रगुणशेखरितामकलगुणसंपन्ना अवज्ञायअवगणयित्वा निश्शंकामनिर्जगाम ॥ २३ ॥ तदात्वेतत्काले अयंखलुःराजाद्रुपदःस्मयःगर्वःदुहितरं कन्यां प्रायच्छत्ददौउन्निद्रयतःप्रगटयतःजन्यंयुद्धंराजन्यः क्षत्रियःउन्नीतोपवीतंऊर्ध्वनीतंयज्ञोपवीतंविष्टरंआसनंचापलंअविचारंधरणीगीर्वाणः विप्रःआशीआशीर्वादः अलंसमर्थः अमर्त्याःदेवाःनिरर्गलंअप्रतिबंधंनिकरःसमूहः कांदिशीकतांदिदेशपलायनंददौ ॥ २४ ॥ जंघालःवेगवान्अर्वःअश्वः अपरार्णवाभ्यर्णमवतीर्णवान् पश्चिमसागरसमीपप्रांतंगतः अस्तंगतःअर्णोजबंधुःसूर्यःअपरः धनंजयःअग्निःवासभुवमासमादनिवासस्थानं ( कुलालगृहं ) प्राप ॥ २५ ॥

( पद्यम् ) स्वेदांबुभिर्निटिलजैःपदयोःसवित्रीमार्द्रीचकारसतया सहचापपाणिः ॥ मोदांबुभिर्नयनजैस्तमियंचमौलौविस्मेरचेतसिकुलालवधूसमाजे ॥ ८४ ॥ कुवलयदृशःकुंभंजिग्युःकुचैरितिभाषितैःकरिवरशिरःकर्मेत्येवंप्रहृष्टमनाश्चिरम् ॥ द्रुपददुहितुर्दृष्ट्वातुंगौकुलालपतिःकुचौनिजमपिघटंनिश्चित्यैवंनितांतमलज्जत ॥ ८५ ॥ अन्येद्युर्गृहमुपनीयपूजितांस्तान्व्यासोक्त्याविदितवरःपुरामरातेः ॥ पंचापिक्षितिपतिनंदनान्सुतायाःपांचालोनिशिपरिणीतयेऽनुमेने ॥ ८६ ॥

निटिलजःभालप्रांतोत्पन्नः सवित्रीमार्द्रीचकारकुतींननाम मौलिचूडाविस्मेरचेतःआश्चर्यचेतः ॥ ८४ ॥ कुवलयंकमलं करिवरशिरःहस्तीकुंभंकटःतुंगंउच्चंनितांतं अत्यंतं ॥ ८५ ॥ व्यासोक्त्याविदितः व्यासमहर्षिवचनेनज्ञातः अरातिःशंकरःपरिणीतयेनुमेनेपाणिग्रहणार्थंअनुमोदंदत्तवान् ॥ ८६ ॥

(गद्यम्) ततःपरमीदृशोत्सवश्रवणात्परमानंदमनुभवंतीभिरंतःपुरकाभिःपरिवृतांतांसखीजनामंडनमंडपिकामुपनीयप्रसाधयितुमारभंत ॥ २६ ॥

ईदृशोत्सवःस्वयंवरोत्सवः अंतःपुरकाभिःअंतःपुरस्त्रीभिः मंडनमंडपिकाप्रसाधनस्थलमंडपंप्रसाधयितुंअलंकर्तुम् ॥ २६ ॥

( पद्यम् ) द्रौपद्याःपंचपत्नीत्वेद्रष्टुंलिपिमिवोत्सुका ॥ सीमंतांशिल्पव्याजेनशिरोजान्व्यभजत्सखी ॥ ८७ ॥ मृगमदतिलकंर

राजनन्व्यामुखशशिनोमहमावलाह्नायाः ॥ चिकुरमिषजुषोप राधशांत्यैनभितमपत्यमिवांधकारबंद्याः ॥ ८८ ॥ अधिनासिका शिखरमाकलितंनवमौक्तिकंनरपतेर्दुहितुः ॥ शुशुभेमुखांबुरुह मध्यचरस्मितहंसिकाजनितमंडमिव ॥ ८९ ॥ सुतरांजनमोदमा दधानेमृदृशोमौक्तिकरत्नकर्णपत्रे ॥ परिचेतुमिवाननेंदुसेवांपरि वेषस्यशिशूसमीपभाजौ ॥ ९० ॥ ताटंकेतरलमणिप्रभातरंगेत न्वंग्यामुखमभितस्तदाव्यभानाम् ॥ मूर्तत्वंप्रकटमुपेत्यजागरू केवर्णेद्वेनयनविपाठयोरिवांत्ये ॥ ९१ ॥ सख्याःकरोंजनविधौस कृदेवगंतुमापांगभागमपटुःश्रममानशेयः ॥ रेखावधेरनवगामित याद्दृगंशंपूर्वोक्तमेवसपुनःपुनरालल्बे ॥ ९२ ॥

लिपिंविधिलिखितं सीमंतशिल्पंकेशवेषकौशलं शिरोजान्व्यभजत् केशानुपसार यामास॥८७॥ मृगमदःकस्तूरीतन्वीकृशांगी चिकुरःकेशःबंद्याःकारागृहवासिन्याः८८ नासिकशिखरं नासिकाग्रंआकलितंस्थापितं मुखांबुरुहंमुखकमलं जनितंप्रसूतम॥८९॥ जनमोदमादधानेजनहर्षकुर्वाते परिचेतुमिवअभ्यसितुमिव आननेंदुःमुखचंद्रःपरिवेषः परिधिःसमीपभाजःसमीपेस्थितः ॥ ९० ॥ ताटंककर्णपत्रं तरलःचंचलःतन्वंगीद्रौपदी अभितःउभयभागेव्यभातां शुशुभाते उपेत्यप्राप्यजागरूकेअंत्येद्वेवर्णे विद्यमानौत्पठ कारौनयनविपाठः नयनबाणः ॥ ९१ ॥ अंजनविधिःकज्जलप्रक्षेपकरणं सकृत्एकवा रंअपांगःनेत्रकटाक्षः अपटुःअशक्तःआनशेप्रापअनवगामितयाअज्ञतयापूर्वोक्तं आलल्बे ऽबलंबितांजनंस्वीचकार ॥ ९२ ॥

सकलमपिवपुर्विभूष्यतन्व्याःसपदिसखीविपुलेक्षणांबुजापि ॥ चिरतरमनवेक्ष्यमध्ययष्टिंकरधृतकांचनकांचिरेवतस्थौ ॥९३॥ कांचीकलापमणिबिंबितपार्श्वयोषित्कौशेयपंक्तिरवनींद्रसुताब भासे ॥ आविर्भविष्यदधिगोष्ठिकटीनिमग्नंवासःशतंजनदृशामि वसूचयंती ॥ ९४ ॥ आतंकपीडामददांपुराहमस्याद्भुतंमाविपु यल्लभेषु ॥ एवंविचिंत्येवभयेनपादेलाक्षाकृतंधामपपाततन्व्याः॥ ॥ ९५ ॥ तस्याःसखीपुलकलास्वपितत्तदंगवेगाद्विभूषितवतीषु

विवाहवेषैः ॥ कालक्षिपासहनवृद्धपुरोहितानां कोपस्यपात्रम भवत्कुचशिल्पकर्त्री ॥ १६ ॥

वपुर्विभूष्यतनूंभूषयित्वा सपदिसभार्यां कांचनकांचिःसुवर्णकांचिः ॥ १३ ॥ विं वितंमविविंबितंयोषित्स्त्री कौशेयःपीतांबरादिमहद्वस्त्रंअवनींद्रः द्रुपदः अधिगोष्ठिसभाम ध्यभागे निमग्नंवासःनिलीयस्थितंवासः ॥ १४ ॥ आतंकःतापःवल्लभःपतिःधामकांतिः तन्व्याःद्रौपद्याः ॥ १५ ॥ तदंगंद्रौपद्याःअंगंविवाहवेषः विवाहोचितवेषः का-ळाक्षिपासहनः सुमुहूर्तकालक्षेपासहिष्णुः शिल्पकर्त्रीपत्रलेखनकर्त्री ॥ १६ ॥

(गद्यम्) एवमलंकृतामेनामवलोक्यस्वयमपिसंध्यारुणिमसंपादितलाक्षाकृत्यामंजनतिलकमंजुलमुखभागांपरिणेतुमिवप्रतिचींदिशमुपगतवतिभगवतिभासांनिधौ ॥ २७ ॥

एनांद्रुपदजां संध्यारुणिम्नासंध्यारागेणलाक्षाकृत्यंलाक्षारसलेपनं अंजनःदिग्गजविशेषःअंजनंकज्जलंमुखभागः अग्रभागःभासांनिधिःसूर्यः ॥ २७ ॥

(पद्यम्) तस्यामेवक्षपायांसपदिनिजकुलोत्तंसपार्थोत्सवानाम्भालोकायेवसाक्षाद्विशतिहिमरुचौद्यांशुभंयौमुहूर्ते ॥ सोपानैरध्यरुक्षन्मणिगणखचितैर्वेदिमेतेकुमाराःसालंकाराःपुरोधःसरभसनिहितैःसंविधानैःसमग्राम् ॥ १७ ॥

क्षपारात्रिःकुलोत्तंसः कुलश्रेष्ठः हिमरुचिःचंद्रः शुभंयुःशुभान्वितःवेदिंअध्यरुक्षन् करग्रहणस्थलंआरोहणंकृतवंतः संविधानंविवाहोपकरणम् ॥ १७ ॥

(ग०) तत्रमुहूर्तगुणेष्विवसमंतादोजायमानेषुदीपेषुमंत्रविदांवदनेष्विवशब्दायमानेषुवाद्येषुकुलपालिकाः कमनीयमणिनिकायकोरकितैःकनकभूषणैरविकृतसहजरमणीयकांकन्यकाममीषांसकाशेनिवेशयामासुः ॥ २८॥

ओजायमानःप्रकाशयुक्तः मंत्रवित्ब्राह्मणः कुलपालिकाकुलस्त्री कमनीयमणिनिकायकोरकितः सुंदररत्नादिमणिसमूहविशिष्टः सकाशेसमीपेनिवेशयामासुः स्थापयामासुः ॥ २८ ॥

(पद्यम्) पूतपार्श्वैःकुशांकूरैःपुरस्तान्मणिकुट्टिमे ॥ प्राज्वलत्तस्यधौम्यस्यप्रतिबिंबमिवानलः ॥ १८ ॥ धर्मान्मजाश्चवह्निसंचि

नुतानयेतिशाम्यत्समिच्चटचटाकृतिभिर्ब्रुवाणः ॥ तामात्मजांद्रु पदराजइवानलोऽपिप्रादादिवोन्नतशिखाग्रकरेणतेभ्यः ॥९९॥ अथजातुपालयसमर्पणात्कृतंपरिपोषमस्यवपुषोऽभिवीक्षितुम्॥ स्पृहयालवःकिलपृथासुताःक्रमात्परिचक्रमुर्हुतवहंवधूसखाः ॥ ॥१००॥ कठिनत्वसंपदवलेपभरात्कुचकुड्मलस्यकुरुवीरवधूः॥ कृतनिर्जयेवपतिपाणिधृतंपदमश्मनःशिरसिसानिदधे ॥१०१॥ कन्यकाभ्युपहृताविधिलाजाःकंदलत्यनलरोचिषिपेतुः॥पंचवल्ल भकराग्रविमर्दाद्वाहुवंशगलिताइवमुक्ताः ॥ १०२ ॥ विधिचोद नासुमणिदीपयष्टिकास्पुरदिंदिराप्रतिकृतैश्चसुभ्रुवः ॥ उभयोर्वि वेचनविधौपुरोधसस्खलनंबभूवनतुमंत्रतंत्रयोः ॥ ३॥ बाहुप्रता पइवसार्क्षिणहव्यवाहेसामंतराजधरणेरिवयाज्ञसेन्याः ॥ कांक्षा समंक्रमशएवकरंगृहीत्वाहर्षेणवृद्धिमभजन्नवनींद्रपुत्राः ॥ ४ ॥

कुशःदर्भःमणिकुट्टिमे रत्नवेदिकायां धौम्यःऋषिविशेषः ॥ ९८ ॥ प्रजासंवविः संचिनुतसंपादयत शाम्यत्समित्चटचटाकृतिः ज्वलत्समिच्चटचटात्कारः अनलःअग्निः प्रादाद्विवदत्तवानिव ॥९९॥ जातुपालयंलाक्षागृहंवपुः शरीरंवधूसखाःस्त्रीसहायाः हुत वहःअग्निःपरिचक्रमुः प्रदक्षिणंचक्रुः ॥ १०० ॥ कठिणत्वसंपदवलेपभरात् गर्वातिश यात्कुरुवीरवधूःद्रौपदीअश्मनः शिरसिनिदधेपाषाणोपरिस्थापयामास ॥ १०१ ॥ विधिलाजाःअभ्युपहृताः शास्त्रकर्मयुक्ताःलाजाःहुताः अर्चिषुपेतुःज्वालासुअपतन्वंशः वेणुः ॥ १०२ ॥ चोदनाप्रेरणाइंदिरालक्ष्मीः प्रतिकृतिःप्रतिबिंबंसुभ्रूःद्रौपदी॥१०३॥ हव्यवाहःअग्निःसामंतः मांडलिकःकरःहस्तः २ करभागःवृद्धिमभजन्अभ्युदयंस्वीचक्रुः अवनींद्रःराजापांडुः ॥ १०४ ॥

पांचालराजश्चसपांडवश्चपुष्यत्तमौपूज्यकपूज्यभावम् ॥ आढ्यं भविष्णुत्वमकिंचनत्वंव्यत्ययस्यतांताविवयौतकैःस्वैः ॥ १०५॥

पुष्यत्तमःसमृद्धिनपंतः आढ्यंभविष्णुत्वंसमृद्धत्वंअकिंचनत्वंदारिद्र्यं व्यत्यस्यतां विपर्यासं कुर्वतां यौतकः पारिबर्हः ॥ १०५ ॥

( गद्यम् ) एवमंतरिक्षनिक्षिप्तलक्ष्यवेधलक्षणेनशुल्कनिष्केणनि जकंठनिष्कायितकन्यासृजलतानेतान्पथिकौंतेयानवगंतारोद्रुर-

हंनारोपितनिवर्तनमतयोविकर्तनतनयोपायविधेयैःसहायैः सहसं मंत्र्यप्रसमारब्धपूर्वस्ययुद्धपलायनाध्ययनस्यद्वितीयावृत्तिविच्छि त्तिपरिजिहीर्षमाणाइवशकुनिभागिनेयाःसेनापुरःसरनिस्साणनि स्सारितनिस्वानललितैःक्ष्वेडितैःक्षालितगवाक्षमौनरौक्ष्यंद्रुपदन गरंपुनरपिनिर्वार्यनिरुच्छ्वासयांचक्रुः॥ तत्क्षणमेवसत्वरंनिर्गत्वरे षुविविधैरायुधैरशून्येषुद्रुपदसैन्येषु ॥ २९ ॥

लक्ष्यवेधलक्षणंमत्स्यवेधरूपं निष्कंपद्कंशुल्कनिष्कंकन्यार्थदेयंधनं अवगंताज्ञाता आरोपितंउत्पादितं निवर्तनंनाशःविकर्तनतनयः कर्णःविधेयःवश्यः विच्छित्तिविस्मरणं परिजिहीर्षापरिहर्तुमिच्छा शकुनिभागिनेयाः दुर्योधनप्रभृतिगांधारीपुत्राः निःसाणनिः सारितनिःस्वानः दुंदुभिप्रगटीकृतनादः ललितंमनोहरंक्ष्वेडितंसिंहनादः क्षालितगवाक्ष मौनरौक्ष्यंगवाक्षेषुप्रतिध्वनियुक्तमित्यर्थः निर्वार्यनिरुच्छ्वासयांचक्रुः वेष्टयित्वापौरजना नांप्रतिबंधंचक्रुःअशून्यःयुक्तः ॥ २९ ॥

(पद्यम्) पृथासुतास्तेऽपिरथाधिरूढाद्विधाविचार्यैवपुरान्निरीयुः॥ शरैर्विधातुंद्विषतोऽपिचूर्णास्तत्सुभ्रुवामप्यलकानचूर्णान् ॥ ६ ॥ शंखंदध्मुस्ताडयंतिस्मभेरीश्चक्रुःक्ष्वेडांचापनादंवितेनुः ॥ सि द्धादीनांघोसदांलालनीयेयुद्धारंभेतेद्वयेऽपिप्रवीराः॥ ७॥ अन योर्बलयोर्महारथानामवलोकायनभोजुषांसुरीणाम् ॥ सुदृशांच पुरस्यसौधभाजांवरणस्रग्विधृतैवभेदिकाऽभूत्॥८॥ आसीदता माशुधनुर्धराणामासीदताम्यत्करकौशलानाम् ॥ क्षणंमिथोबाण गणंनिरुध्यव्रणंविनातत्ररणंमहीयः ॥९॥ रथिकंरथिकोद्विरदंद्वि रदस्तुरगंतुरगःपदगंपदगः ॥ इतरेतरमेत्यरणंविदधौदिविनारदवि स्मयनाकनरुम् ॥ १० ॥ रजोंधकारेषुदृशोंधवत्सुकरैःकरान्कौतु कसूत्रचिह्नान् ॥ परामृशंतोयुधिपांडुपुत्राःपरस्परंपर्यहरन्प्रहा रान् ॥ ११ ॥ सोमकेष्वपसर्पत्सुसूर्यसूनोःशितैःशरैः ॥ कूजया मासकोदंडंकुलिशायुधनंदनः ॥ १२ ॥

निरीयुःनिर्जग्मुःद्विषःशत्रवः चूर्णान्विधातुंखंडान्कर्तुं सुभ्रुवांस्त्रीणांअलकान्केशान् अपूर्णान्सुगंधिद्रव्यरहितान्मृतभर्तृकानित्यर्थः ॥ १०६ ॥ वितेनुःचक्रुःघोसदांदेवा

नीलालनीयः ग्रहुंमियः ॥ १०७ ॥ नभोजुषाआकाशेमानासुरीअप्सरा सौधभाजां सौधेस्थितानां स्रक्पुष्पमाला ॥ १०८ ॥ आशुअतान्यत्शीघ्रंविकसत् महीपःमह नमम् ॥ १०९ ॥ द्विरदःहस्तीपद्गःपदातिः दिविनभसिनारदःदेवर्षिः विस्मयगाकत्त कः आश्चर्यकल्पवृक्षः बह्वाश्चर्यमित्यर्थः ॥ ११० ॥ रजःधूलिःअंधवत्सुअंधंकुर्वत्सु पर्य हरन्वर्जयामासुः ॥ १११ ॥ अपसर्पत्सुपृथग्गच्छत्सु सूर्यसूनुःकर्णःशितःतीक्ष्णः कोदं डंधनुःकूजयामास सनादंचकारकुलिशायुधःइंद्रः ॥ ११२ ॥

( गद्यम् ) तेनजननइवप्रधनेऽपिवृकोदरद्वितीयेनकरोदरपरिकर्मी कृतस्यकार्मुकस्यवर्मनिर्माथिभिःशरोर्मिभिर्निर्मितेर्मममर्माणोभय प्रसारिभिःस्वेदवारिभिःपदान्येवयानपदेऽभिषिंचंतःसमराजिरकं दलितपार्थयशश्चतुर्थीचंद्रावलोकनंपरिहर्तुमिवमुखंनिवर्त्यसौबले याःकेवलैरेवबाहुभिःकुरुपुटभेदनंप्रतिपलायांबभूवुः ॥ ३० ॥

प्रधनंयुद्धंवृकोदरः भीमःद्वितीयःसहायः करोदरंकरमध्यंपरिकर्मीकृतंधृतं वर्मकव चंनिर्माथिभिःभेदिभिः शरोर्मिःबाणलहरी इर्ममर्माणिप्राणांतकव्रणानि स्वेदवारिःघर्म जलंयानपदं पलायनस्थानंसमराजिकंदलितं युद्धेप्रसृतंसौबलेयाःदुर्योधनादयः कुरुपु टभेदनंहस्तिनापुरंप्रतिपलायांबभूवुःपलायनंचक्रुः ॥ ३० ॥

( पद्यम् ) बीभत्सुचापविहतेषुमहत्सुकर्मस्वेकंदृढंजगृहिरेयुधिधा र्तराष्ट्राः ॥ वीक्ष्यस्थितेषुविमतेषुविलोलजीवंपृष्ठंप्रकाश्यगममंपृ थुनाजवेन ॥ १३ ॥ विजयात्परमेतेषामृजवोप्यरिभीषणाः ॥ सद्योगुणाःसमुन्नेमुरवनेमुस्तुधन्विनाम् ॥ १४ ॥ तेनिवृत्त्यनगरं समाविशन्भूषिताद्रुपदराजपूजया ॥ अप्यशेषजनकेनशौरिणा जन्यभावमुपजग्मुपासमम् ॥१५॥ पार्थएवसहजेष्वखिलेषुप्राय शोयुधिबलंश्रुतवत्याः ॥ अन्वभूदधिकमीक्षणवृष्टेराजकोशमिव राजसुतायाः ॥१६॥ वृत्तांतमेवमवकर्ण्यसराजवृद्धःक्षत्रासका शमुपनीयसहानुजातैः ॥ धर्मात्मजायधुरिकंसभिदोर्धमागादन्व र्थतामथविभज्यददौस्वनाम्नः ॥ १७ ॥ तस्मिन्नाहितलक्षणेनर पतौराज्याभिषिक्तेसतिस्वान्यक्षीणिदधुर्यदंबुशिशिरंल्लिप्तांगके कुंकुमैः ॥ रागंयद्दिभरांबभूवुरवहन्यद्धूर्णितेवंदिभिर्निष्पंदत्वमतः स्वदृष्टिरितितंपौराविवव्रुःस्फुटम् ॥ १८ ॥

बीभत्सुःअर्जुनःविवृतंप्रकटितं धार्तराष्ट्राःजगृहिरेदुर्योधनादिधृतराष्ट्रपुत्राः स्वीचक्रुः वीक्ष्यदृष्ट्वाविमतः शत्रुःविलोलंचंचलंपृष्ठंपृष्ठभागंप्रकाश्यदर्शयित्वा जवःवेगः ॥११३॥ विजयात्परमेतेषां विजयोत्तरपांडवानांऋजवः सरलाअरिभीषणाःशत्रुभयदायकाः स- घोसमुच्चेमुःतत्कालंवृद्धिंजग्मुः धन्विनांधनुर्धराणां अवनेमुः अवतीर्णाबभूवुः ॥११४॥ तेपांडवाःसमाविशन्प्रविविशुः उपजग्मुषाप्राप्तवताशौरिणाकृष्णेन जन्यभावंउत्पाद्यत्वं २ वरस्पर्शस्निग्धत्वम् ॥ ११५ ॥ सहजःबंधुःईक्षणवृष्टिः नेत्रकटाक्षवर्षणंआर्जकः धनसंपादकःराजसुताद्रौपदी ॥ ११६ ॥ अवकर्ण्यश्रुत्वाराजवृद्धः वृद्धराजाधृतराष्ट्रः क्षत्ता विदुरेणसहानुजातैःबंधुभिःसह सकाशमुपनीय स्वसमीपेआनीय धुरिपुरतःकंसभित् श्रीकृष्णःस्वनाम्नः अर्धभागःविभज्य ( धृतराष्ट्रइतिस्वनाम ) अर्धराष्ट्रदानेनराष्ट्रपालकत्वंददौ ॥ ११७ ॥ आहितलक्षणेगुणप्रख्याते अक्षीणिनेत्रेशिशिरांबुंआनंदप्रदंशीतोदकंरागंप्रेम २ रक्तवर्णविभराबभूवुःदधुः अवहन्दधुःनिष्पंदजंमौनं पौराःपुरजनाः विवव्रुःप्रकटीचक्रुः ॥ ११८ ॥

इत्यनन्तभट्टकृतभारतचंप्वां
द्वितीयस्तबकः समाप्तः ॥

---

## अथ तृतीयस्तवकः ॥

पितृव्यवाचाऽथपृथातनूजोहरिंपुरोधायसमंबलौघैः ॥
परस्परस्नेहमिवैषगातुंप्रस्थंययौखांडवशब्दपूर्वम् ॥ १ ॥

पितृव्यवाचाधृतराष्ट्राज्ञया बलौघःसेनासमूहःपरस्परस्नेहः अन्योन्यप्रीतिःखांडवशब्दपूर्वंप्रस्थंखांडवप्रस्थम् ॥ १ ॥

( गद्यम् ) तत्रवनीभवतिवनीपकजनमनीषितपूरकपुरुकुलावनीपसुरसुरभिगोष्ठीगौष्ठीनेदेशेप्रविश्यस्मरणमात्रनयनपात्रेणसकलशिल्पपारदृश्वकर्मणाविश्वकर्मणानिर्मापितंकामनीयकविलोकनसुलभविस्मयभारगुरुतरानमरानमरान्वोढुमक्षमतयाक्षमातलमवलंबमानैर्विमानैरिवकुरुविंदमणिमंदिरैरभ्रंलिहंजंभरिपुनिदेशेनलंभिततन्नामोपपदंहरिप्रस्थमधिष्ठिताययुधिष्ठिरायविनिवेद्य स्वपुरेऽपिसुषमामीदृशींपरीक्षितुमिवस्यंदनेनयदुनंदनेनप्रययै ॥१॥

वनीपकःयाचकः मनीषितंमनेप्सितंअवनीपः राजासुरसुरभिगोष्ठीकामधेनुसंघः गो
ष्ठीनंगोस्थानं नयनपात्रंसाक्षाद्वलोकनं कामनीयंरमणीयंविस्मयभारःआश्चर्यातिशयः
वोढुंवहनंकर्तुमक्षमताअसमर्थताक्ष्मापृथ्वीअवलंबमानः तिष्ठन्कुरुविंदमणिःपद्मरागरत्नं
जंभरिपुःइंद्रःतन्नामोपपदं इंद्रइतिपूर्वपदंयस्यतत् हरिप्रस्थंइंद्रप्रस्थंविनिवेश्यसमर्प्य सुप
मापरमाशोभा प्रययेप्रयाणंकृतवान् ॥ १ ॥

(पृ०) प्राणायमानमहिलानथपांडुपुत्रान्क्षोणीविमाननुजिघृक्षुर
पारभूमा ॥ एणाजिनेनघटितोद्गमनीयकृत्योवीणानिनादरसिको
मुनिराविरासीत् ॥२॥ तपोनिधेरागमनेनसद्यः सभाविभोःस्तब्ध
जनारवापि॥ वीणारवानुद्रुतभृंगमालाकोलाहलैर्घोपितदिङ्मुखा
ऽभूत्॥३॥दृष्ट्वान्नृपोदेवमुनिंविनीतोमौलिस्रजांधूलिमधूलिवृंदैः॥
सपंकमाधायतमांघ्रियुग्मेविपंकमात्मानमयंव्यतानीत् ॥ ४ ॥

प्राणायमानमहिलाप्राणप्रियाद्रौपदी क्षोणीपृथ्वीअनुजिघृक्षुःप्रसादंकर्तुमिच्छुः भू
माश्रेष्ठत्वंएणाजिनं मृगचर्मउद्गमनीयंधौतवस्त्रयुग्मं मुनिराविरासीत्नारदःप्रत्यक्षोबभू
व ॥ २ ॥ तपोनिधिःनारदः विभुःराजाजनारवःलोकशब्दः अनुद्रुताअनुलक्ष्यागता
दिङ्मुखंआसमंतात्प्रदेशः ॥ ३ ॥ विनीतःविनयशीलःमौलिस्रजांधूलिमधूलिः मुकुटमा
लापरागमकरंदः विपंकंकर्दमरहितं २ निष्पापंव्यतानीत्अकरोत् ॥ ४ ॥

मेध्यांबृसीमधिगतस्यविरिंचिसूनोरास्थायसन्निधिमुदारमुदांकुरू
णाम् ॥ तस्याद्भुतागमनहेतुपरिच्छिदायांचित्तानिदूरपथवर्तन
तामवापुः ॥५॥ निकुंचितेतेनधृतानिजांकेविपंचिकामौनमवा
प्यतस्थौ॥पांचालिकावंदनवादशैलीमाधुर्यमाकर्ण्यविलज्जितेव
॥६॥ राज्ञामुनासमुचितेषुसभाजनेषुपात्रैश्चपाणिविधृतैश्चपलैश्च
वेत्रैः ॥ निर्वर्तितेषुरभसेननिवर्तितेषुस्मित्वामिथोगिरमभाषतधा
तृसूनुः ॥ ७ ॥ लाक्षागृहाद्यदच्याविसाक्षाद्दिवरतिःप्रिया ॥ य
द्यवाहिचयुष्माभिस्तद्द्वयंहिसतांमुदे ॥ ८ ॥ स्वतोभातमतीनां
वःकुतोवान्यानुशासनम् ॥ मौनंतुसुहृदाख्येयेदूनंवक्तारमावहेत्॥९॥

मेध्यांबृसीपवित्रतृणासनं विरिंचिसूनुःनारदःउदारमुद्महान्हर्षः परिच्छिदानिर्णयः
॥५॥निकुंचितंसंकुचितंविपंचिकावीणा वादशैलीवाग्रीतिःआकर्ण्यश्रुत्वा॥६॥विपाणि

विधृतंहस्तेधृतं रभसेननिवारितःवेगेनअपसारितः स्मितंईषद्धास्यंमिथोगिरंरहसिभाषणं धातृसूनुःनारदः ॥ ७ ॥ अच्याविनिर्गवंरतिः प्रियारतिरिवसुंदरीस्त्रीसतांमुदंहि साधूनांहर्षांचैव ॥ ८ ॥ स्वतोभाताआत्मनैवस्फुरद्रूपाअनुशासनंशिक्षा दूनमावहेत् संकुर्यात् ॥ ९ ॥

अष्टमीकिलशिखावधूरियंभातियाजमखवेदिबर्हिषः ॥ यूयमभ्रसरिताद्दृतान्वयाःपावनःखलुभवत्समागमः ॥ १० ॥ जाययाचपतिभिश्चकदाचिज्जायतेस्मनहिदंपतिशब्दः ॥ अद्भुतस्यखलुतस्यजगत्यामर्थतामनुभवंतिभवंतः ॥ ११ ॥ एकस्मैस्पृहयालूनामिष्टायसुधियामपि ॥ करस्थमेवब्रुवतेकल्हंनिधनावधिम् ॥ १२ ॥ सुंदोपसुंदौसहजावभीकौसुरेष्विवक्कापिसुरांगनायाम् ॥ अन्योन्यमाहत्यपुरायमस्यमनोभवेषोरिवलक्ष्यमास्ताम्॥१३॥ तत्सौभ्रात्रशरव्यस्यद्वैधीकरणकेलये॥ भवतांमारचापेषूभवतांमावधूकृते ॥ १४ ॥

शिखाज्वालायाजमखवेदिः याजार्थयज्ञकुंडंबर्हिःअग्निः अभ्रसरित् आकाशगंगावृतान्वयःस्वीकृतवंशः ॥ १० ॥ एकस्यबह्व्योजायाभवंति नैकस्यांबहवःसहपतयइतिअद्भुतं लोकविलक्षणंजगत्यां लोकेअर्थताअभिधेयता ॥ ११ ॥ सुधीः विचारशीलःइष्टंप्रियं करस्थंसुलभंनिधनावधिंप्राणान्तम् ॥ १२ ॥ अभीकःकामुकःसुरांगनातिलोत्तमा आहत्यताडयित्वामनोभवेषुः मदनबाणःयमस्यलक्ष्यमास्तांमृतौ ॥ १३ ॥ सौभात्रशरव्यद्वैधीकरणं बंधुत्वरूपलक्ष्यभेदनं मारःमदनःमाभवत्नभवेत् ॥ १४ ॥

(गद्यम्) इतिरहस्यंतपस्विनिदेशंशुभोदर्कंतर्कयंतस्तेकौंतेयास्तस्यैवसमक्षमसिधारासगंधांसंधामिमामाबबंधुः ॥ २ ॥ एनेवयंचातकाइवजीवनमयंवर्षमेकैकमवलंब्यप्रिययासममनयासुखेनवत्स्यामस्तथाभूतेष्वस्मासुयोमिथुनकृतोपवेशोदेशोदृशाविप्रविशेत्सोयंद्विजिनंविहातुमजिनंपरिधायसुकृतसार्थसमर्थापकतीर्थपरिपूष्टास्वष्टासुदिक्षुतत्रिगुणसंख्याकानूपक्षान्प्रक्षिपेदिति ॥ ३ ॥

रहस्यंएकांतकथनं तपस्विनेर्देशःनारदाज्ञाउदर्कः भाविफलंसगंधातुल्यासंधांप्रतिज्ञामाबबंधुः चक्रुः ॥ २ ॥ वर्षंसंवत्सरं २ वृष्टिंअवलंब्यस्वीकृत्य मिथुनकृतोपवेशःस्त्र

पुरुषसंबंधः दृशाप्रविशेत्नेत्रेणईक्षेत् वृजिनंनियमातिक्रमपापंविहातुं परिहारयितुंअजिनंमृगचर्म सुकृतसमर्थापकंपुण्यसंपादकंपरिपुष्टापुक्ता त्रिगुणसंख्याकान्पक्षान्प्रक्षिपेत् एकवर्षंतीर्थाटनंकुर्यात् ॥ ३ ॥

(पद्यम्) राजानिदेशकृदभूदितिधातृसूनोरंतर्मुदोनिरवधेरिदमासचिह्नम्॥यत्तस्यपाणिरकरोन्मृदुकंठगीतेर्वीणागुणेविवशरिंखणमंगुलीनाम् ॥ १५ ॥ तस्मिन्नभःसरणिमुत्पतितेमुनींद्रेसातेषुपंचसुसमंवद्गतेमृगाक्षी॥ सांक्रंदनेषुविटपिष्विवदानलक्ष्मीर्मानोभवेषुजयसिद्धिरिवाश्रुगेषु ॥१६॥ विप्रःकश्चनतत्रजात्वथभुजावुद्धृत्यचौरैर्हृतागावोमेनिखिलाहृतोस्मिविधिनावत्सोऽपिनोशिष्यते॥ राजन्राज्यमिदंविमुंचवसुधांशास्मीतिसर्वानिमान्किंवाह्रासयसीतिरोषकटुवाग्द्वारंययौभूपतेः ॥१७॥ दृष्ट्वातंमधुरस्मितोऽथविजयः कृत्वासनादुत्थितिंनत्वांघ्रौसमवेक्ष्यभृत्यमिहमांब्रह्मन्सहस्वक्षणम् ॥ गावस्तेस्वयमाव्रजेयुरधुनेत्याश्वास्यदस्यून्पुरः प्राविक्षन्मनसाततस्तुनृपतेःशस्त्रायगेहंस्वयम् ॥ १८ ॥ तत्रतेनजगृहेतरस्विनाचक्षुषानृपतिरंगनासखः॥ पाणिनाचसशरंशरासनंपूर्तयेसपदिविप्रवासयोः ॥१९॥ विनिर्गतोसौविशिखानिवस्वकान्विमुक्तजीवान्विरचय्यतस्करान् ॥ नितांतवेगामिवगोपरंपरांनिवर्तयामासशुचंद्विजन्मनः ॥ २० ॥ प्रयाणमग्रेतदनुस्वमौलौपार्थस्यजज्ञेनियमाभिषेकः ॥ प्रागेवतीर्थोपगमात्पवित्रैर्बाष्पैर्नरेंद्रस्यवियोगभीरोः ॥ २१ ॥

निदेशकृदभूत्आज्ञानुगामीअभूत् धातृसूनुःनारदःअंतःहृदि निरवधिःसीमारहितः मुद्हर्षः पाणिःहस्तःविवशरिंखणंवादनार्थेचलनम् ॥१५॥ सरणिःमार्गःमृगाक्षीद्रौपदीसांक्रंदनविटपिःकल्पवृक्षः आशुगःबाणः ॥ १६ ॥ जातुकदाचित्हृतःनीतःगावःधेनवःविधिःदैवं शिष्यतेअवशिष्टोभवतिशास्मिपालयामि ह्रासयसिह्रासंकरोषि ॥१७॥ विजयःअर्जुनः आसनादुत्थितिंआसनोत्थानंभृत्यः दासः गावःधेनवःआव्रजेयुः आगमिष्यंतिशस्त्रायप्रविक्षत् शस्त्रमानेतुंप्रवेशंकृतवान् नृपतिःधर्मराजा ॥ १८ ॥ तेनजगृहेअर्जुनेनदृष्टःतरस्वीवेगवान् अंगनासखःद्रौपदीसहितःशरासनंधनुःसपदिएककालेनपूर्तिः

पूर्णता विप्रवासः देशांतरप्रवासः ( विप्रवासम् विप्रगृहम् ) ॥ १९ ॥ स्वकान् विशिखान् स्वकीयबाणान् ( विमुक्तजीवः मुक्तप्राणः २ मुक्तमौर्वी विरचय्य- कृत्वातस्करःचोरः गोपरंपराधेनुसंघःशुचंनिवर्तयामास शोकंअपहृतवान् ॥ २० ॥ तदनुतदनंतरंमौलौमूर्धनि अभिषेकःस्नानंबाष्पनेत्रोदकं नरेंद्रःधर्मराजाभीरुः भयशीलः ॥ २१ ॥

( गद्यम् ) सधीरधीरत्युच्छ्रितेनकृच्छ्रेणराज्ञोगृहीताभ्यनुज्ञोवल्कलंघनंकल्कलंघनायपरिधायमलयानिलइवमनुष्यधर्मणाराजन्वतींकाष्ठांप्रतिष्ठमानस्तपःप्रसादितस्यभगवतोभवानीवल्लभस्यसाक्षात्कृपामिवभगीरथरथानुसारिणींतरंगिणीमुपगम्यतत्रपवित्रासुवीचिषुसायंतननियमायकृचोघमर्षणीर्जपन्मज्जनमकार्षीत्॥४॥

अत्युच्छ्रितंमहत् अभ्यनुज्ञाआज्ञाकल्कंपापंमलयानिलः दक्षिणवायुःमनुष्यधर्माकुबेरः राजन्वतीप्रतिपालिताकाष्ठादिक् भवानीपार्वतीअनुसारिणीगमनकर्त्री तरंगिणानदी ( भागिरथी ) वीचिःलहरीसायंतनः सायंकालीनः ॥ ४ ॥

( पद्यम् ) नालीकात्कुवलयसंक्रमेस्खलित्वामग्नाधः पयसिरमेव तत्रकाचित् ॥ तंदृष्ट्वाभुजगसुतामिथोरिरंसुःसंतुष्टाहृदयमिवानयत्स्वगेहम् ॥२२ ॥ प्रत्त्दृष्यत्तद्दितत्रैषामनुष्यंफणिनांरतैः ॥ संतर्पयितुमुत्सेहेकंदर्पसममर्जुनम् ॥ २३ ॥ भोगायतस्याभुजगेंद्रपुत्र्याःफूत्कारएवस्फुटसीत्क्रियासीत्॥कस्तूरिकांकोऽजनिकंठकांतिःफणामणिःपल्लवशेखरोऽभूत् ॥ २४ ॥ पाण्योर्ज्यामर्शकाठिण्यंतस्यतत्कुचमर्दने ॥ तस्याश्चतन्मुखास्वादेफलायाभूद्विजिह्वता ॥ २५ ॥

नालीकात्कमलात् कुवलयसंक्रमःकमलोद्गमनं रमालक्ष्मीभुजगसुता नागकन्या उलूपीतंपार्थं मिथोरिरंसुरेकांतेक्रीडांकर्तुमिच्छुः ॥ २२ ॥ प्रहृष्यमहाहर्षंप्राप्यरतिः मदनोत्सवः एषाउत्सेहेउलूपीउत्कंठिताबभूव कंदर्पःमदनः ॥ २३ ॥ कस्तूरिकांकः कस्तूरीलेपः अजनिजातःपल्लवशेखरः पल्लवावतंसः॥२४॥ पाणिर्हस्तःज्यामर्शेनगुणस्पर्शेन मुखास्वादःगृहणकर्म ॥ २५ ॥

सुखाचक्षुःश्रवस्तन्व्याःसुरतेमीलनंदृशोः ॥ चक्रेभणितवै
दग्धींतस्यकाननकौमुदीम् ॥ २६ ॥ श्लाघाकंपात्प्रियरतेः
शिरसोंतःपथादधः ॥ च्युतोमणिरिवेरावान्प्रुपवेतनयस्तथा
॥ २७ ॥ इत्येकिकांसरजनीमपनीयतत्रश्वासैःसमंस्वकुलसंभव
पृष्ठमित्रैः ॥ मुक्तस्तयातटगतोनुचरान्द्विजातीनंतर्वतोद्गुनरसैरत
नोत्स्ववृत्त्या ॥ २८ ॥ उलूपिकायारतिदंशनैस्तैरुन्मस्तकंमोह
मिवापनेतुम् ॥ उदग्रवीर्यौषधिजन्मभूमिमुमागुरुंशैलमयंप्रपेदे
॥ २९ ॥ फालस्यपंचविशिखेपदयोः कृतांतेहासस्यदानवपुरेष्व
वलोकनस्य ॥ शंवायुधेपशुपतेरपदानपद्यंगायंतिसिद्धमिथुना
न्यश्रृणोत्सतस्मिन् ॥ ३० ॥

चक्षुश्रवस्तन्वीउलूपी भणितंरतिकूजितंवैदग्धींचातुर्यं अरण्यचंद्रिकांव्यर्थामित्यर्थः ॥ २६ ॥ प्रियरतिःअर्जुनसंवंधः अंतःपथात्शरीरांतर्मार्गात् च्युतोमणिःभ्रष्टंफणारत्नं ॥ २७ ॥ स्वकुलसंभवपृष्ठमित्रैः स्वकुलंउलूपीकुलंतत्संभवाः सर्पाःतेषांपृष्ठमित्रैःपृष्ठस दृशैःदीर्घैरित्यर्थः द्विजातीन्विप्रान्अंतर्वतः स्थूलोदरान्अतनोत्चकारवृत्तिः चरित्रम् ॥ २८ ॥ रतिदंशनैःसुरतक्रीडायांदंतक्षतैः उन्मस्तकंमोहंशाखामूर्च्छां उदग्रवीर्यमह त्सामर्थ्यंजन्मभूमिः उत्पत्तिस्थानंउमागुरुः पार्वतीपिताहिमवान्शैलः पर्वतः ॥ २९ ॥ फालंललाटंपंचविशिखः मदनःदानवपुरःत्रिपुरासुरः शंवायुधःइंद्रःपशुपतिःशंकरःअप दानंकर्मवृत्तम् ॥ ३० ॥

( गद्यम् ) तत्रतत्रसतस्यहिमाचलस्यखुरपुटविनिमयविन्यासचं
द्रकितैरवतारपथैर्रापरोमंथफेनशकलतारकितैःप्रतीरनमेरुनलोप
वेशैरप्यनुमेयहरवृषभस्वैरविहारासुकटकसरसीषुवृजिनानिर्विशो
ध्यवनमदावलकलभविदलिततरलसरलद्रुमप्रवालपरिमलसुरभि
लेनोपत्यकावर्त्मनादिविभुविभरणकुशलाभ्यांमहेंद्राभ्यांपरिगृही
तांहरितमवजगाहे ॥ ५ ॥

चंद्रकितंचंद्रसदृशचिह्नं अवतारपथःअभ्यंतरगमनमार्गः रोमंथःचर्वितचर्वणशक लंखंडंनमेरुः वृक्षविशेषःसरसीसरोवरं वृजिनंपातकंविशोध्यप्रक्षालयित्वा मदावलकलभः गजशिशुः विदलितंभग्नंउपत्यकावर्त्मना पर्वतसमीपमार्गेण महेंद्रः पर्वतविशेषःपरिगृही तांहरितंप्राचींदिशम् ॥ ५ ॥

(पद्यम्) पंफुल्यमाननवकेतकपांसुगर्भैःपर्यंतनिर्झरजलैःकलिता
भिषेकः॥पार्थःसतत्रजनकाभिधयेवदृष्टःपादेचिरंपरिचचारगिरिं
महेंद्रम् ॥ ३१॥ जलधितटपदव्याझर्झरैश्चीरशब्दैरवमयमनुकुर्वं
न्राजतालीवनानाम् ॥ रतिपतिरथकारेणाद्रिणालांछितयांदि
शिविविधतटिन्यांदत्तचक्षुःप्रतस्थे ॥ ३२ ॥ शैलोगर्भैशिशुरिव
भुवःशासनाद्यस्यशेतेवातापिंयोजठरदहनेवर्तयामासहव्यम् ॥
क्षोणीनग्नंकरणमहिमाकोपलेशोयदीयस्तस्यावासंदिशमभिययौ
तापसस्येंद्रसूनुः ॥ ३३ ॥ धृत्वाफलेषुसलिलानिकवेरजायाःसा
म्यंपरीक्षितुमिवाभ्रसरिद्गुणौघैः ॥अभ्रंलिहैर्निविडितांतटनारिके
लैरालोक्यचोलवसुधामयमभ्यनंदत् ॥ ३४ ॥ वाराशिवासजड
मात्मवपुर्विशोषमानेनुमातपभरात्तटमुत्तरेण ॥ लंकामिवागतव
तींनिजपौरवर्जंपार्थोविवेशनगरीमथपांड्यगुप्ताम् ॥ ३५ ॥

केतकीपांसुःकेतकपुष्पपरागः पर्यंतःप्रांतभागःकलिताभिषेकः कृतस्नानः पार्थःअर्जुनःपादः प्रत्यंतपर्वतः २ चरणःपरिचचारवभ्राम ॥ ३१ ॥ जलधीसमुद्रःपदवीमार्गः चीरंवल्कलंराजतालीवनं तालवृक्षवनंरतिपतिरथकारः सुगंधोत्पादकःअद्रिः मलयाचलइत्यर्थः लांछितंयुक्तंतटिनीनदी ॥ ३२ ॥ शैलःविंध्याचलःशेतेतिष्ठति जठरदहनः जठराग्निः वातापिंहव्यंवर्तयामास वातापिंभक्षयित्वाक्षोणीनग्नं करणमहिमापृथ्वींसमुद्रवस्त्ररहितं करणप्रभावोयस्यसःअगस्त्यः आवासंअभिययौवासस्थलंजगाम ॥ ३३॥ कवेरजायाकावेरीअभ्रसरित् आकाशगंगाअभ्रंलिहैः गगनचुंबितैःनिविडिताव्याप्ताचोलवसुधाचोलदेशः ॥ ३४ ॥ वाराशिःसमुद्रःविशोषः शुष्कत्वंआतपभरःसूर्यतापातिशयः निजपौरवर्जंलंकाराक्षसरहितालंका पांड्यगुप्तापांड्यराज्ञारक्षिता ॥ ३५ ॥

तत्रचित्रांगदातेनव्यूढाराजकुमारिका॥दर्शनेदौत्यदातौचद्दयोरा
सीदनंगदा ॥३६॥ एलालवंगतरुपिप्पलिकापटीरतांबूलिकाक्रमु
कदंपतिभावरम्याम् ॥ उद्यानभूमिमुपगम्यतयासपार्थःसुष्व्य
न्पितुःपदममन्यतवल्वजेभ्यः ॥ ३७॥ दिवसेशुभंयुगुणकोरकि
तेदयितंत्त्दिदिस्थितमिवार्तिमती ॥ अवतार्यसाप्रसुविकुमारमभाद
तवभ्रुवाहनइतिप्रथितम् ॥ ३८ ॥

व्यूढापाणिग्रहणंकृतादौहृदार्तिः गर्भपीडाअनंगदाअंगद-( भूषण ) रहिता २ कामदा त्री ॥ ३६ ॥ दंपतिभावःजायापतिभावः उपगम्यगत्वापितुःपदंइंद्रपदंवल्वजेभ्यः तृणवत् ॥ ३७ ॥ कोरकितंपुलकंआर्तिमतीगर्भवतीदयितः अर्जुनःप्रथितंख्यातम् ॥३८॥

( गद्यम् ) इतितत्रदिनानिकानिचिदुषित्वाप्रयामीतिभाषितस्य पक्ष्मावलंबिबाष्पमेवोत्तरयंतींप्रेयसींरहसिदृढालिंगनतरंगितवल्कलोत्तरीयमर्मरसहाध्यायिसीत्कारंपुलकझर्झरेकपोलेपरिचुंब्यतस्याः कथंचिदुदंचितानुमतिर्निर्गत्यरक्षोयोधिभिरिक्ष्वाकुपतिसेनाध्यक्षैरुत्पाटितानांमलयदर्दुरमहेंद्रपादानांमूलशिलातलपरिदृश्यमानकठिनतरतत्करांगुलिनखरेखाव्यावर्तितकुलिशभयोच्चालितशैलसंस्थानबुद्धिभिः सन्निवेशावटैः स्थपुटितामटवींविलंघ्यपुत्रीन्यक्काररुषापुलस्त्यान्वयस्यपुरीमुन्मूलयितुंप्रसारितेन भुवोभुजेनेवसेतुनाकृतसीमंतमुदन्वंतमभजत ॥ ६ ॥

उषित्वावासंकृत्वा प्रयामिअहंगमनंकरोमि बाष्पमेवोत्तरयंतीवियोगशोकाद्रुदतीमेयसीप्रियाचित्रांगदा सहाध्यायीसहगच्छतः कथंचिदुदंचितानुमतिः अतिदुःखोत्पन्नमनुमोदनं इक्ष्वाकुपतिसेनाध्यक्षः मारुतिःव्यावर्तितंनिवर्तितं कुलिशंवज्रसन्निवेशावट स्थपुटिता स्थितिर्गतनतोन्नताअटवीअरण्यं पुत्रीन्यक्काररुषा रावणकृतकन्याछलक्रोधेन पुलस्त्यान्वयस्यपुरी राक्षसकुलनगरीलंका सीमंतोदन्वान्दक्षिणसमुद्रः ॥ ६ ॥

( पद्यम् ) समीक्ष्यसेतुंरघुवीरनिर्मितंसचित्रभित्तीकृतधीर्धनंजयः॥
दिनेशवंशस्यतपोविचारणेचिरावकाशंवितनारचेतसे ॥ ३९ ॥
अब्धौवानरपातिताचलशिलाभंगाभिघातैश्चिरादक्ष्णांधैः कुणिभिःकरेणचपदाखंजैःपयोमानुषैः ॥ वीचीवेदिपुकीर्त्यमानमनघंवृत्तंरघूणांप्रभोः श्लाघंश्लाघमसौतटेनहरितंप्राचेतसीमभ्यगात् ॥४०॥गोकर्णमेत्यसकुलाद्रिसुताप्रियस्यपुष्पाणिमूर्ध्निनिदधेपुरुहूतसूनुः ॥ आगामिनांनिजशरासनताडनानामत्रावकाशइतिसूचयतेवदोष्णा ॥ ४१ ॥ पापापनोदेफलितेऽर्जुनस्यप्रागेवसेतोरवलोकनेन ॥ प्रभासतीर्थेनियमावगाहःपश्चात्सुभद्रागमहेतुरासीत् ॥ ४२ ॥

रघुवीरःरामचंद्रः चित्रंआश्चर्यं २ आलेख्यंसचित्रभित्तीकृतधीः आश्चर्ययुक्तावुद्धिः दिनेशवंशः सूर्यवंशःचिरावकाशंवितताखहुकालं विचारंकृतवान् ॥ ३९ ॥ अन्धौ पातितःसमुद्रेत्यक्तः शिलाभंगाभिघातःशिलाखंडप्रहारः अक्ष्णांधःनेत्ररहितः करेणकु णिर्हस्तरहितः पादखंजःचरणरहितःपयोमानुषः जलमनुष्यःवीचिःलहरी अनघंनिष्पा पंवृत्तंचरितं प्राचेतसींहरितंअभ्यगात् प्रतीचींदिशंजगाम ॥ ४० ॥ कुलाद्रिसुताप्रियः शंकरःपुरुहूतसूनुःअर्जुनः आगामिभाविदोष्णाभुजेन ॥४१॥ पापापनोदःपापनाशः फलितंसिद्धंअवगाहःस्नानंसुभद्रागमहेतुःसुभद्रास्त्रीप्राप्तिहेतुः२कल्याणप्राप्तिहेतुः॥४२॥

(पाठांतरं) पापापनुत्यैपरिकल्पितोयःप्रभासतीर्थेप्रथितेभिषेकः॥
सेतुंद्दशास्पृष्टवतोस्यसोऽसौसाध्यंविनाजागरितोत्रभूव ॥ ४३ ॥
गोपृष्ठलग्नंकुलशैलकन्यासहायमंतःसततंदधानः ॥ आश्चर्यमैक्षि
ष्टतमेवदेवंगोकर्णवासंकुरुराजसूनुः ॥ ४४ ॥ ततोघनाविर्भवना
द्भियेवतत्रामलंमानसमस्यभेजे ॥ कर्णांतरक्रौंचपथेनशोभाय
शोमरालोयदुकन्यकायाः ॥ ४५ ॥ स्मृतिपथास्थितयापिसुभद्र
याजनसमक्षमिवासितुमात्तभीः ॥ द्विजकुलानिसतत्रसमत्यज
त्सहचराणिरतीशवशंवदः ॥ ४६ ॥

पापापनुत्तिः पापनाशः प्रथितंख्यातंस्पृष्टवान्दृष्टवान् साध्यंविनाजागरि तोवभूवतीर्थस्नानंव्यर्थमभूत् ॥ ४३ ॥ गोपृष्ठलग्नःवृषभपृष्ठस्थितः कुलशैलकन्यासहा यःशंकरःअंतः मनसिऐक्षिष्टदृष्टवान् गोकर्णवासःगोःधेन्वाः कर्णेवासोयस्यसः २ गो कर्णसंज्ञकक्षेत्रेवासोयस्यसः ॥ ४४ ॥ घनाविर्भवनान्मेघकालप्रादुर्भावात् भियाभये नअमलंनिर्मलंपापरहितं मानसंचित्तंमानससरोवरं क्रौंचपथःक्रौंचपर्वतमार्गःमरालःरा जहंसः यदुकन्यकासुभद्रा ॥ ४५ ॥ स्मृतिपथस्थिताचिंतनविषयीभूता आत्त भीःलोकापवादभयं द्विजकुलंब्राह्मणसमूहः रतीशःमदनःवशंवदः वशोजातः ॥ ४६ ॥

पयसापरिपूरितौघटौपरिपश्यन्पथिपाकशासनिः ॥ कमलाक्षक
नीयसीकुचौकलयामासकरस्थिताविव ॥ ४७ ॥ तदानींखलु ॥
चक्रांगीमदपश्यतोहरचलच्छंपासमुन्मेषणैः पुष्पत्केतकगंधसिं
धुविलुठत्पुष्पंधयांधीकृतैः ॥ मेदस्वीकृतकेकिनीकलरवैर्मेघंकरा
शामुखैः पांथानामपमृत्युभिःकतिपयैःप्रादुर्बभूवेदिनैः ॥ ४८ ॥

पंथामार्गःपथः उद्कंपाकशासनिः अर्जुनःकमलाक्षकनीयसीश्रीकृष्णकनिष्ठभगिनी सुभद्रा कलयामासनिश्चितवान् ॥४७॥ चक्रांगीचक्रवाकी पश्यतोहरःचोरः शंपासमुन्मेषणंविद्युदाविर्भवनं सिंधुःसमुद्रःपुष्पंधयःभ्रमरः अंधीकृतंमलिनंकृतं मेदस्वीकृतामीमपुष्टाकेकिनीमयूरी मेघंकराशामुखंमेघोत्पादकदिङ्मुखम् ॥ ४८ ॥

कालांबुदालिनलिकात्क्षणदीप्तिवर्त्यासंधुक्षितात्सपदिसध्वनिभिः सरद्भिः ॥ वर्षाश्मसीसगुलिकानिकरैःकठोरैर्घर्माभियातिमवधी द्घनकालयोधः ॥ ४९ ॥ माध्वीलिहाविरुरुचेमलिनीकृताग्राकां तारसीम्निनवकेतकबर्हरेखा ॥ दग्ध्वांचलेस्मरभियादयिताजने नसंप्रेषितापथिकभर्तृपुपत्रिकेव ॥ ५०॥ अर्जुनेपुसकलेपुविका सिष्वद्रिसीम्निधृततादृशशब्दः ॥ एकएवविशुशोषविशेषादेतदं बुभृदनेहसिचित्रम् ॥ ५१ ॥ वियत्यशेषासुविदिक्षुदिक्षुवियो गशिल्पींद्रविनिर्मितायाः ॥ तस्याम्मृगाक्ष्याश्चतडित्ततेश्चधनंजयः संविविदेनभेदम् ॥५२॥ मन्मथेज्वलतिवासवसूनुर्मानसेपरिणये यदुपुत्र्याः ॥ लाजवापमिवकर्तुमुपेंद्रंतत्सगर्भ्यमथाचित्तमनैषीत् ॥ ५३ ॥ अणुमात्रमिदंसहेतवोढुंनहिविश्वंभरमद्यमामितीव ॥ मनसोप्यवरुह्यतस्यदृष्टेःपुरतःप्रादुरभूत्पुमान्पुराणः ॥ ५४ ॥ स्वस्वचेष्टाकथानद्याद्वितीयर्तुगुणज्ञया ॥ नवभूवेतयोस्तत्रनय नानंदिनोर्मिथः ॥ ५५ ॥ विजयोमधुरस्मितस्यभावंविदुपस्त स्यमतेनाभिक्षुवेषः ॥ कुसुमास्त्रभयादिवातिगूढःकुहरेरैवतकस्य तिष्ठतिस्म ॥ ५६ ॥ कथंसुभद्राकमनीयतायाःकल्पेतनुत्यैकवि रुन्नतोऽपि ॥ चतुर्थमप्याश्रममस्ययेनतांसाधनीभूयदिदृक्षतेस्म ॥५७॥ तदात्वएवाद्रितटात्पतिःश्रियःपरिप्लवंतंप्रकृतेशुभागमे ॥ यदाशयेतेशयएवतद्भवेदितिब्रुवन्द्वारवतींपुनर्ययौ ॥ ५८ ॥

कालांबुदालिःकृष्णमेघपंक्तिः क्षणदीप्तिःविद्युत्संधुक्षितः दीपितः ध्वनिःशब्दःवर्षाश्मानःकरकाःघर्माभियातिः निदाघशत्रुःअवधीत्हंतिस्म ॥ ४९ ॥ माध्वीलिहाःभ्रमराः सोम्निमार्गे बर्हरेखापत्रपंक्तिः अंचलंअग्रंस्मरभीःमदनभयम् ॥ ५० ॥ अर्जुनःअर्जुनवृक्षः अद्रिसीम्निरैवतकगिरिप्रांते विशुशोषएतच्चित्रंशुष्कोऽभूत् इतिआश्चर्यअंबुभृदनेहसि

मेघकाले ॥ ५१ ॥ विपतिनभसिअशेषः सकलःशिल्पींद्रविनिर्मितः चित्रकारोत्पादितः मृगाक्षीसुभद्रातद्भित्तितिः विद्युत्पंक्तिः संविविज्ञातवान् ॥ ५२ ॥ यदुपुत्रीसुभद्रा लाजवापं लाजाहोमं सगर्भ्यःकृष्णंअनैषीत्आनीतवान् ॥ ५३ ॥ इदंमनःवोढुंवहनं कर्तुंनहिसहेतनशक्तंभवत्पुरतःप्रादुरभूत् अग्रभागेप्रगटोऽभूत् पुराणःपुमान् पुराणपुरुषः श्रीकृष्णः ॥ ५४ ॥ चेष्टावृत्तं द्वितीयर्तुगुणज्ञाशुष्का ( द्वितीयर्तुर्ग्रीष्मर्तुःतस्य गुणःशोषः ) तयोः श्रीकृष्णार्जुनयोः ॥ ५५ ॥ भावं अभिप्रायंविदुषःज्ञातुः कुसुमास्त्रभयंमदनभयंगूढःगुप्तः कुहरेतिष्ठतिस्मगुहायांतस्थौ ॥ ५६ ॥ कमनीयतासौंदर्यं कल्पेतसमर्थोभवेत् नुतिःवर्णनंउन्नतःश्रेष्ठःचतुर्थाश्रमंसन्यासं तांदक्षतेस्म नपुंसकमपिसुभद्रांद्रष्टुमिच्छतिस्म ॥ ५७ ॥ अद्रिःपर्वतः श्रियःपतिः श्रीकृष्णःपरिप्लवंसंदिग्धं प्रकृतेवर्तमानेशुभागमः सुभद्राप्राप्तिः यदाशयेयन्मनसिवर्ततेतत्शयेएवभवेत् हस्तगतमेवभवेत् ॥ ५८ ॥

( गद्यम् ) तदनंतरमहस्करमदनस्करमहोमहान्मस्करीरैवतकगिरेरुपस्कुरुतेतस्यनमस्करणमस्मांकंश्रेयस्करणमितिपुरोधोजनबोधनात्कुतूहलिनाहलिनानगरमानीयमानंबहिरपिज्वलताविरहानलज्वालेनेवकाषायवाससावगुण्ठितवपुषंसव्यसाचिशब्दमत्सरेण स्मरवीरेणप्रवासरंध्रमन्विष्यपन्नगपांड्ययदुकुमारिकाणांकृतेपृथक्पृथगीरितांत्रिशरकांडीमिवत्रिदंडींबिभ्राणंनिजपल्लवकोमलिमनिर्जयशोकादिवशुष्केणपटीरतरुणापादुकीभूयपरिचर्यमाणपादयुगलंतंभावनाभिक्षुंसंभ्रमेणवंदमानेषुयदुवृंदेषुमुकुंदोऽपिसविनयमुपागतश्चेतःपूरणावशेषैःस्वसोदरीप्रेमरसैरिवतीर्थजलैःपिचंडिलंकमंडलुंतदीयपाणेरादायभगवन्नितइतइतिराजभवममुपनीय कन्यांतःपुरेनिवेशयामास ॥ ७ ॥

अहस्करमदनस्करः सूर्यमदापहारकः महामस्करीतेजोयुक्तःयतिः उपस्कुरुते अलंकुरुते पुरोधजनाः पुरोहितःहलीबलरामः काषायवाससावगुंठितं काषायवस्त्रवेष्टितं सव्यसाचीसव्यहस्तेनापिधनुः साचीकर्तुंसमर्थः अर्जुनः रंध्रमन्विष्यप्रतिकूलसमयमृगित्वाईरिताःमुक्ताः कांडःदण्डः ( त्रयाणांशरकाण्डानांसमाहारःत्रिशरकांडी ) कोमलिमामृदुत्वंपटीरःचंदनःपरिचर्यासेवा भावनाभिक्षुकंकपटयतिं संभ्रमः त्वरा यदुवृंदःया

वृषसमूहः मुकुंदः श्रीकृष्णःस्वसोदरीस्वभगनीसुभद्राजलपिचंडिलंजलपूर्णपाणेराद्रष हस्तात् गृहीत्वा ॥ ७ ॥

( पद्यम् ) मार्गेशरत्त्रयममुष्यकृतेविमुच्यशेषंद्वयंपुनरिवोझ्झितु मात्तलोभः ॥ शुश्रूषितुंतदनुसोदरचोदितायास्तन्व्याःस्मरोनय नमेवशरंव्यतानीत् ॥ ५९ ॥ वपुषामधुरेणसुभ्रुवाधनुषाचित्तभु वाचतर्जितः ॥ तपसेवदिनेदिनेतनोस्तनिमानंजगृहेसमस्करी ॥ ६० ॥ प्रतिनिःश्वसितेदीर्घेपाणिनानासिकांस्पृशन् ॥ भावया मासपार्थोयंप्राणायामसमापनम् ॥ ६१ ॥ प्रणवोच्चरणेपुरःप्रसर्प त्प्रबभासेयतिनस्तदाऽधरोष्ठम् ॥ मुहुरग्रगतावनींद्रपुत्रीमुखमा स्वादयितुंकिलोज्जिहानम् ॥ ६२ ॥ कन्याकरेमृद्गतिपादपद्मंपु ष्यंतिगात्रेपुलकांकुराणि ॥ हरेहरेमाधवमाधवेतिहरिस्मृतेरन्यथ यांचकार ॥ ६३ ॥

उझ्झितमात्तलोभः मोकुंसंजातलोभः सोदरचोदिता वलरामकृष्णप्रेरितातन्वीसुभ द्राव्यतानीत्मुक्तवान् ॥ ५९ ॥ सुभ्रुवाधनुषातर्जितःसुरूपेणचापेणभर्त्सितःचित्तभूः मदनःतनिमानंजगृहेकृशत्वंस्वीचकारमस्करीयतिः ॥ ६० ॥ प्राणायामसमापनंभाव यामासप्राणायामंज्ञापयामास ॥ ६१ ॥ प्रणवोच्चरणेपुरः प्रसर्पत् ओंकारोच्चरणेअ- ग्रेगच्छत् यतिनःअर्जुनस्यप्रबभासेप्रशुशुभेमुहुः वारंवारंउज्जीहानं यत्नंकुर्वत् ॥ ६२ ॥ मृद्गतीमर्दनंकुर्वती गात्रंशरीरं हरिस्मृतेरन्यथयांचकार हरिस्मरणात् हेत्वंतरंमदर्श यामास ॥ ६३ ॥

( गद्यम् ) एकदानिर्वर्त्यप्रत्यवसानकृत्यंप्रतिक्षणमिक्षुचापक्षुरप्र संधुक्षणेनसमंतात्पतितैः सत्वगुणशकलैरिवस्वेदबिंदुभिव्याकी र्णांचामूरवीत्वचमध्यास्यविश्राम्यंतंतंधवित्रेणवीजयंतीसुभद्रातै स्तैरिंगितैस्तस्ययतित्वेसंशय्यनतत्वंजिज्ञासयासविनयमनुरहसि व्यजिज्ञपत् ॥ ८ ॥

प्रत्यवसानकृत्यंनिर्वर्त्यभोजनंकृत्वाइक्षुचापःमदनःक्षुरप्रःतीक्ष्णबाणः संधुक्षणंवक्षणं शकलंखंडंत्वचमध्यास्यत्वचर्माधिष्ठायधवित्रंमृगचर्मव्यजनं इंगितंचेष्टाअनुरहसिव्यजिज्ञ पत् पश्चात् एकांतेविज्ञापयामास ॥ ८ ॥

(पद्यम्) तपस्विन्नद्यमेप्रीतिस्त्वाभ्यागमसंभवा ॥ कन्यामौनाव
कीर्णित्वेकल्पशाखाशिखायते ॥६४॥ इदानीममी ॥ यदवः ख
लुपुण्यराशयोयतिनामिंद्रतवांघ्रिसंगमे ॥ शिरसान्यदवाप्यतेर
जोमनसान्यत्परिवर्ज्यतेचयैः ॥ ६५ ॥ भगवन्निखिलंविबुध्यसे
परमार्थवदभाविमेशुभम् ॥ प्रयतायतयोभवद्विधाःप्रणिधानेन
हिदिव्यचक्षुषः ॥ ६६ ॥ अवकर्ण्यतदेषमीलितःक्षणमक्ष्णोःप्र
तिवाचमाददे ॥ बहुनाकिमयिस्त्वकैर्गुणैर्विजयंप्राप्स्यसियोषितां
कुले ॥ ६७ ॥ पादांगुष्ठनखंयस्तेभालेकुर्याद्विशेषकम् ॥ सनरो
पिस्मेरेणार्तःसद्यःस्यादामिषंदृशोः ॥ ६८ ॥

अभ्यागमात् संभवःउत्पत्तिःयस्याःसाअभ्यागमसंभवाकन्यामौनावकीर्णित्वं कन्यो
चितमौनेव्रतत्यागः कल्पशाखाकल्पवृक्षस्यशाखाशिखायतेमंजरीवदाचरतिपदार्थपूर्ण
त्वंकरोति ॥ ६४ ॥ अंघ्रिसंगमः चरणसेवारजःधूलिः २ पापम् ॥ ६५ ॥ अखिलं
सर्वंविबुध्यसेजानासि भाविशुभंपरमार्थं भविष्यत्कल्याणंप्रयतः पवित्रःभवद्विधःत्व
त्समानःप्रणिधानंसमाधियोगः दिव्यचक्षुःज्ञानवान् ॥ ६६ ॥ प्रतिवाचमाददेप्रत्युत्तर
मुवाच विजयः अर्जुनःजयःयोषितांकुलंस्त्रीसमूहः ॥ ६७ ॥ विशेषकःतिलकः नरोऽपि
मनुष्योऽपि २ नरावतारधृतार्जुनोऽपि आर्तिःपीडाआमिषं भोग्यपदार्थः ॥ ६८ ॥

(गद्यम्) इतिसातस्यवक्रिमस्पृशावचसाश्रवसाचनिपीतपूर्वैस्तै
स्तैर्लक्षणैश्चसोयंयतिःसंक्रंदननंदनइतिनिश्चयमणिंहृदयपेटकपु
टेनिधायभगवन्भवदभिहितयोर्विजयनरशब्दयोःक्रमेणधर्मिपर
ताविशेषनामताचतवकृपयाभविनेतितस्मैव्रीडतरलनयनंवदनम
वनमयंतीतस्थे ॥ १ ॥

वक्रिमस्पृशाअर्थांतरभूतेननिपीतपूर्वंसादरश्रुतं संक्रंदननंदनः इंद्रपुत्रःअर्जुनः नि-
धायस्थापयित्वाअभिहितं उक्तं धर्मिपरताविशेषनामताधर्मिवाचकविशेषपुरुषः व्री-
डालज्जातरलंचंचलं वदनमवनमयंतीस्वहेतुंप्रकाशयामस ॥ १ ॥

(पद्यम्) यमेवमुद्दिश्यतवोक्तिभंगीसएषदासोस्म्यनुकंपनीयः ॥
इतिप्रकाश्यक्षणमर्जुनत्वंचुचुंबतांचोरयतिःकपोले ॥ ६९ ॥ स्वे
दांबुपूरभरितेसुदृशस्तुतस्याःक्षेत्रेस्वकिंशुकशिलीमुखसीरकृष्टे॥
पुष्पास्त्रकर्षकवरः पुलकच्छलेनशृंगारबीजनिकरान्निबिडानवा

प्सीत् ॥७०॥ तस्यामेववधूमिमांसरजनौसद्योनुकूलांरहःपाणौ कृत्यविलोकितोत्सवभरोद्वाभ्यांहरिभ्यामपि ॥ पौरेपूभयथाजने ष्ववलतांप्राप्तेषुपार्थस्तयाजाग्रत्सारथिविद्ययारहरथारूढःपुरान्नि र्ययौ ॥ ७१ ॥

भंगीरीतिः अनुकंपनीयः प्रसादपात्रः अर्जुनत्वंप्रकाश्यस्वरूपंप्रकटीकृत्यचोरपतिः कपटसंन्यासी ॥ ६९ ॥ भरितंव्याप्तंक्षेत्रंशरीरं २ केदारंकिंशुकशिलीमुखसीरः पला शरूपबाणएवलांगलं पुष्पास्त्रकर्षकवरः मदनकृषीवलश्रेष्ठः ॥ ७० ॥ वधूःसुभद्रारहः एकांतेपाणौकृत्यपाणिग्रहणंकृत्वा द्वाभ्यांहरिभ्यांइंद्रोपेंद्राभ्यां ( उपेंद्रःकृष्णः ) उभ यथाउभयप्रकारेण अबलतां निर्बलतां २ बलरामरहिततां जाग्रत्सारथिविद्यास्फुरद्रूपं सारथ्यम् ॥ ७१ ॥

आकर्ण्येदंजृंभितानांयदूनांपार्थोद्देशात्क्रोधनत्वस्यजातेः॥ म्ला निंदातुंमाधवोमाधवोभूद्यत्रायत्ताकौरवीसासमृद्धिः ॥ ७२ ॥ रणोत्साहेशांतेयदुजडिमकीर्तिध्वजलतांमुहुः स्मारस्मारंकपट यतितांवल्गितकुचम् ॥ हसंत्याप्रेयस्यादशनरुचिमित्रीकृत यशाःशतांगेनाविक्षत्सुरपतितनूजोनिजपुरीम् ॥ ७३ ॥ ततोमु हूर्तेसकलाभिनंद्येकुरूद्वहानांकुशलोदयाय ॥ सुतंसुभद्रासुषुवेऽ भिमन्युंप्रवीरसूस्तातमिवप्रवीरम् ॥ ७४ ॥ पांचालपुत्रीचपति व्रतानांप्रधानभावेकृतपट्टबंधा ॥ पंचापिसद्यःप्रतिभूरिवस्वान्प तीन्पितॄणामनृणानकार्षीत् ॥ ७५ ॥

जृंभितःयुद्धोद्योगवान्जातेः जातिवल्ल्याःमाधवःश्रीकृष्णःमाधवः वसंतर्तुःकौरवीकुरु वंशोत्पन्नसंबंधिनी२कुरवकवृक्षसंबंधिनी ॥७२॥ जडिमाबुद्धिमांद्यंमुहुः स्मारंस्मारंपुनः पुनःस्मृत्वावल्गितःचंचलःदशनरुचिःदंतकांतिःसुरपतितनूजः अर्जुनःशतांगंरथंनिजपुरीं अविक्षत् इंद्रप्रस्थंप्रविष्टवान् ॥ ७३ ॥ कुरूद्वहःकुरुश्रेष्ठःप्रवीरसूः महावीरप्रसववती तातमिवअर्जुनमिव ॥ ७४ ॥ पांचालपुत्रीद्रौपदीप्रधानभावः मुख्यत्वंपट्टबंधापट्टराज्ञी प्रतिभूः-( जामीन इतिमहाराष्ट्रभाषायाम् ) ॥ ७५ ॥

( गद्यम् ) अथनेपांतादृशंपुत्रोत्सवमाकर्ण्यकृतुर्वसंतमामंतोराज न्यसंबंधितयाहर्षादिवसमाजगाम॥तदानींभगवान्पवमानस्तुभी

मस्यमुतोत्पत्तिनिमित्ताशौचवत्तयालोकस्पर्शायसंकुचन्निवकति चनदिनानिमलयंविहायपदमेकमपिनचचाल ॥ १० ॥

सामंतःमांडलिकः राजन्यसंबंधितयाधर्मराजसंबंधेनतदानींवसंतकालेपवमानः वायुः उत्पत्तिनिमित्तशौचवत्ताजननाशौचम् ॥ १० ॥

( पद्यम् ) एतेनखल्वकरुणेनतपागमेनजीवातुरद्यममदेशतएवदूरात् ॥ उत्सारितोमधुरितीवरुषावनांतेतत्स्वागतंपरभृतोनसमाचचार ॥७६॥ शिरीषपंक्तेःकुरुकामिनीनांशरीरवल्यासहमार्दवेन॥ उपस्थिताभूदुपमातदानींतपःस्थितानांसुलभंहिसर्वम् ॥ ७७ ॥ कुरुकेलिवनेषुमल्लिकाकुसुमेषुभ्रमरावलीबभौ ॥ ऋतुनामधुगंधगुप्तयेजतुनाऽग्रेनिहितेवमुद्रणा ॥ ७८ ॥ शुभसौरभसंभृतानिभूमौशुचिभूतान्यपियानिपाटलानि ॥ कलयेयुरतीवचित्रभावंक्षणपीतानिदृशाकथंनतानि ॥७९॥ सीमंतविद्युदवतंसशिरीषचापंकैश्यंघनोयमितिकैःसुदृशांनजज्ञे ॥ तस्याधएवनिटिल्लेसततंयदासीत्तत्तादृशीसलिलशीकरदुर्दिनश्रीः ॥ ८० ॥ उग्रैःकरैरुष्णरुचेःसमंतादूष्मायमाणाखिलदिङ्मुखस्य ॥ आगंतुमह्नःसविधेस्वकालेप्यनीश्वरेवापससर्परात्रिः ॥ ८१॥ वर्षास्वियंत्वरितमस्मदुपांतभुमेरुन्मूलनंकलयतीतिरुषावलीढैः ॥ तीरद्रुमैःस्वनिकटादपसारितेवमध्यंजगामसरितांसलिलस्यवेणी ॥ ८२ ॥ देशेदेशेजडिमकुरंगास्तेजोभल्लैर्दिनकरभिल्ले ॥ धावंधावंप्रहरतिराज्ञांधारागेहंशरणमवापुः ॥ ८३ ॥ अंगांगसंगासहनेतपर्तावन्योन्यमेवाभिमुखायुवानः ॥ वाचापिकेचिन्मनसापिकेचिद्दृशापिकेचिद्दृढमालिलिंगुः ॥ ८४ ॥

अकरुणः निर्दयः २ पुष्परहितवृक्षयुक्तःतपागमः ग्रीष्मर्त्वागमनंजीवातुर्जीवनदाता मधुर्वसंतः रुषाक्रोधेनपरभृतः कोकिलः ॥ ७६ ॥ कुरुकामिनीनांद्रौपदीसुभद्रादिकुरुस्त्रीणांउपस्थिताभूत्उदिताभूत्तपस्थितः ग्रीष्मस्थितः२तपस्वी ॥७७॥ केलिवनंक्रीडोद्यानंमधुमकरंदःगुप्तिः संरक्षणंजतुमुद्रालाक्षामुद्राअग्रेनिहितंमुखेस्थापितम् ॥ ७८ ॥

शुभसौरभःपरमसुगंधः शुचिभूतंशुभ्रं २ ग्रीष्मोत्पन्नंपाटलं २ रक्तवर्णं २ पाटलपुष्पं चित्रंकलयेयुः आश्चर्यंदधुः चित्रभावंचित्रत्वंपीतंशाशितं २ पीतवर्णम् ॥ ७९ ॥ केश्यं केशकलापः जज्ञेज्ञातंसुदृशांसुंदरकामिनीनांघनःमेघः निटिलंललाटंदुर्दिनश्रीःमेघकाल शोभा ॥ ८० ॥ उष्णरुचिःततकरःसूर्यः अह्नःसविधेदिनस्यसमीपभागे अनीश्वरीअस मर्थाअपससर्पन्यूनभावंजगाम ॥८१॥ वर्षासुवर्षाकालेषुउपांतंसमीपं उन्मूलनंकलयति उन्मूलनंकरोतिरुषावलीढःक्रोधयुक्तः अपसारितःक्षिप्तःसरित्नदीवेणीप्रवाहः ॥ ८२ ॥ कुरंगः हरिणःतेजोभल्लः किरणबाणः दिकनरभिल्लःसूर्यरूपकिरातःधारागेहंजलमंदिरम् ॥ ८३ ॥ तपर्तुःग्रीष्मर्तुःअभिमुखःसंमुखःयुवानःतरुणस्त्रीपुरुषाः दृशापिदर्शनेनापिमन सामनश्चिंतनेन ॥ ८४ ॥

(गद्यम्) एवंपचेलिमांहेलिमयूखकठोरकेलिंतस्यतनयार्थेनिवेदितुकामाभिरिवरामाभिर्निरंतरोपान्तौ दृगध्वनिवसंतौवसंतरतिकांताविवजयंतजनकानंतरजकौंतेयौपरिपाटलहंसपाददुरवगाहवनजातसनाथेपाथसिरोधसिचविहारैस्तेषांदिनानामौपयिकमातिथ्यमापादयितुंभगवतींतामेवसरितमापतताम् ॥ ११ ॥

पचेलिमापूर्णांहेलिमयूखकठोरकेलिः सूर्यकिरणकठोरक्रीडातनयायमुनाकामःइच्छा रामास्त्रुंपरीउपान्तंसमंताद्भागंदृगध्वनिवसंतौमूर्तिमंतौ रतिकांतःमदनः जयंतजनकानं तरजःश्रीकृष्णःकौंतेयः अर्जुनःपाटलःरक्तवर्णःहंसपादःसूर्यकिरणः २ हंसचरणःदुरवगा हंनिविडंवनजातंकमलं२ वनसमूहःसनाथः सहितः औपयिकंउचितंआपततांगतौ॥११॥

(पद्यम्) कल्लोलवेगकपटेनकलिंदपुत्र्याःपादंप्रतिप्रसमृपेपरमस्यपुंसः ॥ तिष्ठंतिमेपुनरिहत्रिजगत्पवित्राःसख्यःकतीतिसमवेक्षितुकामयेव ॥ ८५ ॥ तस्याजलेषुतरुणांबुदजातिवैरिष्वावर्तजालमनयोरुभयोरतानीत् ॥ वीचीकराग्रविनिवारितरामसीरन्यावल्गनोपजनितव्रणगर्तशंकाम् ॥ ८६ ॥ मुरारिनारीमुखपद्मपंक्तिर्जवेनयोद्धुंजलदुर्गपद्मैः ॥ तीरेवनस्थेतिलकापदेशात्कृत्वापुरःखेटकमंडलानि ॥ ८७ ॥ तासांविलासगमनंसमवेक्ष्यतत्रलाल्यत्वहेतुरपिगर्हितचेतनायाः ॥ वेगात्तिरोभवनविघ्नतयामराल्यागस्त्रींबभूवनितरांगतिमंदिमश्रीः ॥ ८८ ॥

कल्लोलमहालहरीकलिंदपुत्रीयमुनापरमस्यपुंसःभगवतःश्रीकृष्णस्य त्रिजगत्पवित्रा मेसखीभागीरथीसमवेक्षितुंकामा संद्रष्टुंकामा ॥ ८५ ॥ तरुणांबुदजातिवैरिषुसजलमेघ समुदायतुल्येषुश्यामेषुजालंसमूहः वीचीकरःलहरीरूपहस्तः रामसीरःबलरामःव्याव-लग्नंप्रहारः ॥ ८६ ॥ मुरारिःश्रीकृष्णःदुर्गःकोटः खेटकः ( म. भा. ढाल ) मंडलंस मूहः ॥ ८७ ॥ तत्रयमुनातीरेलाल्यत्वहेतुःलालनीयताकारणंगर्हितचेतनालज्जितांतः करणाविनताप्रतिबंधः मरालीहंसीगर्ह्यांनिंद्यागतिमंदिमश्रीःगमनमन्दत्वशोभा ॥८८॥

( गद्यम् ) शनैःशनैस्तामुसरितमवगाहमानामुकासांचिदीर्ष्य येवनितंबबिंबानिजावकाशदानावलंबितोन्नतिभिरंबुभिः पुलि नानिनिचोलयांचक्रुः ॥१२॥ अपरासामसूययेवनाभिकुहराणि जलचूषणादावर्तकुलजवावलेपमवलुंपन्नितरासांक्रुधेवकुचयुग लानिक्षोभणात्कोकनदकोशान्विदलयामासुः ॥ १३ ॥

सरितंयमुनांईर्ष्याविशालत्वसाम्येर्ष्याअवकाशःअंतरं अवलंबितंधृतंउन्नतिः उच्च त्वंअंबुभिःजलैःनिचोलयांचक्रुः आच्छादयांचक्रुः ॥ १२ ॥ अपरासांअन्यस्त्रीणांअ सूयासादृश्येर्ष्याकुहरंबिलं चूषणंपानंकुलंसमूहः जवःवेगःअवलेपमवलुंपन्मर्दंचिच्छिद्रुः क्षोभणंताडनंकोकनदंरक्तोत्पलम् ॥ १३ ॥

(पद्यम्) वक्षोजकुंभनिवहाद्वनिताजनानांग्रीष्मर्तुनाविनिहितंग्र हराजपुत्री ॥ तापंपितुःस्वमहरत्तरलोर्मिहस्तैरन्यंनयातिहिविभू तिरपत्यभाजाम्॥८९॥सुरनायकानुजमनोवशीकृतौसुदृशौमुखे निपुणतांयथाययुः ॥ सरसीरुहैर्नलिनीलतास्तथासकचान्यमू निविकचानितानियत्॥९०॥यमस्वसुःसन्निधिमेत्यरात्रौस्वकां तिचोरंसुदृशामुरोजः॥नालाग्रशूलेननिलंनिवेश्यववल्गहर्षादिव वारिमध्ये॥९१॥ व्यात्युक्षिकायांविपुलेक्षणासुवर्षन्नरखद्योतवल क्षमंभः ॥ सखीमुदारांसरितस्तुतस्याःकरोप्यसावीदिवकंसहंतुः ॥ ९२ ॥ उल्लासभाजाहरिणाप्रियायाःकल्हारमाल्यैकलितेकब र्याम् ॥ असैरसूयाहसितैश्चचित्रमुत्तंमितंवक्रमभूत्सपत्न्याः ॥ ॥९३॥ ग्लहंनिमग्नग्रहणेषुकल्पयन्स्वयंग्रहाश्लेषसुखंयदूद्वहः॥ सवर्णवर्ष्मासलिलेतडित्तनूःसुखादगृह्णात्सुदृशस्तुताननम्॥९४॥

फूत्कृतैःक्वचिदधःस्थितिर्चिह्नंबुद्बुदंहरिरुदस्यनिमग्नः ॥ वंचय
न्प्रतिवधूंक्वचिदूरुस्तंभमंबुपुचुचुंबवरांग्याः ॥ ९५ ॥ क्रीडतीमं
इत्लीभूयकृष्णयोरप्सुयौवते ॥ तटिन्यास्तटयोःप्रांतेताटंकेइवरे
जतुः ॥ ९६ ॥

कुंभनिवहः कुम्भसमुदायः वनितास्त्रीग्रहराजपुत्रीयमुनासूर्यस्यपितुः तापस्वंअहरत् तापरूपंद्रव्यंजग्राह तरलोर्मिःचंचललहरी विभूतिः धनम् ॥ ८९ ॥ सुरनायकानुजः श्रीकृष्णः निपुणताचातुर्य सरसीरुहंकमलं कचःकेशः विकचःकेशरहितः २ प्रफुल्लः ॥ ९० ॥ यमस्वसायमुना सन्निधिंसमीपतां कांतिःशोभा उरोजःकुचः नलिनंकमलं ववलगननर्त ॥ ९१ ॥ व्यात्युक्षिकाजलक्रीडा विपुलेक्षणासुंदरी नखद्योतवलक्षमंभः नखकांतिशुभ्रोदकं सखीभागीरथीकरोप्यसावीदिवमामृतकिमित्यर्थः कंसहंताश्री-कृष्णः ॥ ९२ ॥ हरिःश्रीकृष्णः कल्हारंकमलं कलितंस्थापितं कबरीकेशपाशः असंअश्रुंअसूयाईर्ष्याउत्तंसितंभूषितं ( उत्तंआर्द्रंसितंशुभ्रं ) ॥ ९३ ॥ ग्लहःपणः यदूद्वहःश्रीकृष्णः सवर्णवर्ष्मायमुनाजलसदृशशरीरः तडित्विद्युत् ॥ ९४ ॥ स्थिति चिह्नं स्थितिज्ञापकं वधूःस्त्री उरुस्तंभः ऊरुभागः अंबुषुउदकेषु वरांगीसुंदरी ॥ ९५ ॥ कृष्णौकृष्णार्जुनौ यौवतेस्त्रीसमूहे अप्सुउदके तटिनीयमुनानदी ताटंककर्ण-भूषणम् ॥ ९६ ॥

( गद्यम् ) इतिचिरंविहृत्यप्रतीरमुत्तीर्णाभिजलमेलनव्रीडादिवसं
कुचितात्मभिः कुचैरानभिताभिस्तदंगसंगमशर्माणिमर्मरगिरासं
स्तुत्यपवनचंचलैरंचलैः श्लाघमानानीववसनानिवासितवतीभिः
कायकांतिकनकलताकोरकाणीवकनकाभरणानि कामनीयकपु
नरुक्तिमात्रस्यपात्रयंतीभिर्वधूटीभिःसहतटाटवींपर्यटतोस्तयोरग्रे
दिशिदिशिकशितशिशिरेतराभीशुप्रकाशोजनदृशांकोशीकरणदे
शिकःकोपिमहसांराशिराविरासीत् ॥ १४ ॥

उत्तीर्णगतं जलमेलनंजलसंगमः२ सुखसहवासः आत्मारूपंशर्मसुखंमर्मरगिरामर्मर शब्दवाणीअंचलःप्रांतभागः कायःदेहः कोरकंकुड्मलं कामनीयकंसौंदर्यं शिशिरेतरः उष्णः अभीशुप्रकाशःकिरणः कोशीकरणदेशिकःकुड्मलीकरणशिक्षकः महसांरा शिराविरासीत् तेजोनिधिःप्रादुर्बभूव ॥ १४ ॥

(पद्यम्) उन्मिष्योन्मिष्ययत्नात्परिचालितयथापूर्वशक्त्याथदृष्ट्या तन्मध्येवीक्ष्यकंचित्पुरुषमनुदितछायहस्तातपत्रम्॥ अक्ष्णाज्ञातेयमोतोर्विदधतमनयोः प्रश्रयाश्चर्यदत्तद्वैराज्यादाकुलाभूद्यदुकुरुवरयोस्तत्क्षणंचित्तसीमा॥ ९७॥ मुखेनिरोवेपथुभिर्वयःकृतैर्मुकुंदवध्वःकृतसूचनाइव॥ द्विजातिवृद्धस्यपथोऽस्यपार्श्वयोर्द्विधापसस्रुःसहसातिभीरवः॥ ९८॥ ताभ्यांततस्तस्यपदोःपुरस्तादपंकमात्मानमहोविधातुम्॥ स्पृष्टान्युदंचद्घनघर्मतोयैरष्टाभिरंगैरवनीरजांसि॥ ९९॥ परस्परासंगफलप्रदित्सयास्वजन्मतारंदवासराविव॥ उपस्थितौनावुपसृज्यसंभ्रमात्तदाशिषोनंतरमेवमब्रवीत्॥१००॥ क्षुत्प्रपीडयतिमामयिवीरौकुक्षिमेस्यचकितेवयुवाभ्याम्॥ याच्यतेतदशनंबहुभोक्तुंयस्यतृप्यतिपुरातिथिरेषः॥ १०१॥ इत्थंस्वदक्षिणकरंपुरतःप्रसार्यतस्यार्दतोवचनपाष्णर्यनुधाविवेगा॥ ताभ्यांतथेतिभणितिस्तुसमाल्लंबेसत्त्वर्थनाफलमदौहृदमेवसूते॥ १०२॥

उन्मिष्योमिष्य उन्मील्योन्मील्य छायाभूतंहस्तंकरेआतपत्रंछत्रंयस्यतंछायहस्तातपत्रं उपरिसूर्यःअधःअग्निःअतःछायाभावःज्ञातेयंएककुलीनत्वंओतुः मार्जारःविदधतंधारयंतं यदुकुरुवरौकृष्णार्जुनौप्रश्रयंविनयंआकुलाभूत्व्यग्राभूत् ॥९७॥ तिरोवेपथुः तिर्यक्कंपः वयःवार्धक्यंभीरुः भयशीलः ॥ ९८ ॥ तस्यवृद्धविप्रस्यपुरस्तात्पुरोभागेअपंकं विधातुंनिष्पापंकर्तुं उदंचद्घनगर्भतोयंआविर्भूतंनिविडंघर्मजलं अवनीरजः भूमिस्थिताधूलिः ॥९९॥ आसंगःयोगः फलप्रदित्साअन्नदानेच्छा जन्मताराजन्मनक्षत्रंउपस्थितवासरः प्राप्तदिनःसंभ्रमः त्वरातदाशीःविप्राशिर्वादः॥१००॥कुक्षिःउदरं चकितंभीतं अशनंभक्षणं यस्यतृप्यतियेनतृप्तिंयास्यति ॥ १०१ ॥ अर्दतःयाचनांकुर्वतः वचनपाष्णर्यनुधावीवचनपृष्ठभागानुगमनकार्ताभणितिःभाषणं ताभ्यांकृष्णार्जुनाभ्यां समालंबे स्वीकृता अर्थनायाचना अदौहृदमेवसूतेदोहदलक्षणरहितमेवददाति ॥ १०२ ॥

(गद्यम्) अथमुदाकथितात्मयथातथाभावोभगवान्वृद्धद्वानुर्दतपटीजवनिकांतर्नटीभवत्स्मिनयोर्देवकीपृथासुतयोर्धुरिगिरिदरीवसतिधुरीणविभावरीचरसरीसृपदिविपदरीशमेदुरीकृतदुरीहि

तनांडवस्यखांडवस्यजगत्कंठेगडुत्वंचतत्परिरक्षणदक्षस्यऋभुक्षण स्तक्षैकपक्षपातंचनिवेद्ययुवयोः कटाक्षयत्नेनक्षणाद्दिधक्षामी तिस्वयमपेक्ष्यविशेषमाचचक्षे ॥ १५ ॥

मुद्हर्षः बृहद्भानुर्दंतपटीअग्न्योष्ठः स्मितंहास्यंदेवकीपृथासुतौकृष्णार्जुनौ धुरिपुरो भागेधुरीणविभावरीचरः निपुणराक्षसःसरीसृपःनागः दिविषदरिः दैत्यः मेदुरीकृतदु- रोहिततांडवंबहुलीकृतदुश्चेष्टितनृत्यं खांडवंवनविशेषः गंडुत्वंरोगविशेषः ऋभुक्षाइंद्रः विधक्षामिदग्धंकर्तुमिच्छामि अपेक्ष्यंयाचितभक्षणं आचचक्षेकथितवान् ॥ १५ ॥

(पद्यम्) भ्रूसंज्ञयायदुपतेःपुरुहूतसूनुःसंतुष्यतोऽथजगृहेसतनून पातः ॥ तूणौचगांडिवसखौतुरगांश्चशुभ्रान्कांतंरथंचनटताकपि केतनेन ॥ १०३ ॥ मरुन्मनोमार्गणवैनतेयपृथक्जयाप्तैरिवकी र्तिशावैः ॥ चतुर्भिरश्वैःसमुपास्यमानंसफाल्गुनस्तंरथमारुरोह १०४

भ्रूसंज्ञा भ्रूसंकेतः पुरुहूतसूनुः अर्जुनःसतनूनपात्अग्निः गांडिवसखौसहितौतुरगःअश्वः कांतःसुंदरंकपिकेतनःकपिध्वजः॥१०३॥ मनोमार्गणः मनोजवःवैनतेयःगुरुडः जयाप्तः जयप्राप्तः कीर्तिशावः कीर्तिबालः शुभ्रः समुपास्यमानंसहितंफाल्गुनःअर्जुनः ॥१०४॥

दशमुखनगरेपुरानुभूतंदहनहठात्करणंपुनर्दिदृक्षुः ॥ उपगतइवमा रुतिःससाक्षादुदलसदस्यरथाग्रकेतनांकम् ॥ १०५ ॥ तद्भुजाव नुधावंत्यासंग्रामेषुजयश्रियः ॥ जंघाद्वयधियंतूणौजनयामासतु स्तदा ॥ १०६ ॥ पवनसखदृशोर्मुदंवितन्वन्पटुतरटंकृतिकंपिता टवीकः ॥ कुटिलमतनुतासकृत्काराभ्यांगुणमपिदंडमिवास्यगां डिवस्य ॥ १०७ ॥ अथगरुडवलीमुखध्वजाभ्यामनुमतिमेत्यस सन्नाहहर्षात् ॥ वलरिपुमणिनीलमुत्प्रवालंवनमशितुंवडवास्य भूरिवाग्निः ॥ १०८ ॥ शोणरुचाशिखयातिमहत्यावाणपुराहति वासनयेव॥ चंडतरस्यवनस्यसमंतात्कुंडलनंकलयन्ववृधेऽग्निः ॥ ॥ १०९ ॥ प्रथमंपावकपिङ्गेपरिरभ्यगृहीतपल्लवोष्ठपुटे॥ उपकंठे वनराजेरुदगादाकुलकपोतनादततिः ॥ ११० ॥

दशमुखनगरंलंका दहनहठात्करणंदहनबलात्कारः साक्षादुपगतःमूर्तिमान् केतनांकं केतुचिह्नंउदलसत्उल्ललास ॥ १०५ ॥ संग्रामःयुद्धं अनुधावंतीपश्चादागता जयश्रीः

जयलक्ष्मीः धीःबुद्धिः॥१०६॥ पवनसखदक्अग्निनेत्रं मुदंवितन्वन्आनंदंकुर्वन् पटुतर-टंकृतिः दीर्घतरटणत्कारशब्दः अटवीअरण्यं असकृत्कुटिलंअवनुववारंवारंवकंचकार ॥ १०७ ॥ गरुडवलीमुखध्वजौकृष्णार्जुनौबलरिपुमणिः इंद्रनीलमणिःउत्प्रवालंउत्कृष्ट-पल्लवःवनमशितुंवनंभक्षितुंवडवास्यभूरग्निःवडवाग्निः ॥ १०८ ॥ शोणरुक्शिखारक्तवर्णं ज्वाला वाणपुरावृतिः वाणासुरपुरवेष्टनं कुंडलनंमंडलं कलयनकुर्वन् ॥१०९॥ पिङ्गः जारःपरिरभ्यआलिंग्य वनराजिःवनपंक्तिः उपकंठंसमीपं आकुलंल्पाकुलं नादवृतिः उदगात्शब्दसंघः आविर्बभूव ॥ ११० ॥

(गद्यम्) क्रमेणप्रबलीभवतोभगवतःपवमानसखस्यतमालादिषु केषुचिद्द्रुमेषुपत्रोच्चयायमानैर्धूमैः किंशुकादिषुकेषुचित्स्तब-कायमानैर्ज्वालाकंदलैस्तिलकादिषुकेषुचित्पक्विमफलबीजा-यमानैःस्फुलिंगैर्हरिचंदनादिषुकेषुचिद्वल्कलायमानैरालोकैर्नीड वत्सुकेषुचित्परस्परपक्षिपक्षताडनरटनायमानैः प्रोद्यच्चटचटा त्कारैश्चसर्वतःपरीतमपितद्वनंयथापुरमवतस्थे ॥ १६ ॥

पवमानसखः अग्निः पत्रोच्चयः पत्रराशिः किंशुकःपलाशवृक्षः स्तवकःगुच्छः कंदलः समूहःपक्विमंपक्वम् आलोकःप्रकाशः नीडवान्पक्षिनिवासस्थलं रटनायमानः शब्दयुक्तः ॥ १६ ॥

(पद्यम्) हुताशनपरित्रासादुच्चलंत्यावनःश्रियः ॥ कबरीवश्ल थावेगात्कापिधूम्याखमानशे ॥ १११ ॥ वलयंधूमरेखायावर्त्म निद्युसदांवभौ ॥ भाविनःशरकूटस्यपरितोमानसूत्रवत्॥११२॥ अस्यैवगांडिवभृतोभुविहेजनत्वं मल्लंतृणायमरुतामपिमन्यमा नम् ॥ वाह्वोर्बलंपठपठेतिवदन्निवाग्निः स्फोटारवंसझटितिस्फुट यांबभूव ॥ ११३ ॥ स्वपार्श्वयुग्मज्वलदग्निकंदलावनांतभाजो ऽजगरामहत्तराः ॥ निशानवज्रक्षतिनिःसृतासृजांदशामयत्ना-ज्जगृहुर्महीभृताम् ॥ ११४ ॥

उच्चलतीऊर्ध्वंगच्छती वनश्रीःवनलक्ष्मीः कबरीकेशकलापःश्लथाशिथिलाखंआ काशंआनशेव्याप्नोतिस्म॥१११॥ वर्त्मामार्गःद्युसदःदेवाः शरकूटःवाणसमूहः मानसूत्र-वत्परिमाणार्थसूत्रन्यासवत् ॥ ११२ ॥ मरुतांदेवानांमल्लंश्रेष्ठंइंद्रंतृणायमन्यमानंतुच्छं मन्वानं स्फोटारवंविदारणशब्दं झटितिशीघ्रंस्फुटयांबभूवप्रगटीबभूव ॥११३॥ वनांत

भाजः अरण्यांतर्भागसंचारिणः निशातंकठोरं क्षतिःव्रणः असृक्रक्तं महीभृतांजगृहुः पर्वतावस्थांअचलतांस्वीचक्रुः ॥ ११४ ॥

( गद्यम् ) तत्रनिकुरंबाणिस्तंबेरमाणामामूलमनलार्चिरवलंबितदं तमुसलानिप्रेमपरवशतयावशाभुवितरितुंस्वसृक्कभागविन्यस्तज ग्धार्धसल्लकीपल्लवकवलानीवक्षणमलक्ष्यंत ॥ १७ ॥

स्तंबेरमनिकुरंबंगजसंघः अनलार्चिःअग्निज्वाला परवशताआधीनता वितरितुंदातुं विन्यस्तंस्थापितं जग्धंभक्षितं कवलःग्रासः क्षणमलक्ष्यंतक्षणमदृश्यंत ॥ १७ ॥

(पद्यम्) सविधज्वलनोष्मवीचिभिःसपदिम्लानकपित्थशाखिनां॥ परिपाकसिताःफलव्रजाःप्रबभुःस्फोटकबुद्बुदाइव ॥ ११५ ॥ निशिकेवलंतमसिदीप्रतनुंनिजजातिमौषधितरुंनिखिलम् ॥ इ तरेविजेतुमिवतेनरवोदिवसेपिजज्वलुरतीवतराम् ॥ ११६ ॥ दृस दानवनिशाचरवर्गस्तत्रगांडिवभृतानिहतोऽपि ॥ तन्निषंगयुगबा णगणानांसंख्ययाप्रतिभटत्वमकार्षीत् ॥ ११७ ॥ ज्वालतापभर कुंडलितांगीःक्ष्वेडसारघृतसेचनमृद्वीः ॥ सर्पपुंगवततीरतिलृष्टः शष्कुलीरिवचचर्वकृशानुः ॥११८ ॥ तावत्तक्षकरक्षणायसहसा शक्रोऽधिरुह्यद्विपंवज्रंन्यस्यनदीयमूर्ध्निमरुतां सन्नाहयन्वाहि नीम्॥ ब्रह्मांडप्रतिरोधनेनविमुखैर्धूमैरिवारण्यजैरातस्तारनभस्त लंजलधैरराबद्धघोरारवैः ॥ ११९ ॥

सविधज्वलनोष्मवीचिः समीपाग्नेरुष्णज्वालापाकसिताः पचनेनशुभ्राः प्रबभुःबभूवुः ॥ ११५ ॥ दीप्रतनुःदीप्तशरीरं इतरेअन्येतरवःवृक्षाः ॥ ११६ ॥ गांडिवभृत्अर्जुनः निषंगः तूणीरःप्रतिभटत्वमकार्षीत् सादृश्यंकृतवान् ॥ ११७ ॥ तापभरःऊष्मातिशयः ततिःपंक्तिःशष्कुलीरिवचचर्व मिष्टपदार्थवत्भक्षयामास कृशानुःअग्निः ॥ ११८ ॥ शक्रःइंद्रःद्विपःऐरावतः वाहिनींसन्नाहयन् सेनांसज्जांकुर्वन् नभस्तलंआकाशंआतस्तार आच्छादयामास जलधरःमेघः ॥ ११९ ॥

( गद्यम् ) ततस्तैरनेकैर्नाकौकसामनीकैर्मत्सरेणनदुपरिनिपात्य मानदिग्भित्तिशिखराणामिववेगादापततांवारिधीनां वाडवहव्यवाड पिकवलितोयमस्माभिरितीवविद्युतः प्रकाश्यगर्जितेनतर्जयना

मिवपर्जन्यानामासारस्सर्वाभिसारेणनिर्वापितेवनेमनाक्श्यामाय मानेसतिशोणायमानलोचनेनकपिकेतनेनतत्प्रतिचिकीर्षयाशर कदंबैरंबरेनिरवलंबमाकलितांशरशालांछत्रीकृत्यपुनरपिसमुन्नी यमाननिजकेतुरुषर्बुधोभगवानुद्दिदीपे ॥ १८ ॥

नाकौकसामनीकंदेवसैन्यं वारिधिः समुद्रः कवलितंधृतंतर्जयता भीषयताआसारःधारासंपातः मनाक्श्यामायमानःकिंचित्श्यामवर्णः शोणायमानः रक्तवर्णःकपिकेतनःअर्जुनः प्रतिचिकीर्षानिराकरणेच्छा आकलितंकृतं शरशालाबाणगृहं निजकेतुः अग्निकेतुः धूमःउषर्बुधःअग्निः उद्दिदीपेप्रजज्वाल ॥ १८ ॥

( गद्यम् ) तत्रांतरेप्रोषितवल्लभतयाप्रेम्णाकुमारमश्वसेनंनिगीर्य दहनार्चिरुष्णासहिष्णुतयापुनरपिनिवर्त्यदिवंप्रयातीभिर्घनधारा भिरिवपन्नगकन्यकाभिः सहवनादुत्पतंतींतक्षककुटुंबिनीमविलं बितमेवश्वेतवाहनः शातमुखेनरसनायामिवग्रीवायामपिद्विधावि दलितांचक्रे ॥ १९ ॥

प्रोषितवल्लभापतिरहितास्त्री निगीर्यमुखेधृत्वा दहनार्चिरुष्णासहिष्णुताअग्निज्वालानांउष्णासहनता घनःमेघः कुटुंबिनीभार्या अविलंबितंशीघ्रं श्वेतवाहनःपार्थः शातमुखेनशिलीमुखबाणेन ॥ १९ ॥

( पद्यम् ) नभसिकृतेशरकूटेनपपाताशुगविनुन्नमंबुमुचाम् ॥
तस्मिन्खांडववह्नौतक्षकपत्न्याःकबंधमेवपरम् ॥ १२० ॥

शरकूटःबाणमंडपः आशुगविनुन्नंवायुप्रेरितं २ बाणच्छिन्नंअंबुमुक्मेघः कबंधमस्तकरहितंशरीरं २ उदकम् ॥ १२० ॥

( गद्यम् ) अथसकुपितः स्वयंकौशिकोऽपिचकितचकितंवियति विहितोपसरणंनवजननीशोकदयनीयं हृतवालंतमहिबालंपरिगृ ह्यलालनयापरितोषमनैषीत् ॥ २० ॥

कौशिकःनकुलः २ इंद्रः चकितचकितंबहुभीतंवियतिविहितोपसरणंआकाशेकृतागमनं दयनीयंकृपापात्रं हृतवालंपुच्छरहितं अहिबालंसर्पबालं२वृत्रासुरसुतम् ॥ २० ॥

( पद्यम् ) सुतंतमभ्येत्यसुरैरशेषैःक्रुध्यन्नथायुध्यतघोरमिंद्रः ॥
चक्रेसदावस्यचतक्षकस्ययदग्निमत्तांयदनग्निमत्ताम् ॥ १२१ ॥

वनस्पतस्योपरिकेवलंतदासहस्रनेत्रस्यचसव्यसाचिनः ॥ निषं
गनीडोत्पतितानिपत्त्रिणांकुलानिकोलाहलकेलिमादधुः॥१२२॥
शरान्विपाठानपिपारदृश्वनःश्रुतेर्विधायाश्रुविमुंचतस्ततः ॥ कुरू
द्वहात्साध्वसरोगिणोहरेरभूद्भिषग्दूरतरापसर्पणम् ॥१२३॥ जयं
तमेकंयुधिसोढुमक्षमेजयंतमन्यंसुतमीक्षितुंगते ॥ पुरींबलद्वेषि
णिघोपकैतवाज्जहासशंखद्वितयंचकृष्णयोः ॥ १२४ ॥

मुर्तंअर्जुनं दावंवनं अग्निमत्ताअग्नियुक्तताअनग्निमत्तांमृतपत्नीकत्वम् ॥१२१॥ सह स्रनेत्रः इंद्रः सव्यसाचीअर्जुनः निषंगनीडंतूणीरवासस्थानं पत्त्रिःबाणःकेलिमादधुःक्रीडां चक्रुः॥१२२॥ विपाठःअध्ययनरहितः२ स्थूलः आशुविधायशीघ्रंकृत्वाकुरूद्वहः अर्जुनः साध्वसरोगःभीतिरूपरोगः हरिःइंद्रः अपसर्पणंअपयानं पलायनं भिषक्चिकित्सकः ॥१२३॥अक्षमः असमर्थः पुरीअमरावती बलद्वेषीइंद्रः कृष्णौकृष्णार्जुनौशंखद्वितयंपां जजन्यदेवदत्तशंखौ ॥ १२४ ॥

ततःकृशानोर्विपरीतवर्णस्वनामवाच्यादिवभीतभीतम्॥मयंवनेदै
त्यमयंररक्षसचक्रपाणेरिवशक्रसूनुः ॥ १२५ ॥ क्षेत्रमप्यधिप
तिंकुरुपूर्वंसंश्रितौसपदिदैवबलेन ॥ चर्वितुःसकलखांडवमग्नेस्त
क्षकावभजतांविघसत्वम् ॥ १२६ ॥ अथस्मित्वातुंदंपरिमृशति
मंदायितगतौसमापृच्छ्यप्रीत्यात्रिदिवमुपयातेहुतवहे ॥ रथाभ्यां
मौनिभ्यांघनसलिलसेकेनमहताविजेत्रौतौकृष्णौविविशतुरुपांतं
नरपतेः ॥ १२७ ॥ इत्यनंतभट्टकृतेश्रीमतिचंपूभारतेतृतीयःस्त
बकः संपूर्णोऽभवत् ॥ ३ ॥ ॥ ॥ ॥

विपरीतवर्णस्वनामवाच्यात्मयइत्यस्यविपरीताक्षरवाच्यात्यमादित्यर्थः भीतभीतं अतिभीतं मयःदैत्यविशेषःचक्रपाणिः कृष्णः ॥१२५॥ कुरुपूर्वक्षेत्रंकुरुक्षेत्रंतक्षकःनाग विशेषः२ मयदैत्यःविघसत्वंभोजनावशिष्टम् ॥ १२६ ॥ तुंदंपरिमृशतिउदरंस्पृशति त्रि- दिवमुपयातःस्वर्गगतःहुतवहः अग्निःमौनिभ्यांनिःशब्दाभ्यां घनसलिलसेकःमेघोदकसिं- चनं विजयित्रौजयशीलौ उपांतंविविशतुः समीपंजग्मतुः नरपतिः धर्मराजा ॥१२७॥

इत्यनन्तभट्टकृतभारतचंप्वां

तृतीयस्तबकः समाप्तः ॥

अथ चतुर्थस्तबकः।

(पद्यम्) यातेततोनिजपुरींयदुवंशकेतौ राज्ञेमयोमणिसभांरचयांबभूव ॥ यस्यांरुचंसमवलोक्यशुचाधुनापि जीवंगतागतजुषंवहतेसुधर्मा ॥ १ ॥ तामधिष्ठास्नुमागत्यतंमखंकर्त्तुमन्वशात् ॥ विपंचीरवसारज्ञोनृपंचीरवसांवरः ॥ २ ॥

यदुवंशकेतुःश्रीकृष्णः मणिसभामणिमयसभा रुचंकांतिं शुचादुःखेन जीवंप्राणं २ गीष्पतिं सुधर्माअमरावत्याःदेवसभा ॥ १ ॥ मखःराजसूययज्ञः अन्वशात् आज्ञापयामास विपंचीरवःवीणाशब्दः चीरवसांवरःमुनिश्रेष्ठःनारदः (चीरंवल्कलं) ॥ २ ॥

(गद्यम्) ततोदूताहूतःपुरुहूतानुजोनिरंतरायमेवमहांतंसप्ततंतुमाहर्तुमनसः कौंतेयस्योपांतेरहसिमुहूर्तंसंमंत्र्योत्साहप्रभवाभ्यांमूर्तौमंत्रइवतत्प्रहिताभ्यां गंधवहसुधांधोधिपनंदनाभ्यामनुसंधीयमानगमनोनदीतटाकैर्द्विमातृकतयास्वपालयितारमनुकुर्वतोविविधान्यदुर्लभवसुधान्यसमेधितवसुधान्मागधानवगाह्यविशृंखलहर्षितगिरिव्रजमपिशृंखलाखेदितमहीभृत्कुलंजराघटितदेहमपिदेदीप्यमानबलसंपदमाशाजेतारमपिपरार्थापहारजागरितारंमागधमपिविगीतव्यापारं द्वैमातुरंमहारथंपृथ्वीनाथमेत्यप्रधनंननाथ ॥ १ ॥ तत्क्षणमतितिक्षुतयात्वमष्टादशकृत्वोदृष्टापजयोस्ययंपुनरितरः किशोरइतिकृष्णाभुवावप्यधीयंहिडिंबकुटुंबशोकोदयादारभ्यप्रवीरजनकर्णिकामौक्तिकायमानभुजकीर्तिरात्मनः संमुखीनंदृढतरपरिकरबंधंजरासंधंसमीरकुमारः पंचदशदिनानिनियुध्यैषांतृतीयभागसंख्यानपदाभिधेयेनसहघटयांबभूव ॥ २ ॥

पुरुहूतःइंद्रः निरंतरायंनिर्विघ्नं सप्ततंतुःयज्ञः आहर्तुमनःकर्तुमनाः प्रहितःप्रेरितःसुधांधोधिपःइंद्रःतटाकःसरोवरं द्विमातृकतानद्योदकवृष्ट्योदकसंपन्नता वसुधान्यानिद्रव्यसस्यानि समेधितासम्यक्वृद्धिंप्रापितावसुधाभूमिः गिरिव्रजःपर्वतसंघः २ देशविशेषः महीभृत्राजा २ पर्वतः जरावार्धक्यं २ राक्षसी आशादिक् २ तृष्णा अर्थापहारःद्रव्यापहारः मागधःमगधराजा २ स्तुतिपाठकः विगीतःनिंदितःगीतरहितः द्विमात्रोःअपत्यंपुमान्द्वैमातुरः पृथ्वीनाथःराजाजरासंधः प्रधनंननाथयुद्धंययाचे ॥ १ ॥ अतितिक्षु

ताअसहिष्णुता किशोरःवालकः कृष्णौअवधीर्यअर्जुनकृष्णौतिरस्कृत्य परिकरबंधःक टिरसबंधः समीरःवायुः पंचदशदिनानां तृतीयभागसंख्यानपदं पंचत्वंमरणं अभिधेयेन सहपटयांबभूवजघानेत्यर्थः ॥ २ ॥

( पद्यम् ) हतेतस्मिंस्त्रयोदीप्ताइंद्रप्रस्थमुपाययुः ॥ आगामिनि मखेहव्यभादित्सवइवाग्नयः ॥ ३ ॥ कृष्णेगतेयदुपुरींक्षितिपानु जानांजित्वादिशःप्रतिनिवृत्तवतांचतुर्णाम्॥ कोशेममुःपरमसिप्र वरागृहीतादोष्णोर्बलेनमहतानतुहेमपुंजाः ॥४॥ उपायनत्वेनतृ पायसर्वैर्दत्तेषुवित्तेष्वखिलेषुभूपैः ॥ पार्थस्यपुर्याःक्षितिरेवभेजे वसुंधरावाचकवाच्यभावम् ॥५॥नरदेवमगाज्जयेप्रतीच्यांकुले नेववसूनिविस्मृतानि ॥ दधदानकदुंदुभिस्वनैर्योदल्यत्स्नानकदुं दुभेःकुमारः॥६॥हरिणासनतःकृताभ्यनुज्ञोहविरादातुमिवागतेन साक्षात् ॥ क्रमविद्भिरर्थीत्विजांसमाजैःक्रतुमाहर्तुमुपक्रमंप्रचक्रे ॥ ७ ॥ प्राग्वंशेप्युत्तमेतिष्ठन्प्राग्वंशंपुनराविशत् ॥ कुरीरशिर सापत्न्याकुरुवीरः सदीक्षितः ॥ ८ ॥ आप्सातुमिच्छुरनलोह विरत्रुरुच्यमानीलधूमकुलनिर्गलनापदेशात् ॥ जग्धान्पुराजतु निकेतनभित्तिखंडान्कुक्षिस्थितानिववमामगुरूनजीर्णान् ॥९॥ तत्रप्रवर्ग्यजनितंदिविधूमचक्रमालक्ष्यतेस्मविबुधानप्रतिपावके न ॥ आनाकदुर्वहहविर्द्रविणेनवेगादाह्वानपत्रवलयंकिलनीयमा नम् ॥ १० ॥ मेदस्विनंविपुलखांडवभक्षणेनदेहंनिजंचलयितुं शिखिनोऽक्षमस्य ॥ उद्गम्यसंज्वलितुमुत्तरवेदिकायामालंबनाय किलयूपवरोनिकेऽभूत् ॥ ११ ॥ बिंबेनसंगंबिसपुष्पबंधोर्नाथःक लानांनयथाविदध्यात् ॥ तथैवदेवास्ततृपुस्तदानीमत्यद्भुतानां हविषामशेषात् ॥ १२ ॥ सर्वेषुवर्णेष्वपिदातुरस्मात्संप्राप्तवत्स्व र्थमजातशत्रोः ॥ नवर्णएकस्तुकदापिलेभेनार्थक्रतूनामिहसा र्वभौमे ॥ १३ ॥

दीप्ताःदीप्तिमंतःत्रयः भीमार्जुनकृष्णाः आगामिनिमखेभविष्यतियज्ञे ॥ ३ ॥ यदु पुरीद्वारका क्षितिपः धर्मराजा कोशःखड्गपिधानंरभांडारगृहं असिःखड्गः दोष्णोर्व

लंबाव्होःसामर्थ्यं हेमपुंजः स्वर्णराशिः ॥ ४ ॥ पार्थपुरीइंद्रप्रस्थनगरं वसुंधरावाचक वाच्यभावंभेजे वसुद्रव्यंतद्धारणार्थत्वंदधे ॥ ५ ॥ वसु द्रव्यं आनकदुंदुभीनांपटहभेरीणां स्वनैःशब्दैःधांदलयन् भिंदन्आनकदुंदुभिः वसुदेवः ॥ ६ ॥ हरिःकृष्णः अभ्यनुज्ञाआज्ञा क्रतुमाहर्तुंयज्ञंकर्तुं उपक्रमंप्रचक्रे आरंभंकृतवान् ॥ ७ ॥ प्राग्वंशःप्राचीनकुलं २ हविर्गेहपुरोभागः कुरीरंयज्ञमांगलिकद्रव्यं पत्नीद्रौपदी दीक्षितःकुरुवीरः यज्ञदीक्षाधारकःधर्मराजा ॥ ८ ॥ आप्सातुमिच्छुरनलःभक्षितुमिच्छुरग्निः धूमकुलंधूमपुंजः निर्गलनापदेशात्बहिर्गमनकपटात् जतुनिकेतनंलाक्षागृहं ववामवमतिस्म गुरुः जडत्वगुणयुक्तः ॥ ९ ॥ प्रवर्ग्यजनितंयज्ञकर्मोद्भवंचक्रंमंडलं विबुधाःदेवाः पावकःअग्निः आनाकदुर्वहःस्वर्गपर्यंतं वोढुमसमर्थः हविर्द्रविणंहोमद्रव्यम् ॥ १० ॥ मेदस्विनंपुष्टं शिखीअग्निः अक्षमःअसमर्थः यूपःयज्ञपशुबंधनदंडः अंतिकेसमीपभागे ॥ ११ ॥ बिसपुष्पबंधुः सूर्यः कलानाथःचंद्रः हविःहोमद्रव्यं ततृपुः तुष्टाःबभूवुः ॥१२॥ वर्णःजातिः २ अक्षरं अर्थद्रव्यं २ अभिधेयं अजातशत्रुः धर्मराजा क्रतुसार्वभौमःश्रेष्ठः राजसूययज्ञः॥१३॥

(गद्यम्) तत्र नानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लवितेयज्ञवाटेत्रिपथापृथातनूजाभ्यांनियुक्तोवैमात्रेयैर्भ्रातृभिर्जतुभवनवनसवनेषुपृथक्पृथगाराधितयास्वेनाप्यातिथ्यायनिमंत्र्यमाणेनवीतिहोत्रेणेवज्वलताहैमपात्रेणपरिष्क्रियमाणपाणितलः सहदेवोनिखिलभक्तजनकृत्यनिर्वाहभारेणनिभृतावयवंसभ्यलोकलोचनपक्ष्मयुग्मपंक्तिपरस्परवैमुख्यवदान्यरूपकोमलिमानंमहर्षिजनवलयमध्यमहेंद्रनीलरत्नंचिरत्नंपुमांसंसमासाद्यप्रथममर्घ्येणपरिपूजयांचक्रे ॥ ३ ॥

जनपदंदेशं मेदिनीवल्लभमल्लः भूपतिश्रेष्ठःवाटेमंडपेत्रिपथागंगा पृथाकुंती नियुक्तः आज्ञप्तः वैमात्रेयःभिन्नमातृजः वनसवनेषुखांडववनयज्ञेषु वीतिहोत्रःअग्निः परिष्क्रियमाणः पाणिःभूष्यमाणःहस्तः निभृतावयवंनम्रांगं वैमुख्यंअपसरणं वदान्यः दाताकोमलिमाआकृतिसौंदर्यं वलयंमंडलं२ कटकं महेंद्रनीलरत्नंइंद्रनीलमणिं चिरत्नंपुमांसंश्रीकृष्णं प्रथममर्घ्येणअग्रपूजाविधिना ॥ ३ ॥

(पद्यम्) तावत्प्रकोपात्तरलाधरस्यप्रतिक्षितीशानभयानकस्य ॥
वेदीभुवंतत्रविहायवह्निश्चेदीशितुश्चित्तमिवाविवेश ॥ १४ ॥

सदसिनविकृतोयदच्युतोभूत्सतुपरुषाक्षरमंडलेनशत्रोः॥ बहिरि
वसदुपेत्यतच्छ्रवोभ्यांबहुतरकुण्डलनीलरत्नलक्ष्यात् ॥१५॥ अ
श्लीलवागिहसमाप्तवतीनवेतिसंद्रष्टुकाममिवदानववैरिचक्रम् ॥
कल्पांततिग्मकरकल्पमनल्पवेगं कंठेबिभेदरणसीमनिदामघो-
षिम् ॥ १६ ॥

तरलाधरःचंचलोष्ठप्रांतः प्रतिक्षितीशःशत्रूराजा विहायत्यक्त्वा चेदीशितुः शिशुपाल स्य आविवेशप्रादुरभूत् ॥ १४ ॥ सदसिनविकृतःसभायांकोपवान्नाभूत् अच्युतः श्री कृष्णः मंडलंसमूहः शत्रुःशिशुपालः सदुपेत्यविद्यमानमागत्य परुषःकठोरः तच्छ्रवोभ्यां कृष्णस्यकर्णाभ्यां लक्ष्यात्कपटात् ॥ १५ ॥ अश्लीलवाक्निंद्यवाणी दानववैरिचक्रं कृष्णस्यसुदर्शनचक्रं कल्पांतः प्रलयकालः तिग्मकरःसूर्यः कल्पंसदृशंअनल्पवेगं अ- तिशयवेगवंतंरणसीमनियुद्धमर्यादायां दामघोषिःशिशुपालः ॥ १६ ॥

(गद्यम्) इतितस्यदुर्मतेरायुषासहसमापितेसवनकर्मणिनिर्मि
तावभृथाप्लवनमुपदात्वेनदत्तपूर्वाणिवित्तान्युत्तमर्णानिवपुनर्द्विगु
णमेवग्राहितान्सर्वानुर्वीपतीन्प्रस्थापितवंतंपौरवंतमनुज्ञाप्यचैद्य
निधनोत्सवेनसुदर्शनस्येवस्वपौरलोचनस्यापिनवास्रकणिकार्द्र
तामनुभावयितुमनाइवसनातनः पुमान्पुरींपुरानुभूतकुशस्थली
नाम्नींप्रतस्थे॥ ४ ॥

दुर्मतिःशिशुपालः सवनकर्मयज्ञकर्म निर्मितावभृताप्लुवनंकृतं अवभृथस्नानं उपदात्वंउ पायनत्वं उत्तमर्णःधनिकः उर्वीपतिःराजापौरवः धर्मराजा चैद्यःशिशुपालः नवास्रकणि कानवरक्तलवः २ नवाश्रुलवः सनातनःपुमान्श्रीकृष्णः कुशस्थलीद्वारका ॥ ४ ॥

(पद्यम्) अंधभूपतनयोपिवर्लौघैर्हास्तिनंपुरमवाप्यविलक्षः ॥
सौबलिंगिरिमसौबलवंतंदुर्विचाररचनामुचचक्षे ॥ १७॥ अमेर
पत्यमितिहेमयदाहुरेतन्मिथ्यानमातुलविरोधिमखेऽनुभूतम् ॥
तत्स्मर्यमाणमखिलक्षितिपोपनीतंनक्तंदिवंदहतिचित्तमिदंयतो
मे॥ १८ ॥ वल्गत्कुचंपरिजहाससभावलोकेमांद्रौपदीमणिभुवि
स्खलितंयदुच्चैः ॥ तत्साधुजातमितिवक्तुमिवस्नुपांस्वांमत्प्राण

वायुरयमुत्क्रमणेच्छुरास्ते ॥ १९ ॥ ततः ॥ अधुनायुधिसेनाभि
विधुनानोरसातलम्॥ निधायनिधनंतेषुनिगृह्णीयामिमांशुचम॥२०॥

अंधभूपतनयःदुर्योधनः बलौघः सेनासमूहःविलक्ष्यःअशांतमनाः सौबलिःशकुनिः गिरंचचक्षेवाणीमुवाच ॥१७॥ हेमसुवर्णविरोधिःशत्रुः अनुभूतंअनुभवं प्रकटयति क्षितिपःराजा उपनीतंसमीपानीतं नक्तंदिवंरात्रिंदिनम् ॥१८॥ वलूगत्कुचंचलत्स्तनंमणिभुविस्खलितंरत्नभूमौपतितं मत्प्राणवायुरयमुत्क्रमणेच्छुरास्ते मत्प्राणाःव्याकुलीभवंतीत्यर्थः ॥ १९ ॥ विधूनंकंपितं रसातलंपृथ्वीतलं निधनंनिधायमरणंस्थापयित्वा शुचंनिगृह्णीयांशोकंनाशयेयम् ॥ २० ॥

( गद्यम् ) इतिनिगद्यव्रीडाव्यथानद्योः संगमेनिमग्नमेनमभग्नकैतवबंधोगांधारपतिरुत्तारयितुमेवमुत्तरमादत्त ॥ ५ ॥

निगद्यउक्त्वा व्रीडालज्जा व्यथादुःखं कैतवंकपटं गांधारपतिःशकुनिः उत्तरमादत्त प्रतिवचनमुवाच ॥ ५ ॥

( पद्यम् ) जय्यतांकथमुपैतितेऽर्जुनोवत्सयद्युधिभयात्पलायिताः॥ केवलंहरिमुखाननामनोवेगतोऽपिमरुतोऽभवन्सुराः ॥२१॥
अपिच ॥ तंवीक्षितुंजगतिशक्नुयुरत्रकेवाभीमंप्रकोपधृतभीमगदांकबाहुम् ॥ एकैकमुष्टिहतयेस्मभवंतिनालंयस्याहवेबकबृहद्रथभूहिडिंबाः ॥ २२ ॥ ताभ्यामुपास्यमानस्यतपस्यातनुजन्मनः ॥ व्यापादेपिप्रसक्तिःकाविशेषान्मादृशांरणे ॥ २३ ॥

जय्यंजेतुंशक्यं हरिमुखाः इंद्रप्रमुखाः मरुतःदेवाः २ वायवः ॥ २१ ॥ शक्नुयुःसमर्थाबभूवुः भीमगदांकबाहुः भयंकरगदाचिह्नयुक्तःबाहुःयस्यसः मुष्टिहतयेमुष्टिप्रहाराय आहवःयुद्धं बृहद्रथभूःजरासंधः ॥ २२ ॥ उपास्यंसेव्यं तपस्यातनुजन्माधर्मराजा व्यापादःद्रोहचिंतनं दृशःसदृशः ॥ २३ ॥

( गद्यम् ) तथाप्यहंतुतवचतेषांपरस्परस्यविभवेपरिणयनपथाधिरोहिणिक्षणादक्षममाणेनजगत्सामन्यतामक्षसंप्रदायेनतं पराजयघंटापथेसंचारयिष्यामि ॥ ६ ॥

विभवः संपत् परिणयनपंथाग्लहमार्गः अक्षसंप्रदायेनद्यूतक्रीडासंप्रदायेन घंटापथः अक्षममाणःसर्वाधिकः ॥ ६ ॥

( पद्यम् ) वित्तेहृतेदरिद्रास्तेविसृष्टाबंधुभिः स्वयम् ॥ विनाशंवा शुचायायुर्विदेशंवाऽथलज्जया ॥ २४॥ त्वंततस्तुसुखमात्मसंयुतैः सोदरैः सदृशसंख्यकाः समाः ॥ नीरराशिहरिनीलमेखलांनिः सपत्नमनुभुंक्ष्वमेदिनीम ॥ २५ ॥

विसृष्टाःत्यक्ताः शुचादुःखेनविनाशंयायुः मरणंगच्छेयुः विदेशः स्वजनरहितदेशः ॥ ॥ २४ ॥ सोदरःबंधुः सदृशसंख्यकाः समाःशतवर्षाणि नीरराशिःसमुद्रः हरिनीलमेख लाइंद्रनीलमणिरूपाकांची सपत्नःशत्रुः मेदिनीपृथ्वी ॥ २५ ॥

( गद्यम् ) इत्थंकारंरहसिकल्पितकैतवदुरध्वेतावुभावप्यनुधावि तुंदिव्यचक्षुपातेनांधेनवसुंधराधिपतिनानवमणिमंडपिकाप्रवेशो त्सवव्याजादाहूतःसानुजोधर्मात्मजः कुरुपत्तनमुपेत्यबंधुतयाप्र त्युद्गम्यमानोदुस्तरंभाविवनवासवर्षमेकैकमेकैकेनप्रणिपातपुण्ये नसुप्रतरंकरिष्यन्निवपितृव्यंद्वादशकृत्वः पदयोःप्राणंसीत् ॥ ७ ॥

इत्थंकारंइतिप्रकारेण कैतवदुरध्वाद्यूतदुर्मार्गः उभौशकुनिदुर्योधनौ अंधेनधृतराष्ट्रेण वसुंधरापृथ्वी व्याजात्कपटात् पत्तनंनगरं बंधुतयाबंधुसमुदायेन प्रत्युत्संमुखंप्रणि पातः नमनंसुप्रतरंसुलभं पितृव्यंधृतराष्ट्रं द्वादशकृत्वःद्वादशवारं प्राणंसीत् नमस्कारं अकार्षीत् ॥ ७ ॥

( पद्यम् )अवभृथांबुकणैरिवनूतनैरधिगतामथमौक्तिकजालकैः ॥ स्वकबरींद्रुपदस्यसुतापिसाम्बुबलजापदयोः समनीनमत्॥२६ ॥ अनुजाभिरनामयानुयुक्तैरभिनंद्यकृतूलाभलालनाभिः ॥ सदना यससर्जनंविनीतंसधृताकारनिगूहनोमहीपः ॥ २७ ॥ तावन्मदी यतनुभेदिभटांतहेतुर्वैरंमिथः प्रभविताकुरुभूभुजांश्वः ॥ इत्यंत राहितशुचेवदिशिप्रतीच्यांमंदायमानमहसारविणानिपेते॥२८॥ दिग्धेसंतमसैः सान्द्रैर्दिशापदिशचत्वरे ॥ सर्वाःप्रजास्तदाराज्ञःस मारुक्षन्दशानुलाम् ॥ २९ ॥ मनुजावलीनयनवर्त्मनेपुनर्मघवा दिदेवममभावगोचराः ॥ ककुभोविभेजुरमृतांशुभानवः क्षणमेव तंप्रथमशैलरोहिणः ॥ ३० ॥ अथोपकार्यामधितिष्ठतोस्पसंदर्श नायानिशमापतद्भिः ॥ अशेषपौरैरतिबालमित्रैरशेषिकिंचिन्नत

यारजन्या ॥ ३१ ॥ धर्मजन्मा ततः कर्म निर्मायाहर्मुखोचितम्॥
सभां सभासुरां पौरैर्भूयः प्रापाक्षवेदिभिः ॥ ३२ ॥

अवभृथांबुकणः यज्ञांतस्नानोदकबिंदुः अधिगतायुक्ता कबरीवेणी सुबलजागांधारी ॥ २६ ॥ अनामयंआरोग्यं क्रतुलाभलालनं यज्ञलाभस्तवनं सदनाय ससर्जगृहंप्रतिगंतुं आज्ञापयामास विनीतंविनययुक्तं आकारनिगूहनं दुर्विकारगोपनं महीपःधृतराष्ट्रः ॥ २७ ॥ भटःयोधः मिथःपरस्परं आहितंस्थापितं प्रतीचीपश्चिमदिक् मंदायमानमहः हीनकांतिः रविःसूर्यः ॥ २८ ॥ दिग्धंलिप्तं संतमसःगाढांधकारः चत्वरंअंगणं तुलांसमारुक्षन्साम्यंप्रापुः अंधत्वंप्रापुरित्यर्थः ॥ २९ ॥ वर्त्मामार्गःमघवाइंद्रः ममभावःममत्वं गोचरःविषयः ककुभःदिशः अमृतांशुःचंद्रः भानुःकिरणः शैलंउदयपर्वतम् ॥३०॥ उपकार्यामधितिष्ठतः उपरिगृहंप्राप्तवतः अनिशमापतत्निरंतरमागच्छत् रजन्यांकिंचिन्नाशेषिरात्रौनिद्रावकाशः नलब्धः ॥ ३१ ॥ अहर्मुखंप्रातःकालः भासुरं शोभायुक्तं अक्षवेदीद्यूतनिपुणः ॥ ३२ ॥

( गद्यम् ) तत्रचित्रीयमाणेष्वनल्पचारिमजल्पाकेषुसभाशिल्पेषुदृशंपरिकल्पयतः प्रज्ञादृशः निकषामूर्तैंतृतीयगुणइवादिविषदृषभनीलदृषदासनेनिषीदतोमुष्यकुरुकुलप्रदीपस्यप्रतीपंनिविशमानः शकुनिः स्थानाद्भ्रंशयितुंसाक्षात्कृतसन्निधिरमध्यमवर्णयातदीयाभिख्ययावाच्यइवग्रहविशेषः प्रासंगिकेनपथादुरोदरविहारेवनारमचिरादभिरोचयामास ॥ ८ ॥

चित्रंआश्चर्यं अनल्पचारिमंअतिसौंदर्यं जल्पाकःवाचालःप्रज्ञादृक्धृतराष्ट्रः निकषासमीपभागे तृतीयगुणःतमोगुणः दिविषदृषभःइंद्रः दृषदासनंरत्नमयासनं प्रतीपंनिविशमानःसंमुखमासीनः साक्षात्कृतसन्निधिःप्रत्यक्षंसमीपागतः अमध्यमवर्णयातदीयाभिख्यया वाच्यइवग्रहविशेषः शनिग्रहइत्यर्थः ( कुइतिमध्यमाक्षररहितःशकुनिशब्दः ) दुरोदरंद्यूतं विहारःक्रीडाअचिरात्सत्वरं अभिरोचयामास प्रीतिमुत्पादयामास ॥ ८ ॥

( पद्यम् ) अथसदसिमहत्याचाज्ञयासौनियत्याः सुमतिमपिविमुह्यद्यूतमार्गेप्रवृत्तम् ॥ बहुषुजनपदेषुप्रासवत्सुग्लहत्वंसपदिसुबलसूनुर्धर्मसूनुंविजिग्ये ॥ ३३ ॥ एकेनयत्सुबलभूर्युगपत्गृहीतुमक्षेणसर्वविषयान्नृपतेरशक्नोत् ॥ अस्मात्परंजगतिवाच्यतया

भ्युपेत्यतिष्ठेर्तांकिंनुपरमाद्भुतवाचकाय ॥ ३४ ॥ प्रतिदेवनमेवमे
वभूषाः प्रचुरानूरत्नमयांश्चहेमकोशान् ॥ सहजान्सहजाययास्य
जित्वासतुगांधारपतिर्जगर्जहर्षात् ॥ ३५ ॥ तत्रांतरे ॥ घटीचे
टीनोभूद्बहुपतिवधूटीद्रुपदजावराकींतामत्रानयपरिषदीत्यग्रज
गिरम् ॥ हरन्द्वैतेयीकः सुबलतनयासूनुपुजवात्समुत्तस्थौसाक्षा
द्धरणिमवतीर्णोयमइव ॥ ३६ ॥ दृष्ट्वाभियासदसिधावनमाचरं
त्याः कैश्येचकारसकरांगुलिमानतांग्याः ॥ वक्षोरुहेषुचमहीपपु
रंध्रिवर्गौनासाग्रसीम्निमुधियश्चनदीसुताद्याः ॥ ३७ ॥

निपत्याःदैवस्य विमुह्यमोहंप्राप्य जनपदः देशः ग्लहःपणः सुबलसूनुःशकुनिः वि-
जिग्येजयतिस्म॥३३॥ सुबलभूःशकुनिः युगपत्एकस्मिन्कालेअक्षंइंद्रियं २ पाशः विष
यःदेशः वाच्यतयाभ्युपेत्यअर्थतयास्वीकृत्य अद्भुतवाचकं विलक्षणसंज्ञकम् ॥ ३४ ॥
देवनंअक्षक्रीडाप्रचुरंबहुलं सहजःबंधुः जगर्जगर्जनांचकार ॥३५॥ घटीघटेनउदकान
यनकर्त्री चेटीदासी नःअस्माकं वधूटीभार्या वराकीदीना परिषत्सभा अग्रजगिरंदुर्यो
धनवचनं सुबलतनयासूनुपुद्वैतेयीकःदुःशासनः ॥ ३६ ॥ भीःभयं केश्यःकेशसमूहः
आनतांगीसुंदरी वक्षोरुहःस्तनः महीपपुरंध्रिवर्गःराजस्त्रीसंघः नदीसुतःभीष्मः सुधीः
ज्ञानी ॥ ३७ ॥

( गद्यम् ) तत्रसदुर्मेधाः बलवदाकर्षणभयोद्भिदुराणिस्वेदपृषंती
वभूपामुक्ताफलानिधारयंत्याश्चिकुरभारात्करतलनिष्पीडननिर्ग
लितांकालिमधारामिवनिर्भरकुवलयगर्भकमाल्यरसझरीमश्रुभिः
सहवर्षत्यास्तस्याः पातिव्रत्यलक्ष्मीनिवासस्फटिकप्राकारमिवदु
कूलमप्यपहर्तुंप्रावर्तत ॥ १ ॥

दुर्मेधाःदुर्मतिः उद्भिदुराणिस्वेदपृषंति बहिर्निर्गच्छंतिघर्मबिंदवः चिकुरभारःकेश-
संघः कालिमधाराश्यामत्वधारा निर्भरकुवलयगर्भकमाल्यं निविडकमलमालादुकूलं
परिधानवस्त्रम् ॥ १ ॥

(पद्यम्) तादृक्षेसमुपस्थितेपरिभवेसभ्येषुवाचंयमेष्वाध्यायत्सुवि
धेर्बलंस्वदयितेष्वन्येष्वशक्तेष्वपि ॥ निश्चित्यार्तिमतांगतिंयदुपतिं
नीत्वांकरौकुर्वतीसाचक्रंदतमुच्चकैर्यदुपतेत्रायस्वहामामिति॥३८॥

तस्याः सभायांन्हियमाणवस्त्रात्नच्यानितंबात्सहसाविरासीत् ॥
कंसारिकारुण्यपयःपयोधेः कल्लोलमालेवदुकूलपंक्तिः ॥ ३९ ॥
ह्रतेह्रतेवाससिह्द्यरूपंवासोंतरंयद्दहशेवरांग्याः ॥ नरस्यतेनैवन
कस्यतत्रचित्तस्यनव्योजनिचित्रकूटः ॥ ४० ॥ अदृश्यस्या
पहारेपिवर्धितानेकवाससः ॥ अंवरप्रायतातस्यामध्यस्योभय
थाप्यभूत् ॥ ४१ ॥ चैलानिकर्षंश्चिरमंधसूनुस्तस्यास्तुनग्नंकरणः
सनाभूत् ॥ श्रमात्स्खलित्वाधरणौपतन्सन्दंतावलेरेवजनव्रजा
नाम् ॥ ४२ ॥

वाह्क्षःवाहशः वाचंयमःमौनधारकः विधिःदैवं दयितःपतिः आर्तिःपीडा नोवीपरिधानवस्त्रं यदुपतिःश्रीकृष्णः चक्रंदआक्रोशंचकार ॥३८॥ नितंबःकटिपश्चाद्भागः कंसारिःश्रीकृष्णः पयःपयोधिःक्षीरसमुद्रः कल्लोलःमहालहरी दुकूलंवस्त्रम् ॥ ३९॥ वासः वस्त्रं हृद्यरूपंसुंदरं वरांगीसुंदरी चित्रकूटःआश्चर्यसमूहः २ पर्वतविशेषः ॥ ४० ॥ अंवरप्रायतावस्त्रवाहुल्यं २ आकाशसादृश्यंतस्याःद्रौपद्याः मध्यस्यमध्यभागस्य ॥४१॥ चैलंकर्षन्वस्त्रंहरन् अंधसूनुःदुःशासनः नग्नाक्रियतेअनेनसःनग्नंकरणः स्खलित्वास्खलनंप्राप्य धरणीभूमिः दंतावलिःदंतपंक्तिः जनव्रजःजनसमूहः ॥ ४२ ॥

( गद्यम् ) अथतथाभूतपरुषयोषाभिषंगरोषकलुषेणपृषदश्वज
नुषापरिषदिभीषणमेवंबभाषे ॥ १० ॥

परुषःनिंद्यः योषास्त्री अभिषंगःपराभवः पृषदश्वजनुःभीमः परिषत्सभा भीषणमेवंभयंकरंवचनम् ॥ १० ॥

(प०) उरसिस्खलदूष्मलंमृगाक्ष्याःसमितावस्त्रमिदंयथाहमक्ष्णा ॥
द्विषतःकचकर्षणोप्यमुष्यारसनेनानुभवेयमेवमेव ॥ ४३ ॥

ऊष्मलंऊष्णं मृगाक्षीद्रौपदी अस्त्रंअश्रु द्विषत्शत्रुः अस्त्रंरक्तं रसनेनानुभवेयं जिव्हया आस्वादयेयम् ॥ ४३ ॥

( गद्यम् ) किंच सरसीवविचलत्कवंधवंधुरेसमराजिरेतामरसछ·
दानीवशतमपिविमतानेतान्हेमंतइवाहंधार्तराष्ट्रशब्दशेषांमहाग
दापत्तिगमयिष्यामीतितत्रसुत्राम्णः पुत्रोप्येवंप्रतिजज्ञे ॥ ११ ॥

कबंधबंधुरंउदकव्यातं २ मस्तकरहितदेहव्याप्तं समराजिरंसमरांगणं तामरसच्छदंक मलपत्रं विमतिःदुर्बुद्धिः धार्तराष्ट्राःधृतराष्ट्रपुत्राः२ हंसाः गदापत्तिंगदयाविपत्तिं २ रो गेणदुःखं सुत्राम्णःपुत्रः अर्जुनःप्रतिजज्ञेप्रतिज्ञांचक्रे ॥ ११ ॥

( पद्यम् ) उत्सेकात्कृतहस्ततालममुनागांधारपुत्रीभुवाराधासूनुर सौजहाससदसिग्राम्यंब्रुवन्यत्ततः ॥ यस्यांजात्वपिदेहिनोभ्युदि ततानैवाभिनिर्मुक्तास्यातांद्विअपिगांडिवोममतुतां निद्रामम्नेष्यति ॥ ४४ ॥

उत्सेकःमदः हस्ततालंहस्तताडनं राधासूनुःकर्णः ग्राम्यंनिंद्यं अभ्युदिततासूर्योदयेनि द्राभिनिर्मुक्तता निद्रांनेष्यति हनिष्यामीत्यर्थः ॥ ४४ ॥

( गद्यम् ) इतितयोस्तादृशेनवीरवादेनसुखमिहास्वेतिकरास्फा लितदर्शितेनिजसक्थिन्येवतवमृत्युः स्यादितिसुयोधनंप्रतिया ज्ञसेन्याः शापेनभयात्तगंधाभ्यामंधदंपतिभ्यांयथापुरंराज्यंप्रत्य र्प्यहरिप्रस्थंप्रतिस्थापितोयुधिष्ठिरः पुनरपिकृतमंत्रैरमित्रैराहूत मात्रोयमर्धपथाद्विधिनागलहस्तिकयानिवर्तितइवतामेवसभांप्र त्यावर्तत ॥ १२ ॥

तयोःअर्जुनभीमयोः करास्फालितंहस्तताडितं सक्थिनिऊरौ याज्ञसेनीद्रौपदी आत्त गंधापराभूता अंधदंपतीधृतराष्ट्रगांधार्यौ अमित्रःशत्रुः गलहस्तिकयाहस्ताग्रेणगलप्रहा रेण ( अर्धचंद्रेण ) ॥ १२ ॥

( पद्यम् ) भूताभिविष्टइवबोधवतांवरोपिभूयोपिधर्मतनयः सह सौबलेन ॥ आधत्तदेवनविहारमनार्यजुष्टमाद्यक्षंविजहदेवप णोऽपिसोऽभूत् ॥४५॥ कितवेशकुनौवशंवदान्किरतिस्वेनकरेण पाशकान् ॥ विजयेनसदापुरस्कृतोप्यभवत्तेनसपृष्ठतः कृतः ॥ ४६ ॥ उत्थायाथक्षितीन्द्रः क्षणमपिधरणौस्थातुमस्यांनयुक्तं प्रत्यर्थिस्वीकृतायामितिसहसहजैः सत्यसंधः सजानिः ॥ पाणौ देवुर्निधायप्रमुखमतितरामंतरुत्तप्यमानांपश्यांप्रापद्वनानिव्यथित त्हृदमुचत्पौरलोकस्तुदृग्भ्याम् ॥ ४७ ॥ कांतारवर्त्मनिमृगाः पुर तोनिषण्णाः शांताकृतेः सधनुषोपिनिषंगिणोऽपि॥ उत्थायतस्य

पटुममर्मरचारुचीरंरोमंथलोलचिबुकेनमुखेनजघुः ॥ ४८ ॥
परागपूर्णेपथितस्यपादरेखाघटस्यप्रतिमामनोज्ञाः ॥ भक्त्योप
नीतावनदेवताभिः पाद्योदकुंभाइवजाग्रतिस्म ॥ ४९ ॥

भूताभिविष्टःपिशाचवशः बोधवतांवरःज्ञानिनांश्रेष्ठः सौबलःशकुनिःदेवनविहारंआधत्तद्यूतक्रीडांजग्राह अनार्यजुष्टं नीचजनसेवितं आद्यक्षरंविजहत् देवनविहारंवनविहारं वनवासम् ॥४५॥ कितवंद्यूतपणः वशंवदःअनुकूलः विजयःजयः २ अर्जुनः विजयेनपृष्ठतःकृतःपराजितः ॥ ४६ ॥ क्षितींद्रःधर्मराजा सजानिःभार्याद्रौपदीसहितः सत्यसंधःसत्यप्रतिज्ञः देवुःपाणौप्रसुवंनिधायविदुरसमीपेकुंतीं स्थापयित्वाउत्तप्यमानादुःखतप्ता व्यथितंदुःखितं वनंजलं २ अरण्यम् ॥४७॥ कांतारंअरण्यं पुरतोनिषण्णाः अग्रभागेआसीनाः निषंगःतूणीरः मर्मरःवस्त्रशब्दःचारुचीरं सुंदरवल्कलं लोलचिबुकंचंचलमुखाधोभागम् ॥४८॥ परागःधूलिः मनोज्ञंसुंदरं उदकुंभःजलघटः ॥ ४९ ॥

( गद्यम् ) क्रमेणतेविलंघ्यविविधानिविपिनानिजन्हुमुनिकर्णशष्कुलीपथवशेनशिक्षितैर्गतिविशेषैरिवगभीरैरावर्तैरुपासकजनादाहृतानिसंचारचक्राणीवदर्शयंतींकोकनदवदनोदितैरिवकोककुटुंबिनीकूजितैः कुमारस्यदेवव्रतस्यकुशलमिवपृच्छंतींभागीरथींपुरस्कृत्यतांनिशीथिनींपश्चाचक्रुः ॥ १४ ॥ अपरेद्युरतिमात्रबुभुक्षितानुयात्रिकसत्रिजनपरित्राणायपवित्रैः स्तोत्रैः प्रसेदुषाचित्रभानुनादत्तमक्षय्यमन्नपात्रमादायकलत्रेनिदधः ॥ १५ ॥

कर्णशष्कुलीकर्णरंध्रं उपासकःभक्तः आहृतंआनीतंकोकनदंरक्तकमलं देवव्रतःभीष्मः निशीथिनींपश्चाचक्रुः रात्रिंयापयामासुः ॥ १४ ॥ अनुयात्रिकःअनुगामी सत्रिजनपरित्राणंऋत्विक्‌रक्षणं चित्रभानुःसूर्यः कलत्रेनिदधुः द्रौपद्यांस्थापयामासुः ॥ १५ ॥

( पद्यम् ) वनंततः काम्यकमेत्यतेषुवसत्सुभीमस्सुनियोद्धुकामम्॥ किर्मीरमुग्रंकुणपाशनेंद्रंक्षिप्रंतदाहारदशामनैषीत् ॥५०॥
ततश्चरन्द्वैतवनेससार्द्धंवध्वाकदध्वालसतामबुध्वा ॥ मूलानिसर्वस्यशुभस्यभूपोमूलानिजग्राहमुनींद्रसंघात् ॥ ५१ ॥ तत्राथते
सत्यवतीसुतस्यपादारविंदात्प्रविसत्वरीभिः ॥ नखप्रभाभिर्नवपुष्पपंक्तिजटालतानांजनयांबभूवुः ॥ ५२ ॥ तस्मिन्कदाचित्तापस

यूथनाथेस्वातीमिवाजग्मुषिवासभूमिम् ॥ तेषामतिक्षामतयायु तानांशुचाक्षिदेशेष्वतिदृष्टिरासीत् ॥ ५३ ॥

काम्यकंवनविशेषः निपोद्धुकामःबाहुयुद्धेच्छावान् कुणपाशनःराक्षसः किर्मीराहारदशाराक्षसभक्ष्यंशवंतस्यस्थितिः मरणंइत्यर्थः॥५०॥ अलसतांआलस्यं अबुध्वानज्ञात्वाबध्वाद्रौपद्या ॥ ५१॥ सत्यवतीसुतःव्यासः प्रविसृत्वरीप्रसरणशीला ॥ ५२ ॥ कविःव्यासः २ शुक्रः स्वातीनक्षत्रविशेषः क्षामतादुर्भिक्षम् ॥ ५३ ॥

प्रसृमरतनुभासाप्रावृषेण्यान्समेघान् दिशिदिशिविदधानोदीर्घदर्शीनिदानीम् ॥ कुरवइतिमहांतंशब्दमाबिभ्रतोऽपिस्ववचननिपुणिम्नातानशोकानकार्षीत् ॥ ५४ ॥ अस्मात्प्रतिश्रुतिरितिप्रतिपद्यविद्यामालिंग्यधर्मतनयेनविसृज्यमानः॥पार्थोहिमाचलमगात्परमास्त्रमाप्तुंशंभोःकृपाजलनिधेश्चरणार्चनाभिः ॥५५॥ यस्मिन्हिमानीभृतियक्षवृंदमंगेषुसर्वेष्वपिमंजुलेषु ॥ नखंपचोष्णंनलिनेक्षणानामुरोजमेवातितरामुपास्ते ॥ ५६ ॥ योवत्सतामेत्यवसुंधरायानिपीतरत्नावलिकांतिपूरान् ॥ मनःशिलावप्रझरीमिषेण दरीमुखैरुद्गिरतीवतृष्या ॥ ५७ ॥

प्रावृषेण्यान्सजलान् दीर्घदर्शीभविष्यज्ञानीकुरवः कुरवकवृक्षः २ कुरुवंशोद्भवराजानः निपुणिमाचातुर्यं अशोकःवृक्षविशेषः २ शोकरहितः ॥ ५४ ॥ विद्यांप्रतिपद्य मंत्रंप्राप्य विसृज्यमानःआज्ञप्तः परमास्त्रमाप्तुं पाशुपतास्त्रंमाप्तुं कृपाजलनिधिः कृपासागरः श्रीशंकरः अर्चनंपूजा ॥ ५५ ॥ हिमानीभृत्हिमालयः पचोष्णंअतीवोष्णं नलिनेक्षणानांसुंदरीणांउरोजःकुचः ॥ ५६ ॥ यःगिरिःहिमालयः वप्रझरीतटनिर्झरः॥५७॥

आरोहतस्तंतरसासमीरकिशोरकः स्वेदजलाणुराजिम् ॥ निपीयतस्याननपद्ममाध्वीर्द्विरेफभावंप्रकटीचकार ॥ ५८ ॥ शिवाभ्ययोरेकतनुत्वकारणंत्रिलोकपित्रोर्महसोस्तपोवनम्॥ मिथोस्यमानंमिथुनैस्तपस्विनांतथेच्छुभिस्तत्रननामपांडवः ॥ ५९ ॥ तत्रदर्भदलमुष्टिमाहरन्सन्निधास्यवृषभोपदामिव ॥ चित्तमीशपदयोःसमादधत्तमुमारभतदुश्चरंतपः ॥ ६० ॥ चतुरस्तपस्थितिविशेषविधौचरणंविधानुमरिवलेननिजम ॥ सजुगुप्समानइवशत्रु

जितेप्रपदेनतिष्ठतिभुवःस्मतले ।।६१।। भानौललाटंतपभानुजा
लेप्रविष्टदृष्टिंपरितस्तमग्निः ।। भूयोपिभोक्तुंविपिनंदिशोतिप्रेम्णो
परुंधन्निवदृश्यतेस्म ।। ६२।। फलपत्रजलानिलाशनानिप्रविहा
यक्रमशस्तपस्यतोऽस्य ।। विषयेषुनलोलतांप्रपेदेविजयस्याक्षग
णःकराग्रएव ।। ६३ ।। तपोविधौसपावकेनसर्वदिक्षुवासविस्तदा
बभूववेष्टितोधनंजयत्वबांधवात् ।। अजीजनत्तमंगराजमंगवैरि
णंभवानितीवरोषितोदिनेशएवचक्षुरक्षिपत् ।। ६४ ।।

तरसाजवेनसमीरकिशोरकःमंदसमीरः स्वेदजलाणुराजिंनिपीयघर्मजलकणसंघंभा
क्ष्य घर्मजलमपजहार पद्ममाध्वीकमलमकरंदः द्विरेफःभृंगः २ समीरकिशोरशब्दः
॥ ५८ ॥ त्रिलोकपित्रोःपार्वतीपरमेश्वरयोः मिथुनंस्त्रीपुरुषौ ॥ ५९ ॥ मुष्टिमाहरन्
मुष्टिंगृण्हन् सन्निधास्यत्समीपवर्ती ऋषभःनंदिकेश्वरः उपदाउपायनं तत्तुमारभत्क
र्तुमारभत् ॥ ६० ॥ विधिःआचरणं अखिलंसर्वं जुगुप्समानइवनिंदांकुर्वन्निव प्रपदे
नतिष्ठतिस्मपादाग्रेणतपश्चकार ॥ ६१ ॥ भानुजालंकिरणसंघः परितःसमंतात् देशेवि
पिनंअरण्यं प्रेम्णोपरुंधन्प्रीत्याआग्रहंकुर्वन् ॥ ६२ ॥ अनिलःवायुः विषयेषुइंद्रियवि
षयेषु लोलता चंचलताअक्षगणःरुद्राक्षमाला २ इंद्रियसंघः ॥ ६३ ॥ तपोविधौव
पाचरणे वासविःअर्जुनः बांधवात्बंधुत्वात् अंगराजःकर्णःरोषितःकुपितः दिनेशः
सूर्यः ॥ ६४ ॥

पाराशरिप्रापितमंत्रभागैराराधयञ्छंकरमंतरंगे ।। समापिचर्षी
स्तपसाविजेतुंसमत्वमापस्वयमेकएव ।। ६५ ।। तत्तादृशेन
तपसातरुणेंदुमौलिंकुर्वन्कृपापरवशंतनयोमघोनः ।। पादाग्रमेवध
रणौप्रविधायतस्थावुद्यम्यबाहुमुपरीवफलानिलिप्सुः ।। ६६ ।।
निरुध्यवायुंनिभृतंतपस्यतःशिरःसमुत्थादशदिग्विसत्वरी ।। नट
त्स्फुलिंगानवधूमसंततिःस्फुटीचकारास्यधनंजयाभिधाम् ।।६७।।
तस्याथनारदमुखात्तपसः प्रभावंश्रुत्वाहरस्त्रिजगतामधिपोदया
लुः ।। देव्यादृशासदासिसूचितनर्मदृक्षोदित्सन्त्रभीष्टमपिलुब्धक
तामयासीत् ।। ६८ ।। हेरंबगंडमदपंकविशेषकांकोस्कंदोपवाह्य
शिखिपिच्छविलासचूडो।। भूपानदीतटतरुच्छदकॢप्तवस्त्रौकोदंडि

नौव्यरुचतांकुहनाकिरातौ ॥ ६९ ॥ शबरत्वजुषोवरस्यपुंसःश
शिखंडान्नुशकारसंविधानम् ॥ भजतिस्मतदाशिखंडभावंभगव
न्मस्तकभूषणंयदेषः ॥ ७० ॥

पाराशरिःव्यासः अंतरंगेमनसिसतत्वंसतसंख्याकत्वं २ जटापुक्तत्वम् ॥ ६५ ॥ तरुणेंदुमौलिंश्रीशंकरं कृपापरवशःकृपालुः मघोनःतनयःअर्जुनः फलानिलिप्सुः फलानिग्रहीतुमिच्छुः ॥ ६६ ॥ निभृतंअतिशयं विसृत्वरीधूमसंततिः प्रसरणशीलःधूमकल्लोलः स्फुलिंगःअग्निकणः धनंजयाभिधांस्फुटीचकार धनंजयः ( अग्नि ) इतिनामअन्वर्थींचकार ॥ ६७ ॥ प्रभावःसामर्थ्यं हरःश्रीशंकरः देवीपार्वती तद्दिदृक्षाअर्जुनदर्शनेच्छा अभीष्टंदित्सन्इच्छितफलंदातुमिच्छन् लुब्धकःकिरातः २ लोभः ॥ ६८ ॥ हेरंबःगजाननः विशेषकांकःतिलकचिन्हं औपवाह्यंवाहनंशिखीमयूरः भूषानदीगंगा कृतंकृतं कोदंडीधनुर्धरः कुहनाकिरातः मायारूपकिरातः ॥६९॥ शबरःकिरातः शशिखंडात्शकारसंविधानंतुशिखंडः मयूरपिच्छम् ॥ ७० ॥

( गद्यम् ) तदानीमेवरजतगिरिशिखरान्निर्गच्छंतौकिमेतदितिसांशयिकैरपितदनुसरणोचितवेषविरचनाकुलैः प्रमथकुलैःपरिवार्यमाणौसमुच्चलितलांगूलमितस्ततोधावद्भिर्दूरचारश्रमविदारितवदनलंबायमानरसनाग्रपातिनीभिः सृणिकाकणिकाभिर्वनपद्धतिंशुद्धतरींकुर्वद्भिर्द्रुततरश्वसितकंपमानावयवैस्तेपुतेपुवनगुल्मिपुश्वापदानन्विष्यान्विष्यहुंकारमाचरद्भिर्विश्वानिगमाविश्वकद्रुभिरविमुच्यमानपार्श्वभागौदीपकमृगायमाणनिजहरिणशावकानुधाव्यमानपार्श्वभागौप्रशमिततुहिनगिरिजडिमोद्वेगेनभाविनिपदेपदेवनदेवताभिरर्प्यमाणसुरतरुप्रसूनास्तरणेनहिमवनःकटकपथेनसविलासंसंचरमाणौकावेतावदृष्टपूर्वौवनमस्मदीयमाक्रमतइतिरोषकषायितनयानिवारयितुकामैरपितेजोविशेषप्रतिहतोत्साहैराराण्यैरन्यैःशबरयुवभिःकेवलमालोक्यमानौजटावल्लरीमूलमुकुलीभवदंजलिभिस्तपस्विपुंजैर्नभसिविमानवेगंनिरुध्यहर्षाश्रुभिःसममभिवृष्यमाणजयशब्दौतौजगदादिभौदंपतीसविनयमुपासीनस्यशुनासीरसुतस्यतपोवनसीमानंशनैःशनैरासीदताम् ॥ १६ ॥

रजतगिरिःकैलासः सांशयिकःसंशयापन्नः आकुलःव्यग्रः प्रमथकुलं गणसंघः लांगूलंपुच्छं सृणिकालालाकणिकाविंदुः पद्धतिःमार्गः विश्वनिगमविश्वकद्रवः अशेषवेदरूपमृगयाकुशलश्वानः अविमुच्यमानःसहितः तुहिनगिरिजडिमोद्वेगः हिमालयशैत्यभयंयापितंकलुषितं वल्लरीलतापुंजःसंघः जगदादिमौदंपतीजगत्कारणभूतौ पार्वतीपरमेश्वरौ शुनासीरःइंद्रः ॥ १६ ॥

तत्रखलु ॥ (पद्यम्) आपादलंबिजटमातपमात्रभक्ष्यमूर्ध्वीभवद्भुजमुदारतपःकृशांगम् ॥ दृष्ट्वानुगृह्यकुरुवीरमुनींद्रमेनंत्रेधाबभूवसुतवत्सलताभवान्याः ॥ ७१ ॥ क्षोदयन्नपिमहींखुरपातैःकोपिकोपकुटिलोवनकोलः॥घोरघूत्करणघोणमुपागात्कुक्षिमाश्रमभुवःकुरुसूनोः ॥ ७२ ॥ तंवीक्ष्यरौद्रवपुषंमृगशावकेषुत्रासाद्विशत्सुकटिलंबितवल्कभागान् ॥ पर्याकुलेकलकलैरपिपक्षिजालेपार्थोनिवृत्यनियमाज्जगृहेशरासम् ॥७३॥ मुनिरेषयदाभ्ययाद्वराहंमुखरज्यालतिकोजवाज्जिघांसुः ॥ शबरोददृशेतदाभिधावन्धनुराकृष्यसहानुयायिवर्गैः ॥ ७४ ॥ मामुंचबाणंमदनुद्रुतेस्मिन्नपेहिजाल्मेतिकिरातनेतुः ॥ वचःसलक्ष्यंमनसोनकुर्वन्वराहमस्त्रस्यचकारलक्ष्यम् ॥ ७५ ॥ शिलीमुखाभ्यांशिवसव्यसाचिनोःसमुज्झिताभ्यांयुगपत्किटेस्तदा ॥ समंविभज्यायुरभुज्यतत्क्षणंसहोदराभ्यामिवपैतृकंधनम् ॥ ७६ ॥

आपादंचरणपर्यंतं आतपःसूर्यकरः अनुगृह्यकृपापात्रंकृत्वा कुरुवीरःअर्जुनः भवानीपार्वती ॥ ७१ ॥ कोपिकुटिलःभयंकरः वनकोलःवनवराहः घोणमुपागात्नासिकायांउपागमत् कुक्षिःअभ्यंतरदेशः ॥ ७२ ॥ रौद्रवपुःभयंकरदेहः शावकःबालः पर्याकुलःव्यग्रः पक्षिजालंपक्षिसंघः नियमःयोगः शरासंचापम् ॥७३॥ मुनिःपार्थः मुखराशब्दसहिता अभ्ययात् संमुखमगच्छत् जवःवेगः शबरःकिरातः ॥७४॥ अनुद्रुतेस्मिन्पश्चाद्धावितेवराहे जाल्मःअसमीक्ष्यकारी मूर्खः नेतानायकः अस्त्रस्यलक्ष्यंचकारशरंमुमोच ॥ ७५ ॥ शिलीमुखःशरविशेषः सव्यसाचीअर्जुनः समुज्झितःमुक्तःकिटिःवराहः आयुःसमंविभज्याभुज्यत् मृतःइत्यर्थः सहोदरःबंधुः ॥ ७६ ॥

(गद्यम्) ततःकुपितोपिकुरुप्रवीरस्तपःशांततयानातिपरुषमुवाच॥१७॥

कुपितःरोषयुक्तःकुरुप्रवीरःअर्जुनःतपःशांतिःतपसाप्राप्ताशांतिःपरुषंकठोरम् ॥१७॥

( पद्यम् ) अस्मिन्ममावसथमापतितेमयाप्राग्लक्षीकृतेशबरयत्प्र हृतंत्वयातत् ॥ शापस्यवाथधनुषोऽसिवशेनथापिसोढंममाद्यन पसाचभुजोष्मणाच ॥ ७७ ॥

ममावसथमापमितः मत्स्थानमागच्छतः प्राक्पूर्वंवशःदंडचः भुजोष्मणाबाहुप्रतापेन सोढंसहनंकृतम् ॥ ७७ ॥

(गद्यम्) इतितस्यमुनेरंतर्दर्परसपरीवाहवेणीमिववाणीमाकर्ण्य क्षोणीधरधन्वापिसस्मितंप्रत्यभाणीत् ॥ १८ ॥

दर्पःगर्वः परीवाहःजलोच्छ्वासः वेणीप्रवाहःक्षोणीधरधन्वाश्रीशंकरः प्रत्यभाणीत् प्रतिवचनमवोचत् ॥ १८ ॥

(प०) मृदुबुद्धिरंगवचसैवलक्ष्यसेमृगहिंसनंविपिनसीमनीदृशम् ॥ शतशःस्वधर्मइतिपठ्यतेबुधैःशबरस्यवावदतपोधनस्यवा ॥ ७८ ॥

मृदुबुद्धिःजडबुद्धिः मृगहिंसनंपशुहिंसा वनसीमनिअरण्यांतर्भागे बुधःज्ञानी शबरः किरातः तपोधनःऋषिः ॥ ७८ ॥

( गद्यम ) तत्स्वकुलाचारादप्रमाद्यतेमह्यमयुक्तकारिणापिकियद्दूरंप्रकाश्यतेतपसिबाहावप्याहोपुरुषिका ॥ १९ ॥

अप्रमाद्यतेअवहिताय दूरंप्रकाश्यते बहुप्रकटीक्रियते आहोपुरुषिका आत्मसामर्थ्यम् ॥ १९ ॥

( पद्यम) संदृश्यतेखलुतपस्तवशुद्धमेतद्यज्जंतुहिंसनविधौदृढबद्धकच्छम् ॥ आस्तामिदंभुजबलंचमृगात्ययेस्मिन्साहायकंपदुपजीवतिमेशरस्य ॥ ७९ ॥ ईदृशींवचनरीतिमपास्यन्नेहिसांत्वयकियानसिमेत्वम् ॥ अक्षिणकिंचिदरुणिम्निजगत्यामंतकोपिमदतीवविभीयात् ॥ ८० ॥

जंतुहिंसनविधौदृढबंद्धकच्छः प्राणिहिंसाकरणेसन्नद्धः मृगात्ययःवराहवधः॥ ७९॥ अपास्यन्त्यजन्किनापसि कःपदार्थोसिअरुणिमाकोपरक्तता अंतकःयमः विभीयात् भीतिंप्राप्नुयात् ॥ ८० ॥

( गद्यम ) इतिशंकरस्यन्यक्कारवादेनसातंकःकुरुशशांकः पुनरपिगिरंकामप्येवमंकुरयामास ॥ २० ॥

(पद्यम्) यस्माद्वनेचरकुलाधमजल्पसित्वमेवंमनःपुलकयन्स्व जनस्यदृप्तः ॥ तस्मादसंशयमुपांतजुषःकिरात्यास्ताटंकमेवसह सेनकपोलमित्रम् ॥ ८१ ॥ तादृग्वचःश्रवणदाहिमुनेर्निशम्यस र्वेगणात्दृदिरुषानिजिघांसवोऽपि॥देव्याविलोक्यवदनंस्मितगर्भ गंडंतूणार्धकृष्टविशिखेनकरेणतस्थुः ॥ ८२ ॥ अथभिल्लमल्लकुरु वल्लभावुभौपरिफुल्लभल्लकुलशल्यपल्लवैः॥ स्थगितावलोकसरणिं दिवौकसांसमरंभयंकरजवंवितेनतुः ॥ ८३ ॥

न्यक्कारःधिःकारः सातंकःसंतापवशः गिरमंकुरयामासभाषणंप्रकटयामास ॥८०॥ दृप्तःमत्तः उपांतंसमीपं ताटंकं कर्णभूषणं कपोलमित्रंकपोलभूषणायमानम् ॥८१॥ दाहितापकरं देवीपार्वती गर्भःअंतर्भागः विशिखःबाणः ॥ ८२ ॥ भिल्लमल्लः किरात-श्रेष्ठः कुरुवल्लभःअर्जुनः परिफुल्लंविकसितं भल्लकुलं बाणजालं स्थगितंआच्छादितं सर णिःमार्गः दिवौकसःदेवाः वितेनुःचक्रुः ॥ ८३ ॥

(पद्यम्) श्लथसंधिगरुद्भिरेषबाणैःश्रवणालंबिजपाक्षसूत्रघ र्पात् ॥ प्रमथेशमवाकिरत्सदिव्यंप्रतिमालिंगमिवप्रसूनपुंजैः ॥ ॥ ८४ ॥ सरुषीवहरेविकृष्टचापेसहसाशैलसुतापिजातशंका ॥ मघवत्सुतमंगलायदेवीमनसायातइषुःश्रुतिंजजाप ॥ ८५ ॥ स संभ्रमाकृष्टधनुर्गुणोऽपिशंभुःकृपांभोनिधिरिंद्रसूनोः॥संबद्धमात्रा न्कतिचिच्चदेहेचक्रेपराद्धान्कतिचिच्चबाणान् ॥ ८६ ॥

श्लथंशिथिलं संधिगरुत्संधिपत्रं अक्षसूत्रंरुद्राक्षमाला ईशंअवाकिरत्शंकरंआच्छाद यत् प्रसूनपुंजःपुष्पसमूहः ॥ ८४ ॥ रुप्क्रोधः विकृष्टचापःअधिज्यधन्वा शैलसुतापा र्वती मघवत्सुतःअर्जुनः यातइपुःश्रुतिः शिवधनुर्बाणसुखावहप्रार्थनार्थाश्रुतिः ॥ ८५ ॥ ससंभ्रमाकृष्टः सत्वरकृताधिज्जः संबद्धंस्पृष्टं अपराद्धान् च्युतलक्ष्यान् ॥ ८६ ॥

विगाह्यशंभुंविजयस्यबाणाःपुनःपदत्वंपुपुनर्दृष्टचोः ॥ नरादुदा रादभिगम्यलुब्धंनमार्गणायांतिपुनःप्रकाशम् ॥ ८७ ॥ निःस्वे निषंगयुगुलेनितराममर्षीचापेनमूर्ध्निगिरिशंपुरएवदेव्याः॥पार्ष्णि प्रमुक्तधरणिःप्रजहारवेगात्कुर्वन्व्रणंसकुपितःशशिखंडमित्रम् ॥ ॥ ८८ ॥ धनुषाभिहतासमुत्थितैर्धरकन्यारमणस्यमस्तकात् ॥

विपुलैरिवरक्तशीकरैर्विनिपेतेमणिभिःफणाभृताम् ॥ ८९ ॥ देव स्यतस्यजगतांजनकस्यचित्तेपार्थप्रहारजनुषःप्रमदांबुराशेः ॥ भूषाधुनीतटभुविद्विपवक्त्रबाल्यवप्रक्रियाभिरुदितःप्रमदःकणोऽ भूत् ॥ ९० ॥

दृष्टपोःपदत्वंनपूपुःनेत्रगोचराःनवभूवुः नरःमनुष्यःअर्जुनः लुब्धःलोभी२किरातः मार्गणःयाचकः वाणः प्रकाशंनयांतिप्रसिद्धिंनप्राप्नुवंति ॥ ८७ ॥ निषंगःतूणीरः गि रिशंश्रीशंकरं पार्ष्णिःपादपश्चाद्भागः शशिखंडमित्रं चंद्रकलासहचरंभूषणम् ॥८८॥ अभिहतःताडितः धरकन्यारमणःश्रीशंकरः शीकरःबिंदुः फणाभृत्नागः ॥ ८९ ॥ प्र मदांबुराशिः हर्षसागरः भूषाधुनीभूषणायमानानदीगंगा द्विपवक्त्रःगजाननः वप्रक्रिया पर्वततटलीला कणःबिंदुः ॥ ९० ॥

( गद्यम् ) तत्रसगांडिवदंडोऽपिखांडवेतक्षकवधूवधसाधनतया चिरमयमस्मत्कुलविरोधीतिक्रोधनैस्तस्यजटावनकुटुंबिभिः कुंड लिभिर्भक्षितइवतत्क्षणंनालक्ष्यत ॥ २० ॥ ततोयंदैवविपर्ययः किममुष्यमायाकिमितिचिंतापरतंत्रेणापिधैर्यदत्तहस्तोत्साहेनति ष्ठजडात्मन्नर्जुनमेवंनिर्जित्ययशोर्जितुमिच्छसीतिकृततर्जनेनस्ति तवाहनेनवृषभवाहनंप्रतिनियोद्धुमारेभे ॥ २१ ॥

खांडवेखांडवनवने वधूःस्त्री चिरंचिरकालं कुलविरोधीकुलशत्रुः वनकुटुंबीवनवासी कुंड लीनागः ॥ २० ॥ विपर्ययःदुर्विलासः अमुष्यकिरातस्य परतंत्रःव्यग्रः जडात्मन्जड बुद्धे अर्जितुं संपादनंकर्तुं कृत्वातर्जनानिंदायेनसः कृततर्जनः सितवाहनःअर्जुनः वृषभ वाहनःशंकरः ॥ २१ ॥

( पद्यम् ) परुषेमुनिमुष्टिताडनेपतितेलुब्धकवामवक्षसि ॥ शिथि लाजगलुःकिरातिकायाःसितगुंजामणिहारयष्टयः ॥ ९१ ॥ उप वासकृशेभृशंमुनेरुरसिस्वीकृतमुष्टिमार्दवः ॥ प्रजहारहरोपिपीड नात्परिहर्तुंस्वमिवास्यतद्व्रतम् ॥ ९२ ॥

लुब्धकःकिरातः वामवक्षसिसव्यभागे किरातिकाकिरातपत्नी ॥९१॥ मुनिःअर्जु- नः कृशःक्षीणः परिहर्तुंरक्षणंकर्तुम् ॥ ९२ ॥

(गद्यम्) इतिपरस्परमुष्टिप्रहारव्यापृष्टिपरिमृष्टवनकुसुमपरागभस्मां

गरागौसरभसमेकेनबाहुनाजटासुगृहीत्वापरेणवलयितकंठनालौ तौशबरतपोधनौयदामहत्यामधित्यकायामापततनाम् ॥ २२ ॥
तदाझटितिघटितद्वारदरीगर्भनिरुद्धसिद्धमुनिमिथुननिबद्धहाहा कारःतीरवनदूरोत्सर्पिवीचीवेगोत्पाटिताकृष्टमुनिजनपर्णशालास हस्रसुरस्रवंतीपूरोदर्वीकरविभुकंधराखर्वीकरणपटुतरभारोयमुर्वी धरपतिरासीत् ॥ २३ ॥

सरभसंसत्वरं कुसुमपरागः पुष्परजः अंगरागः (र्ज टइति म.भा.) तपोधनःअर्जुनः अधित्यकापर्वतोर्ध्वभूमी॥२२॥ झटितिसत्वरंदरीगर्भः गुहांतभागः वीचीलहरी सुरस्रवं-तीमंदाकिनी दर्वीकरविभुःशेषः कंधराग्रीवा खर्वीकरणपटुः न्हीस्वीकरणसमर्थःउर्वी धरपतिः पर्वतराजाहिमवान् ॥ २३ ॥

(पद्यम्) अवाङ्मुखत्वेननिपात्यशंभुनासमुज्झितोऽयंददृशोविमो हितः ॥ तवाद्यजामातरिमेदशामिमांनिवेदयेत्यद्रिमिवब्रुवन्रहः ॥१३॥ पार्थस्यतस्यभुजयोःपरमेश्वरोऽसौवीर्यंविलोक्ययुधिवि स्मयमानचेताः ॥ चापव्रणेसुरनदीकणसेकशंकामप्युत्सृजन्मुहु रकंपयदुत्तमांगम् ॥ १४ ॥

अवाङ्मुखःअधोमुखः समुज्झितःत्यक्तः विमोहितःमूर्च्छनाभूतः अद्रिःहिमालयः रह सिएकांते जामाताश्रीशंकरः ॥ १३ ॥ विस्मयमानःआश्चर्ययुक्तः सुरनदीकणसेकःगं गाबिंदुसेचनं मुहुःवारंवारं उत्तमांगंअकंपयत् श्लाघयामासइत्यर्थः (उत्तमांगंम-स्तकम्) ॥ १४ ॥

(गद्यम्) तथाविधएवासौचिरादाचरितचेतनास्वागताचारःशनैः शनैरुत्थायपुरतोघंटाभरणघणघणत्कारसहचरेणकंठगर्जितेनकर्ण योः परिकल्पितसुधारसमोक्षेमहोक्षेनिषेदिवांसंभुजमूलप्रसारित गिरिजापाणियुगनखरेखांकुरधोरणीद्विगुणीकृतहारमणिरमणीय वक्षसंपारिषद्गणांजलिकमलवनमध्यराजहंसायमानंमार्दवभरि तशार्दूलचर्मनिर्मितपल्ययनमंकोपरिभागतिर्यगर्पितैकचरणपल्लव संवाहनपरेणशिलादकुमारेणदर्पदुर्ललननिवारणायमुखबंधकशृं खलेनिरुध्यमुहुर्मुहुः करपुटास्फालितककुदशृंगेणभृंगिरिटिनाच

लक्ष्यमाणोभयपक्षभागंगांडीवताडनपरिपीडितचूडाशशिनमाश्वासयितुमवतरद्भिरुडुनिकरैरिवकुसुमवर्षैरवकीर्यमाणंजटाभसितकुसुमचीरधारिभिस्तैरेवचतुर्भिराम्नायपुरुषैः परिपठ्यमानशतरुद्रीयविरुदप्रबंधमंबरेसविधमविलंबमानैस्तुंबुरुप्रभृतिभिःसुरवैणिकैरुपवीण्यमानभक्तजनरक्षणापदानप्रकरणंकर्णपूरीकृततमालमंजरीमधुझरीमिषेणकटाक्षात्साक्षात्कृपामिववर्षंतंप्रज्वलद्भिःपरिष्कारपन्नगफणारत्नैर्नूत्नैःशरव्रणमिवानुबध्यमानावयवमासन्नावतंसशशिकलागलितकिरणधारापातसीतासहिष्णुतयेवदंतपटगर्भवर्तिनास्मितेनसूचितत्हृदयप्रसादंभगवंतंमहादेवमुदीक्ष्यपक्ष्मतटरुहनिमेषविटपिसमुत्पाटनपटुभिःप्रमोदाश्रुपूरैर्नंदीमातृकायमाणपुलकप्ररोहःसविनयमुसृत्यपादारविंदयोःसहस्रकृत्वःप्राणंसीत् २४

असौपार्थः चेतनासंज्ञा स्वागताचारः स्वागतसत्कारः सहचरेणयुक्तेन महोक्षेनिषेदिवांसंमहावृषभारूढं पाणिःहस्तः धोरणीशैली शार्दूलःव्याघ्रः पल्ययनंपृष्ठासनं तिर्यगर्पितःतिर्यक्स्थापितः शिलादकुमारःनंदिकेश्वरः ललनंचेष्टा आस्फालितःकिंचित्ताडितः ककुदंवृषांगं उडुनिकरः नक्षत्रसंघः अवकीर्यमाणंआच्छादितं भसितंभस्म चीरंवल्कलं आम्नायःवेदः अंबरसविधंआकाशसमीपं वैणिकैःउपविण्यमानं गायकैर्गीयमानं मधुझरीमकरंदप्रवाहः परिष्कारःविभूषणं आसन्नासमीपवर्तिनी पादारविंदंमाणंसीत् चरणकमलंप्रणनाम ॥ २४ ॥

( पद्यम् ) स्वामिन्मयाजडधियात्वयिदेवदेवेवाचाशरेणधनुपादृढमुष्टिनाच ॥ यत्तेचतुर्विधमकारिरणेतदागःक्षंतव्यमद्यभवताकरुणार्णवेन ॥ १५ ॥

जडःमंदः देवदेवः महादेवः आगःपापं२अपराधः करुणार्णवः कृपासागरः॥१५॥

( गद्यम् ) इतिविज्ञापयंतमेनंपारिजातपल्लवतल्लजप्रतिमल्लस्यपाणिपल्लवस्यपरामर्शनेनप्रमुषितरणवेदनांगंप्लवंगकेतनमनंगशासनोप्येवमवादीत् ॥ २५ ॥

पारिजातपल्लवतल्लजः कल्पतरुप्रशस्तपल्लवः मल्लःयोधः परामर्शनेनप्रमृषितास्पर्शनेनअपहरणंकृता प्लवंगःकपिः अनंगशासनः श्रीशंकरः ॥ २५ ॥

( पद्यम् ) यथातृतीयेनयुधिप्रवीरतवापराधेनभवामितुष्टः ॥
तथानभक्त्यातपसांविभूत्यातरुप्रसूनार्चनयापिवह्न्या ॥ १६ ॥
तृतीयापराधः धनुर्दंडताडनं हृष्टःतुष्टः विभूतिःमूर्तिः प्रसूनार्चनंपुष्पपूजा ॥ १६ ॥
( गद्यम् ) इतिसुधामाधुरीधुरीणंवचनमभिधाय ॥ २७ ॥
सुधामाधुरीधुरीणं अमृतमाधुर्यसदृशम् ॥ २७ ॥
( पद्यम् ) तत्क्षणाद्धनुरिषूनपितांस्तान्सन्निधाप्यविभुरस्त्रमपि स्वम् ॥ पांडवायधनुराहतिरीतेः पारितोषिकमिवप्रदिदेश॥१७॥
तस्याथपाशुपतलाभदुरापदीप्तेरक्ष्णःसमक्षमपरिप्लवपक्ष्मपंक्तेः ॥
आश्चर्यवृत्तिरखिलैरनुगामिभिःस्वैरंतर्दधेसभगवानमृतांशुमौलिः ॥ १८ ॥ इतिश्रीअनंतभट्टकृतेश्रीमतिचंपूभारतेचतुर्थस्तबकः समाप्तः ॥ ४ ॥
इषुःबाणः संनिधाप्यसमीपंगमयित्वा विभुःशंकरः स्वंअस्त्रंस्वकीयंपाशुपतास्त्रं पांडवः अर्जुनः धनुराहतिःधनुष्ताडनं दिदेशदत्तवान् ॥ १७ ॥ दुरापःदुर्लभः अपरिप्लवः अचंचलः वृत्तिःव्यापारः अमृतांशुमौलिःअंतर्दधे श्रीशंकरःगुप्तोबभूव ॥ १८ ॥

इतिचतुर्थस्तबकः समाप्तः ॥

---

## अथ पंचमस्तवकः ॥

( पद्यम् ) अथसविधतपोधनैःकृताशीरमरपतेर्धृतशासनःसपार्थः॥
रयजितपवनंसमातलिःसन्रथमधिरुह्यमुदादिवंप्रतस्थे ॥१॥ नाकमेत्यधनुरंकितदोष्णानायकोदिविषदामतितुष्टः॥ नामफाल्गुनइतिब्रुवतास्वंनंदनेनजगृहेपदयुग्मे ॥ २ ॥ पाणिनापरिमृशन्नमुमिंद्रःपक्ष्मलीकृतजयंतमहेर्ष्यः ॥ आदरेणधुरिनाकिगणानामासनार्धमधिरोपयतिस्म ॥ ३ ॥ सदसिवसतितस्मिन्सर्वभौमेकुरूणांकपटशबरबाणैःकल्पितार्द्रव्रणेऽपि॥ निखिलसुरवधूनांनेत्रसंघाःसमेतानिशितकुलिशकल्पानिर्दयंसंनिपेतुः ॥४॥ आस्थानसीम्नितनयाद्गिरिशेनयुद्धमाकर्ण्यहर्षविकसन्मनसोमघोनः ॥ अंगेऽखिलेप्रसरतांपुलकांकुराणामक्ष्णांसहस्रतयमेवत्रभूवविघ्नः ॥५॥
आशीःआशिर्वादः अमरपतिःइंद्रः धृतशासनंस्वीकृतनिमंत्रणं रयजितपवनः जव-

जितवायुः दिवंस्वर्गलोकम् ॥१॥ दोष्णावाहुना दिविषदःदेवाः नंदनःअर्जुनः पदयुग्मे जगृहेपादौननाम ॥ २ ॥ पाणिनापरिमृशन्हस्तेनपरिस्पृशन् पक्ष्मलीकृतामवृद्धाकृता महेर्ष्याईर्ष्या जयंतः इंद्रपुत्रः धुरिअग्रभागे नाकिगणाःदेवाः अधिरोपयतिस्मस्थापयामास ॥ ३ ॥ कपटशवरःशंकरः व्रणःक्षतः कल्पितःकृतः निशितंतीक्ष्णं कुलिशंवज्रं कल्पंसदृशं समेतःनेत्रसंघः संधीभूतंनेत्रकटाक्षजालम्॥४॥आस्थानंसभा मघवाइंद्रः सह स्रतयमेवविघ्नः बभूव सहस्रनयनेपुलोम्नाभावात् पुलकांकुरप्रसरणाभावः ॥ ५ ॥

आज्ञयापितुरमर्त्यसमाजादग्रतःस्वनितमंगलवाद्यम्॥वारणेंद्रम धिरोप्यजयंतोवैजयंतमनयाद्विजयंतम् ॥ ६ ॥ आनतस्यपदयो रथजिष्णोराशिषानुपदमिंद्रपुरंध्री ॥ पारिजातकुसुमस्थपरागैः फालसीमनिलल्लामचकार ॥७॥ पुनःपुनस्तत्रपुलोमपुत्र्याजयंत शंकांददतःस्वकांत्या ॥ नरस्यमौर्वीकिणएपदोष्णोर्नामग्रहेषुस्ख लनंन्यरौत्सीत् ॥ ८ ॥ पितुरिवास्त्रकलांदिविगायकात्पिककुला वृतकंठरवोदयः ॥ परित्त्वृतामृतदिव्यजनावृतःपरिशिशील्सगीत कलामपि ॥ ९ ॥ तमुर्वशीतत्रकदाचिदेत्यस्वयंरहःकर्मणिभग्न कामा ॥ अयेपृथापत्यतवाभिधेवक्लीबत्वमेहोतिशशापकोपात् ॥ १० ॥ तद्बुध्वाहरिरूचेतंशापोयंवत्सतेमुदे ॥ चित्रसेनोक्तविद्या याःसहकृत्वाभवेदिति ॥ ११ ॥

अमर्त्यसमाजःदेवसमूहः स्वनितंनादकृतं वारणेंद्रःहस्तिश्रेष्ठः ऐरावतःवैजयंतः इंद्र प्रासादविशेषः ॥ ६ ॥ जिष्णुःअर्जुनः आशिषानुपदंआशिर्वचनानंतरं इंद्रपुरंध्रीइं द्राणी फालःललाटः ललामतिलकः ॥७॥ पुलोमपुत्रीइंद्राणी नरःअर्जुनः मौर्वीकि- णः धनुर्ज्याघातचिह्नं स्खलनंन्यरौत्सीत्आह्वानशंकांनिवारितवान् ॥ ८ ॥ गीत कलामपिपरिशिशील गायनमपिअभ्यस्तवान् पिकःकोकिलः दिव्यजनावृतः देववेष्टितः ॥ ९ ॥ रहःकर्म सुरतविषयः भग्नकामाविफलेच्छा अभिधानामक्लीबत्वमेहिनपुंसकत्वं प्रामुहि ॥१०॥ बुध्वाश्रुत्वा मुत्हर्षः विद्यामहकृत्वागायनादिविद्यासहायंकृत्वा ॥११॥

( गद्यम् ) कदाचिदस्त्रविद्याशिक्षापरिसमाप्तौसुरसमक्षंगुरुदक्षि णात्वेनविपक्षकुलक्षपणंभिक्षमाणेनसहस्राक्षेणस्वमस्तकादाक्षि प्यशिरसिनिर्क्षिप्तकिरीटोवल्क्षाश्वोयंमातलिपरिकल्पितरथ्येन

नंदनवनमंदपवनसंदीयमानकेतनस्पंदनेनस्यंदनेननिर्गत्यविलंघि तदूरवियत्पथः पाथोनिधौगंभीरनीरपूररक्षितरक्षःकुलकोलाहल नीचीकृतवीचीरवरसातलकुहरमुखंनिरुध्यरणप्रस्तावंवितस्तरे ॥ तावदनाकर्णितपूर्वगांडीवविस्फारश्रवणादहंपूर्विकयायुगपदभि षेणनवतोदिविषदवध्यभावादध्यातमरणान्क्षिप्रैः क्षुरप्रैर्विश्रा णितविवरादुरसःकृतप्रयाणैः प्राणैस्त्रिकोटिशोनिवातकवचानपि प्रवातकवचानेवविरचय्यनिवर्तमानोयंनभसिप्रमादादापतितेनप तंगपरिवेषेणेवस्फाटिकप्राकारेणपरिगुप्तिमतोहिरण्यपुराद्विदित बंधुजनवृत्तांततयारोपादभिगम्यकलहायमानान्कालकेयानपि कालगेहातिथीन्प्रथमंपाशुपतेनमंत्रपूर्वंनिमंत्रयांचक्रे ॥ २ ॥

विपक्षःशत्रुः क्षपणःनाशः निक्षिप्तंस्थापितं वलक्षाश्वंश्वेतहयंपार्थं संदीयमानंकेतन स्पंदनंक्रियमाणं केतुकंपनं स्यंदनःरथः वियत्आकाशं पाथोनिधिनीरपूरः सागरजलपू- रःनीचीकृतवीचीरवंअल्पीकृतलहरीशब्दंरसातलकुहरमुखं पातालमुखं रणप्रस्तावं प्रत- स्तरेयुद्धंप्रकटीचकार ॥१॥ गांडीवविस्फारः गांडीवधनुर्ज्याटणत्कारघोषः अहंपूर्विका युद्धसामर्थ्यगर्वभाषणं अभिषेणनवतःशत्रौअभिगमनंकुर्वतः अवध्यभावःअवध्यत्वं क्षुर प्रःबाणविशेषः विश्राणितविवरंदत्तमार्गः निवातकवचान् शस्त्राभेद्यकवचान् २ दैत्य विशेषान् प्रवातकवचानेवविरचय्य गतप्राणान्कृत्वा पतंगःसूर्यः कालकेयान्दैत्यविशे षान् कालगेहातिथीन्निमंत्रयांचक्रेजघानेतिभावः ॥ २ ॥

(पद्यम्) अवायुनेयाःशरदभ्रपंक्तीरविद्यमानास्तमयाश्वतारा: ॥ दैतेयसंहारभवाःसजिष्णुर्दिविप्रतिष्ठापयतिस्मकीर्तीः ॥ १२ ॥ हतरिपुंविनिवृत्तमवेक्ष्यतंहरिहयस्यमुरेःसहतुष्यतः ॥ नयनवारि भिरंगमनाप्लुतंनददृशेतिलमात्रमपिस्वकम् ॥१३॥ पुरिवज्रिणः सुरनुतिप्रसरत्पुलकावमग्नभुजचापकिणः ॥ मनसेसपंचशरदोप्स रसांवसतिस्मपंचशरदोविजयः ॥ १४ ॥ तस्यवृत्तमधिगम्यलो मशाद्धर्मजोऽपिमुदितःसहानुजैः ॥ प्राप्ततीर्थमुनिसेवनःक्रमात्पा वनंबदरिकावनंययौ ॥ १५ ॥ तत्रब्रह्मपरायणैर्मुनिजनैःसंसेव्य मानांतिकौसध्यश्चौयमिनौनिरीक्ष्यसनरंनारायणंचाख्यया ॥ अं

गेनानिशमंतरेणमहतीमेकांक्षमांसंस्पृशन्वाह्यैरष्टभिरंगकैरपिपरां पस्पर्शपार्थःक्षमाम् ॥ १६ ॥ विलोकनैर्विश्रमशाखिभिस्तयोर्भ वाध्वगानांपरिधूनितश्रमः ॥ निवासमालंब्यतपोवनेतदाविवासदुः खाद्विरराम पार्थिवः ॥ १७ ॥

अभ्रपंक्तिःमेघमाला अविद्यमानाचिरकालातारा तारकासदृशाशुभ्राइत्यर्थः दैतेय संहारभूःदैत्यवधोत्पन्ना ॥ १२ ॥ हरिहयःइंद्रः नयनवारि नेत्रानंदाश्रु अनाप्लुतः अक्लिन्नः तिलमात्रं अत्यल्पं विनिवृत्तःआगतः ॥१३॥ वज्रिणःपुरिइंद्रनगर्यां पुलका वमग्नःरोमांचनिमग्नः चापकिणःधनुर्ज्यांक्षतचिह्नं पंचशरदः मदनप्रदः पंचशरदः पंचव- र्षाणि ॥१४॥ वृत्तमधिगम्यवर्तमानंज्ञात्वा धर्मजःधर्मराजा पावनः पवित्रः ॥१५॥ सध्र्यंचःसहचरः यमिनः संयमिनः जितेंद्रियःस्वाधीनेंद्रियः आख्यासंज्ञा अंतरेणअंगेन चित्तेन अनिशंस्पृशन्सदाधारयन् एकाक्षमाशांतिः पराक्षमापृथ्वीक्षमांपस्पर्श प्रणिपातं चकार ॥ १६ ॥ विश्रमशाखीविश्रामरूपवृक्षः भवाध्वगःसंसारमार्गेचरः परिधूनितः अपहृतःविवासदुःखंप्रवासश्रमः ॥ १७ ॥

( गद्यम् ) एकदातत्रस्नुषावत्सलतयेवमारुतेनपुरतोनीतमसासहि मटवीपर्यटनखेदसंपदामंधंकरणमलिकुलचेतसामासेचनकमक्ष्णां कमपिकल्हारमुकुलमादायकलभ्येतपुनरेतादृशमितिकौतुकह र्षाभ्यांसूचिततर्षयापार्षत्यारहसियाचितः पार्षदश्विः क्षणंविचिं त्यतद्विचिचीषयादिशमुदीचींप्रतस्थे ॥ ३ ॥

स्नुषाद्रौपदी वत्सलताप्रेम असासहिंअसहमानं अलिकुलंभ्रमरसंघः आसेचनकःअ त्यानंददायकः कल्हारमुकुलमादायकमलंगृहीत्वा सूचिततर्षःज्ञापिताभिलापः पार्षद- श्विःभीमः तद्विचिचीषा मुकुलंगवेषणनहेतुः ॥ ३ ॥

( पद्यम् ) क्षिप्रंविलंघ्यगिरिशैवलिनीवनानिगच्छन्ससौपथिदद र्शकपिंमहांतम् ॥ दृग्भ्यामवंतमरिपत्तनदाहकालेनिद्राभयादुप नतामिवकुंभकर्णात् ॥ १८ ॥

शैवलिनीनदी कपिःवानरः अरिपत्तनंशत्रुपुरंलंका दृग्भ्यामवंतं नेत्रपिधानांतरेरक्षंतं उपन ताशरणागता ॥ १८ ॥

( गद्यम् ) अभीरसौगभीरमभाणीच्च ॥ ४ ॥

अभीःभीतिरहितः असौभीमः गभीरमभाणीच्चगंभीरंभाषणमवोचत् ॥ ४ ॥

( पद्यम् ) कस्त्वंनिरुध्यपदवीमविनीतवुद्धेनिद्रास्यपेहिनसहेगमनेविलंवम् ॥ क्रोधोभुजामिवममाद्यहिडिंवहंतुरुद्यद्गदांतवतनूमपिमूढकुर्यात् ॥ १९ ॥ कौर्यस्पृशानदनुकौरवसार्वभौमवाचातयासपदिमारुतनंदनस्य ॥ दृग्द्वारपक्ष्मपुटयुग्मकपाटकूटनिद्रार्गलाहरणकुंचिकयावभूवे ॥ २० ॥ इत्थंगिराकिंचिदुदीक्ष्यतस्यलांगूलमात्रेतरलःकपींद्रः ॥ कोपारुणाक्षंकुरुसिंहमेनंस्वापारुणाक्षःस्वयमेवमूचे ॥ २१ ॥ आवालधेररिमहागृहदाहशौंडादाचौषधाचलधृतिस्थपुटात्किरीटात् ॥ अंगेष्वजातचलनोप्यखिलेषुभीममालोक्यमंदमधरोष्ठपुटेचकंपे ॥ २२ ॥ भद्रस्वस्त्यस्तु तुभ्यंचिरमिहजरयानिद्रयाप्यातुरोहंप्रत्युत्थानादिकर्मण्यपटुरवयवैरस्मितस्मात्त्वमेव ॥ जात्यावस्थानरीत्यापिचविपिनपथेप्राप्ततिर्यक्त्वमेवंवालाग्रेमांविकृष्यद्रुतमभिलषितंप्रार्थयेसाधयेति ॥ ॥२३॥ अरातिसंघातनिघातकर्मण्यवालहस्तोममवालहस्तम्॥ उद्धृत्ययाहिद्रुतमुत्तरत्रेत्युक्त्वैवसश्रांतिमुपाजहार ॥ २४ ॥ इत्युक्तएषधरणौपरिघंनिधायवल्कंदृढंचपरिधायभुजार्गलाभ्याम्॥ तंकृष्टुमेवनशशाकसतुप्लवंगोवालस्थयाघनतयास्यमनश्वकर्ष॥२५॥

पदवीमार्गः अविनीतःमंदः अपेहितिष्ठ उद्यत्गदांउद्यत्आविर्भवत्गदः रोगःयस्यां तां २ ऊर्ध्वगामिनींगदाम् ॥१९ ॥ कौरवसार्वभौमःभीमः मारुतनंदनःहनुमान् कूटं समूहः अर्गला ( अडसळ म.भा. ) कुंचिका ( किल्ली म.भा. ) ॥ २० ॥ लांगूलंपुच्छं कपींद्रःहनुमान् कोपारुणाक्षःक्रोधेनरक्तवर्णनेत्रःकुरुसिंहःभीमःस्वापारुणाक्षः निद्रयारक्तवर्णनेत्रः ॥ २१ ॥ अरिःरावणः शौंडःप्रवीणः औषधाचलधृतिःद्रोणपर्वतधारणं अधरोष्ठपुटेमंदंचकंपे संभाषणप्रारंभंचकारेत्यर्थः ॥ २२ ॥ जरातुरःवृद्धदशापीडितः अपटुःअशक्तः अवस्थानंतनुस्थितिः तिर्यक्त्वंवक्रत्वं२ पशुत्वं वालाग्रंपुच्छलोमाग्रं अभिलषितंइष्टहेतुः ॥ २३ ॥ अरातिःशत्रुःअवालःवलवान्प्रौढः वालहस्तःपुच्छरूपहस्तः उत्तरत्रअन्यस्मिन्देशे ॥ २४ ॥ एषःभीमसेनः परिघःगदा वल्कंवल्कलं भुजार्गलौअर्गलातुल्यौभुजौ तंपुच्छंशशाकसमर्थोवभूव प्लवंगःहनुमान् वालस्था पुच्छलोमस्था घनतादार्ढ्यम् ॥ २५ ॥

(गद्यम्) तदनुविनयविस्मयव्रीडापारदृश्वनामातरिश्वसूनुनात्वंवा सर्वलोकवासिषुकोसीतिपृष्टःकपिकुंजरःस्वमंजनायांप्रभंजनेनसंजनितंजानकीजानेर्हृदयरंजकंलेखवाहंव्याजहार ॥५॥ सत्वहनुमानंतस्यवचनमाकर्ण्य ॥ ६ ॥

व्रीडापारदृश्वा लज्जापारंगतः मातरिश्वसूनुः भीमसेनः वासवःइंद्रः कपिकुंजरःकपिश्रेष्ठःप्रभंजनःवायुः जानकीजानेर्हृदयरंजकं श्रीरामप्रियंलेखवाहःदूतः ॥ ५ ॥ वचनंहनुमद्भाषणम् ॥ ६ ॥

( पद्यम् ) प्रीतेनतेनपुनरप्यधिपःकपीनामूचेतथायदिभवानधुनार्थयेहम् ॥ कर्तुंतनुंनयनयोःपथितावकींतांतत्तादृशीमुदधिपल्वलतासवित्रीम् ॥२६ ॥ इत्युक्तोऽयंप्रवृद्धोंगैर्हेलयारुरुधेनिजैः ॥ वैमात्रेयस्यतस्यैवमार्गांदिविषदामपि ॥ २७ ॥ त्रस्तस्यतद्वपुरुदीक्ष्यसजातिशंकिमैनाकसंशयकुठारितपक्षलोपम् ॥ मोहेयथा नयनयोर्मुकुलीबभूवबोधेतथैवकरयोरपियुग्ममस्य ॥ २८ ॥ प्रमोदात्परिपुष्यद्भिःप्रतिक्षणमथांगकैः॥ भीमेनाप्युदघाटीवभ्रातुर्दृष्टिविडंबना ॥ २९ ॥

कपीनांअधिपःमारुतिः तावकीत्वत्संबंधिनी उदधिपल्वलता सवित्री समुद्रमल्पजलाशयकर्त्री ॥२६॥ अयंमारुतिः वैमात्रेयः मारुते सापत्नबंधुः भीमसेनः दिविषदांमार्गंरुरुधेआकाशं रुद्धवानित्यर्थः ॥ २७ ॥ सजातिशंकिमैनाकः अयंममसजातिःपर्वतः इतिशंकावान्मैनाकः कुठारितनाशकारकःपक्षलोपः पक्षाभावः बोधेहनुमद्रूपज्ञाने ॥ २८ ॥ प्रमोदात्परिपुष्यत् हर्षात्पुष्टिंस्वीकुर्वत् भ्राताहनुमान् ॥ २९ ॥

( गद्यम् ) सविनयमेवंव्यजिज्ञपच्च ॥ ७ ॥

सविनयंव्यजिज्ञपत्नम्रतापूर्वकं विज्ञापितवान् ॥ ७ ॥

( पद्यम् ) प्रार्थ्यमानपददर्शनंचिरात्पश्यतःपथिभवंतमग्रजम् ॥ विस्मयांबुनिधिरपमेऽधुनावीरवर्यभवतापिदुस्तरः ॥ ३० ॥ राघवस्यसहजादपित्वयिप्रेमवृत्तिरधिकेतिमेमतिः ॥ यामिनीचरवधोत्सवेयतोलक्ष्मणादधिकमंशमग्रहीः ॥३१॥ आर्यक्षमस्वममवागपराधमुग्रमित्याननंचरणयोश्चिबुकेगृहीत्वा ॥ जिघ्रन्शिरस्यवर

जंमुमुचेहनूमान्भीमोऽप्यमुष्यविरहासहनोऽश्रुबिंदून् ॥ ३२ ॥
गच्छतोस्यपथिमारुतेःपुरोगंधमादनमभूत्कुलाचलः ॥ वानरेंद्रइ
वगाढवीक्षिकावासनाभिरविमुक्तदृक्पथः ॥ ३३ ॥ अलकेशयो
षिदलकेशयैःसुमैःसुरभिंप्रमोदसुरभिंनभःसदाम्॥ शिखरेसतस्य
महतीमुदग्दिशोमणिदर्पणीमिवददर्शवापिकाम्॥३४॥ यक्षाधि
पस्ययशसीवगृहीतदेहेदृष्ट्वाभयादपगतेसतिहंसयूथे ॥ कक्षानिवे
शितगदःसविगाह्यतोयंफुल्लानिहल्लककुलान्यखिलान्यलावीत् ३५

अग्रजःज्येष्ठबंधुः विस्मयांबुनिधिःआश्चर्यसागरः भवतापिदुस्तरःत्वयापिउल्लंघयितु मशक्यः ॥ ३० ॥ राघवसहजःलक्ष्मणः यामिनीचरःराक्षसः अधिकमंशमग्रहीः अधिकंकार्यंस्वीकृतवानसि ॥ ३१॥ वागपराधःदुर्भाषणं आनतःनम्रः अवरजःकनिष्ठबंधुः चिबुकःओष्ठाधोभागः ॥ ३२ ॥ कुलाचलःकुलपर्वतः वानरेंद्रःहनुमान् वीक्षिकावासनादर्शनेच्छा अविमुक्तदृक्पथः प्रत्यक्षदर्शनविषयभूतः ॥ ३३ ॥ अलकेशःकुबेरः योषिदलकेशयः स्त्रीकेशस्थः सुमंपुष्पंसुरभिःसुगंधः प्रमोदसुरभिःहर्षकामधेनुः दर्पणःआदर्शः ॥३४ ॥ अपगतःपलायनंकृतः यूथःसंघः निवेशितगदःगदास्थापितः तोयंविगाह्य उदकंप्रविश्य हल्लकान्यलावीत् कल्हारकमलमच्छिदत् ॥ ३५ ॥

( गद्यम् ) तदात्वएवतद्रक्षिणःकस्त्वंसाहसिकआयुरग्रभूमिमारुरु
क्षसीतिसमंततोनिरुंधानानन्वर्थतावलंबिततयालोहितानांलोच
नानांप्रतिबिंबैस्तांसरसींपुनरपिसौगंधिकांतर्वल्लीमिवकुर्वतः क्रो
धवशान्नामयातुधानान्सभीमोरंहसासमुपबृंहितसिंहनादश्चिरत
रमुपोषितस्यपरिघस्यपारणांपरिकल्पयांचक्रे ॥ ८ ॥

आयुरग्रभूमिमारुरुक्षसिमर्तुमिच्छसि अन्वर्थतावलंबितताकोपस्वीकारंकृता सौगंधिकांतर्वल्ली रक्तकमलगर्भवती सरसीसरोवरं यातुधानःराक्षसः रंहःसामर्थ्यं समुपबृंहितः कृतभयंकरः परिघस्यपारणांपरिकल्पयांचक्रेजघानेतिभावः ॥ ८ ॥

(पद्यम्) रक्षःसृतारक्तनदीमहाद्रेर्विष्वक्पतंतीवियतिस्थितानाम्॥
क्षरन्तटीधातुझरीतिबुद्धेःकरावलंबंकलयांचकार ॥ ३६ ॥ पर्वत
स्याग्रवस्तुभ्यःप्रवस्तुंनेच्छतींदृशम् ॥ उत्खायसमहायत्नादुपा
सीददुपत्यकाम् ॥ ३७ ॥

विष्वक् पतन्ती सर्वतो निर्गतः महाद्रिःगंधमादनः वियतिआकाशेधातुझरीधातुनदी
॥३६॥प्रवस्तुं प्रवासापगंतुं उपत्यकापर्वतांतिकभूमिः उपासीदत् अधिगतवान्॥३७॥

(गद्यम्) तदानीमिनरेण्वपिभ्रातृपुकमलपालिकासूनोःस्कंधभागशिबिकामधिरुह्यतस्यैवकटकमागनेषुमत्सुमारुतिरादरेणग्हसिविकसितांकुसुमसंहतिमूर्तानुरागभ्रमदांभ्रमदांप्रत्युपदामकरोत्॥९॥

कमलपालिकासूनुःघटोत्कचः मारुतिःभीमः अनुरागःप्रीतिः कुसुमसंहतिःपुष्पपुंज
भ्रमदाभ्रमदाभ्रमदात्रीद्रौपदी उपदाउपायनम् ॥९॥

(पद्यम्) सरसीवकचेप्यस्याधार्तराष्ट्राकुलीकृते ॥ ऊपेतथावरतनोरूर्मिमत्यलिभासुरे ॥ ३८ ॥

धार्तराष्ट्रःहंसः आकुलीकृतःव्याप्तः वरतनुः द्रौपदीअलिभासुरः भ्रमरवत्कृष्णवर्ण

(गद्यम्) अथकदाचिदाखेटायतटाटवीमटतितस्मिन्वकद्विपिजटोनामदुर्घटः सुरारिरुटजमुपेत्यवेदिकयावैताननूनपानइवदयितयासहत्रीनपितान्वीरान्स्कंधमानीयजवात्केनचिदपदिशापथेनप्रतस्थे ॥ १० ॥

आखेटःमृगया वकद्विट्भीमः जटःजटासुरः दुर्घटसुरारिःदुर्जयदैत्यः उटजःपर्णशाला
तनूनपात्अग्निः दयिताद्रौपदी शापथःक्षुद्रमार्गः ॥ १० ॥

(पद्यम्) गतागतेतत्रघटोत्कचेनजटेनचस्कंधधृतस्यराज्ञः ॥ पादार्पणालाभशुचावनंतत्पतत्रिनादैरिवरोदितिस्म ॥३९॥ वनंयियासोःकठिनेसभांतेजटासुरोधोनवभूवयस्य॥ वनेविजृंभत्करुणेतुतस्यजटासुरोधोजनिधर्मसूनोः ॥ ४० ॥ नीत्वाकिमद्यवनसीमनिदूरमेतानत्रैवहन्मिसहसेतिधियैवतिष्ठन् ॥ आलक्ष्यतायममरारिरनूष्णजंघोगंतुंपदात्पदमपिक्षितिपानुभावात् ॥४१॥ मध्येमार्गवनांतान्मदगजगमनेमारुतौसंमुखेस्मिन्सार्धतेनाथयोद्धुंधृतरभसमनस्तीव्रदर्पप्रसारः ॥ दैत्यस्तान्राजपुत्रान्क्षितितलमनयद्बाहुनास्कंधमध्यात्क्रोधांधोऽरत्निसीम्नासपुनरनिलभूर्दारुणंतस्यशीर्षम् ॥ ४२ ॥ निपेतुषस्तस्यनिकृत्तमूर्ध्नोनितांतभारेणवनांतभूमिः॥ निम्नाभवद्दूरममृष्यसंगेनिजैःप्रतीकैरिवसंकुचंती॥४३॥ निष्कंटकाभवत्सर्वानिहतेस्मिन्वनावनिः ॥ उत्कंटकाभवत्प्रीतेरु

न्नत्यासातुपार्षती ॥ ४४ ॥ ततस्तेश्वेताद्रिंचिरमधिवसंतःकुरुव
राःशिताश्वस्यप्राप्यामुदमनुबभूवुर्निरवधिम्॥ कथाशेषीकारात्रि
दशरिपुवर्गस्यंबहुधाधनुर्ब्रह्मोज्झत्वंशतमखभुजेस्थापितवतः ।४५।

रासः धर्मस्यपादार्पणालाभः चरणस्थापनस्यअलाभः शुचादुःखेन पतत्रिनादःपक्षिनादः ॥ ३९ ॥ जटासुरोधःजटासुप्रतिबंधः विजृंभत्करुणावर्धमानदया जटासुरोधः जटासुरस्यअधोभागः ॥४०॥ एतान्धर्मादीन् धीःबुद्धिः अमरारिःदैत्यः अनुष्णजंघः मंदजंघः क्षितिपःयुधिष्ठिरः अनुभावःमाहात्म्यम् ॥४१॥ मदगजःमत्तहस्ती मारुतिःभीमः रभसःवेगः दर्पःगर्वः क्षितितलमनयत् भूम्यांस्थापयामास २ भूतलेआनयामास अरत्निमीस्नाहस्ताग्रेणेत्यर्थः अनिलभूःभीमसेनः ॥ ४२ ॥ निकृत्तमूर्धाछिन्नशीर्षानितांतं अत्यंतंप्रतीकसंकुचंतीअवयवसंकोचंकुर्वती ॥ ४३ ॥ निष्कंटकाशत्रुरहिता अवनिःभूः उत्कंटकाप्राप्तरोमांचा उन्नत्याअतिशयेन पार्षतीद्रौपदी ॥४४॥ श्वेताद्रिःहिमालयः सिताश्वःअर्जुनः निरवधिमुदःअमर्यादानंदः शेषीकारात्हननात् त्रिदशादेवाः धनुर्ब्रह्मोज्झत्वंधनुर्वेदत्यागं शतमखः इंद्रः ॥ ४५ ॥

तमनुक्रमभाषितेशयुद्धंसबहूकृत्यचलाचलेनमूर्ध्ना ॥ नृपतिःसह
जैःसमंमहाद्रेर्न्यंहृतद्वैतवनंनितांतहृष्टः ॥ ४६ ॥ नरेंद्रपुत्राःसह
याज्ञसेन्यानकेवलंतत्रतपोधनानाम् ॥ नेत्राणिजन्हुर्नियमैःकृशां
गानेदीयसीनांवनवीरुधांच ॥ ४७॥ तदनुसखलुमानीसर्वसाम्रा
ज्यलक्ष्मींप्रचिकटयिषुरेषांप्राप्तकार्श्योन्नतीनाम् ॥ कुरुनृपतित
नूजोघोषयात्रापदेशादभजतबलसंघैराहृतस्तंवनांतम् ॥ ४८ ॥
कर्णानिलैस्तत्रकरिव्रजानांचलत्सुसर्वेषुचमूरजस्सु ॥ रजस्तुचि
त्ताश्रितमस्यराज्ञोबलादिवाचंचलमेवतस्थौ ॥ ४९ ॥ तत्ररज्जु
नहनस्यभाविनःस्थानसूचनकृतीइवांगदे ॥ धारयन्भुजयुगेनकौ
रवःसैनिकान्सविबभाजपंक्तिशः ॥ ५० ॥ अभ्रंलिहस्यवटभूमि
रुहस्तलेसौस्थित्वाशृणोत्तदनुवैणिकगीतिरीतिम्॥ संगीतभंगिर
सिकंसहबंधुवर्गैराकारयन्त्रिवसुराधिपगायकेंद्रम् ॥ ५१ ॥

ईशःश्रीशंकरः मूर्धाचलाचलःशीर्षकंपः महाद्रिःहिमालयः हृष्टःसंतुष्टः ॥ ४६ ॥ याज्ञसेनीद्रौपदी तपोधनःमुनिः नेत्राणिजहुःलोचनानिहृतवंतः वस्त्राणिहृतवंतः नेदीयसीवनवीरुधसमीपवर्तिनीवनलता ॥४७॥ प्राप्तकार्श्योन्नितिः प्राप्तदारिद्र्यं कुरुनृपति-

तनूजः दुर्योधनः अपदेशः कपटं बलसंघावृतः सेनावेष्टितः वनांतं द्वैतवनांतर्भागम् ॥४८॥ कर्णानिलः कर्णकंपवातः करिव्रजः हस्तिसंघः चमूः सेना रजः धूलिः रजः रजोगुणः अचंचलः स्थिरः ॥ ४९ ॥ रज्जुः वराटकं अगंदः बाहुभूषणं कौरवः दुर्योधनः विबभाज भागंकृतवान् ॥ ५० ॥ अभ्रंलिहः अत्युन्नतः वटभूमिरुहस्तलं वटवृक्षाधोभागः वैणिकः गायकः भंगीः रीतिः आकारयन् निमंत्रणंकुर्वन् सुराधिपगायकेंद्रः चित्ररथगंधर्वः ॥ ५१ ॥

(गद्यम्) तावदस्यधार्तराष्ट्रस्यचेष्टितरौक्ष्यंनिरीक्ष्यनितरांकुधांधः सुधांधःपतिनिदेशेनवनावनिदेशेऽवतीर्णस्तूर्णंविधृतकृपाणबाणचापकलापतनुत्रसेनश्चित्रसेनश्चिरंक्षुधितस्तरक्षुश्चमूरुतातिमिवचमूममूंनिवार्यक्ष्वेडयालोलयांचक्रे ॥ ११ ॥

रौक्ष्यंकठोरत्वं नितरांकुधांधः अत्यंतकोपयुक्तः सुधांधःपतिरिंद्रः निदेशःआज्ञाअवनिदेशेअवतीर्णः भूम्यांआगतः कृपाणःखड्गः कलापःइषुधिः तनुत्रंकवचं तरक्षुःबलवान् पशुः चमूरुततिःहरिणसंघः चमूःसेना क्ष्वेडयालोलयांचक्रेसिंहनादेनमूर्च्छीकृतवान् ११

(पद्यम्) भटेषुधावत्सुभयेनकर्णःकुधाहसन्कुंजरमंजुचारः ॥ करेणविस्फारितकालपृष्ठोजगामशत्रुंजगदेकवीरः ॥ ५२ ॥ स्वसमाननाकृयवयवेनटङ्गुणाद्धनुषश्च्युतःसयुधिदेवगायिनाम् ॥अतिरक्तांगलतलैकवर्तिनीमखिलेवपुष्यपिचकारसायकैः ॥ ५३ ॥ गगनेशिरश्चलयतःश्रवोंचलाद्गलितापिदूरमवतंसमंजरी ॥ पुनरुन्नमद्भिरिषुपक्षवायुभिःपुरतोभवत्कलहजीविनोमुनेः ॥ ५४ ॥ हस्तैःप्रवीणैरखिलेऽपिकर्णेसुधांविमुंचन्सुरगायिवर्गः ॥ अयुक्तमेतत्पुनरत्रकर्णेविपाक्तवर्षंविससर्जघोरम् ॥ ५५ ॥

भटःयोधः कुंजरमंजुचारः गजवत्सुंदरगमनंयस्यसः विस्फारितंघोषकृतं कालपृष्ठं धनुर्विशेषम्॥५२॥ गुणःधनुर्ज्या अतिरक्तताअतिरक्तवती२ माधुर्यातिशयता एकवर्तिनीएकावयवेस्थिता ॥ ५३ ॥ श्रवोंचलःकर्णाग्रः अवतंसमंजरीभूषणायमानापुष्पमंजरी उन्नमत्ऊर्ध्वंगच्छत् इषुःबाणः कलहजीवीमुनिःकलहप्रियःनारदः ॥५४॥ प्रवीणःकुशलःप्रकृष्टवाणीयुक्तः सुधांअमृतवाणीं सुरगायिवर्गः गंधर्वसंघः विपाक्तवर्षं विषयुक्तबाणवृष्टिम् ॥ ५५ ॥

(गद्यम्) तदनुविश्वातिशायिनोविश्वावसुकुमारस्यशरगणेनसहजवकृतेकृतपणबंधइवधावतिराधेयेक्रंदत्सुकुरुष्वंदेपुसर्वेपिगर्वेणगंध

र्वेमटासुयोधनमायोधनधरणिमध्यभाजंरश्मिभिरवबध्यगर्जतोर भसवर्जेनिर्जरपथमनैषुः ॥ १२ ॥

विश्वानिशायोजकदेकप्रबलः विश्वावसुकुमारःचित्रसेनः सहजवत्कृतसमानसामर्थ्यार्थैकृतः राधेयःकर्णः कुरुवृंदःकौरवसैन्यसमूहः आयोधनधरणीरणभूमिः मध्यभाजंमध्यभागस्थितं रभसवर्जवेगरहितंमंदं निर्जरपयथमनैषुः आकाशमार्गंनीतवंतः ॥१२॥

(पद्यम्) नयतस्त्वमुंवैरिषुनाकमार्गंविषादभाजांविपिनेकुरूणाम् ॥ तत्तादृशेव्रीडभरेपितेषामुत्तानभावंनजहुर्मुखानि ॥५६॥ तस्यां तःपुरसुभ्रुवोविगलितैर्बाष्पांबुभिःपंकिलेमार्गेमंदितवेगपादगतयो वक्षःस्खलत्पाणयः ॥ आजग्मुस्तमजातशत्रुमजहत्कारुण्यमं घ्रिद्वयेकुर्वत्योनमितंह्रियैवपुरतोदत्तार्द्धसाम्रंशिरः ॥ ५७ ॥

विषादभाजांखेदयुक्तानां व्रीडाभरःलज्जाभरः उत्तानभावंनजहुःऊर्ध्वदर्शनभावंन त्यजुः ऊर्ध्वदृदृशुरित्यर्थः ॥ ५६ ॥ अंतःपुरसुभ्रवःअंतःपुरवासिन्यःस्त्रियः बाष्पांबुभिःनेत्राश्रुभिः पंकिलःकर्दमयुक्तः वक्षस्खलत्पाणिः हृदयताडितहस्तः अजातशत्रुःधर्मराजा अंघ्रिद्वयंचरणयुग्मं न्हीर्लज्जा ॥ ५७ ॥

( गद्यम् ) सगद्गदमेवमभिदधुश्च ॥ १३ ॥

सगद्गदंअभिदधुः अस्पष्टाक्षरयुक्तंऊचुः ॥ १३ ॥

( पद्यम् ) संद्रष्टुंतवपादमूलमधुनासर्वैःसमंबंधुभिर्देवभ्रातरमागतं वनतलेलेशेनहेतोर्विना ॥ पापःकश्चनगायकोदिविषदांहाहंतब ध्वादृढंनिःशंकैरुपवीणितोनिजभटैरभ्रंनयत्युच्चकैः ॥ ५८ ॥ तद द्यनःकंठभुविस्फुषाणांतवैवपादंशरणंगतानाम् ॥ वास्तव्यतांमंग लसूत्रिकायाःप्रसीददातुंप्रथमानकीर्ते ॥ ५९ ॥

हेदेवहेराजन् भ्रातावंधुः सुयोधनः दिविषदांगायकःगंधर्वः पापःपापरूपः उपवीणितःवीणयास्तुतः अभ्रंगगनम्॥५८॥ नःअस्माकं कंठभुविमंगलसूत्रिकायाः वास्तव्यतांदातुंप्रसीदसौभाग्यरक्षणंकर्तुंप्रसीद प्रथमानकिर्तिःविस्तृतयशाः ॥ ५९ ॥

( गद्यम् ) इतिताभिर्दीनभावंपुरोधायनिवेदितस्यराज्ञोनिदेशेननि र्गत्यसत्वरमनुधावतांभ्रूदंडमिवकोदंडमपिकोपेन कुटिलीकुर्वतां भीमप्रभृतीनांक्ष्वेडितविस्फाराभ्यांतत्क्षणंवियदखिलं विकस्वरं निजगुणमासीत् ॥ १४ ॥

दीनभावंदैन्यं निदेशःआज्ञा कोदंडंधनुःक्ष्वेडितंसिंहनादः विस्फारितःधनुर्ज्यानादः वियत्गगनं विकस्वरंव्याप्तं गुणः धनुर्ज्या ॥ १४ ॥

( पद्यम् ) कगायकायूयमुपात्तवीणाःकचापधुर्याःकुरुवंशभूपाः ॥ अहोरणेचापलमीदृशंवःस्वमूलकंवापरमूलकंवा ॥ ६० ॥ वृषां कमौलेर्व्रणचिह्नदायीवनेऽर्जुनोस्मिन्वसतीतिवार्ता ॥ पपातकर्णे भवतांनकिंचिद्यदीदृशंसाहसमातनुध्वे ॥६१॥ भ्राताऽधुनाऽसौ नविसृज्यतेचेत्तथात्रसन्नह्यतुगांडिवोमे ॥ यथामहेंद्रःपरिगृह्यवी णांस्वबाहुकीर्तिंस्वयमेवगायेत् ॥ ६२ ॥

उपात्तवीणागृहीतवीणावाद्यं चापधुर्यःधनुर्विद्यानिपुणः चापलंसाहसं स्वमूलकंआ त्मबुद्धिविरचितम् ॥ ६०॥ वृषांकःशंकरः व्रणचिह्नदायीक्षतकर्ता साहसंदुर्योधनबंधनम् ॥ ६१ ॥ सन्नह्यतुयुद्धंकर्तुंसिद्धोभवतु महेंद्रःकीर्तिंस्वयमेवगायेतस्वर्गं गंधर्वरहितंभवि ष्यतीत्यर्थः ॥ ६२ ॥

(गद्यम् ) इतिविजयस्यवीरवादेनपुनरपिनिवर्तमानैर्वीणामंसेपुनि वध्यबाणासनमेवकूजयद्भिस्तैर्नभश्चरैःसममेषांसकलवैमानिकप रिषदंगरुहवितीर्णनिद्राभंगोमहान्संगरोऽभूत् ॥१५॥

अंसःस्कंधः बाणासनंधनुःकूजितं वादितं नभश्चरःगंधर्वः वैमानिकपरिषत्देवसमुदा यः (अंगरुहं लोम) अंगरुहवितीर्णनिद्राभंगोऽभूत् रोमांचोद्भवोजातइत्यर्थः ॥१५॥

( पद्यम् ) गंभीरगांडिवगुणाद्गलितैः पृषत्कैर्गंडस्थलेष्वदिभुजेगमि तव्रणास्ते गर्वंविहायचकितागगनांतरालेगंधर्वभावसदृशंगमनंवि तेनुः ६३ वीणाः समस्ताविजयेनकृत्तागंधर्वसैन्याद्गलिताबभूवुः आयुष्मतीकेवलमासलोकेहस्ताग्रवीणादिविनारदस्य ६४ एता वतीतियुधिमार्गणचारशक्तिः स्पष्टीबभूवसुरगायकपांडवानां ते षांयपुःशरकुलानिहिलक्ष्यमात्रंलक्ष्यंविभिद्यपुनरायशुरंतमेषाम् ६५

पृषत्कःबाणःगंडःकपोलः गमितव्रणंप्रापितक्षतं विहायत्यक्त्वा गंधर्वभावः अश्वत्व सदृशंगमनं वितेनुःपलायनंचक्रुः ॥६३॥ विजयेनकृत्तःअर्जुनेनछिन्नः दिविलोकेस्वर्गे आयुष्मतीअछिन्नाइत्यर्थः ॥ ६४ ॥ मार्गणचारशक्तिः बाणगमनसामर्थ्यंसुरगायकः गंधर्वः शरकुलंबाणजालं अंतंशत्रुशरीरभेदपर्यंतम् ॥ ६५ ॥

(गद्यम्) तत्रशक्रसुतस्यतादृशंविक्रममभिनंद्यकृतसंधानेनगंधर्व राजेनसमर्पितंपौरुषहीनमिदंनपुरस्करणीयमितिबंधमिषेणपश्चा दुपनीतबाहुयुगुलंसुयोधनमादायतेभीमादयोवसुधाधिपस्यस न्निधिमधिरोपयामासुः ॥१६॥

शक्रसुतःअर्जुनः अभिनंद्यअभिनंदनंकृत्वा पौरुषहीनःनिर्बलः पश्चादुपनीतं पृष्ठभागेकृतं वसुधाधिपःधर्मराजा सन्निधिमधिरोपयामासुः समीपंस्थापयामासुः ॥ १६ ॥

(पद्यम्) तंवीक्ष्यतत्रतरुमावरणंभजंतीसापार्षतीसविधवल्लिपरंप रासु ॥ हासैः करांगुलिबिलादसकृद्गलद्भिराकालिकींकुसुमपंक्ति मिवव्यतानीत् ॥ ६६ ॥

वंवीक्ष्यदुर्योधनंदृष्ट्वा तरुमावरणंभजंतीपार्षती वृक्षाच्छादनंधृतवतीद्रौपदी करांगुलिबिलंहस्तांगुलिसंधिछिद्रं असकृत्वारंवारं आकालिकीअकालोत्पन्ना ॥ ६६ ॥

वीरव्रातैस्त्रिभुवनभवैः संस्तुतेनः कुलेस्मिन्नुद्भूयत्वंबहुभिरनुजैरा स्थितोप्याधिपत्यम् ॥ एवंभंगंकिमिहभजसेवत्सनीचैः प्रणीतंरा जन्यानांपरपरिभवोराजयक्ष्माहिकीर्तेः॥६७॥इत्थंनिगद्यसरलेन युधिष्ठिरेणबंधाद्विमोच्यबकविद्विषताविसृष्टः ॥ मानंच्युतंमृगय माणइवातिनम्रोवाचंयमेनसययौमहताबलेन ॥ ६८ ॥

व्रातःसंघः आधिपत्यंसार्वभौमत्वं भंगःपराजयः नीचप्रणीतंनिर्बलकृतं राजन्यःक्षत्रियः कीर्तिराजयक्ष्मा कीर्तिनाशकःक्षयरोगः ॥६७॥ निगद्यभाषणंकृत्वा बकविद्विषताविसृष्टःभीमेनगच्छइतिउक्तः मानच्युतःगर्वगलितः वाचंयमःमौनव्रतसहितः ॥ ६८ ॥

यंप्रायंबहुमन्यंतेजनाजीवितुमुत्सुकाः ॥ उपाविक्षत्तमेवासौपथि प्राणान्समुज्झितुम् ॥ ६९ ॥ तस्मिन्व्रतेस्वपनलब्धसुरारिसाह्य स्त्यागेतनोस्तदनुबंधुतयानिषिद्धः॥ तस्माद्वनात्पुनरपिप्रतिपद्यधै र्यंघुष्यद्बलोनिववृतेकुरुराजधानीम् ॥७०॥ कदापिमाबंधयगाय कैर्मामितीवहृष्यैरमृतायमानैः ॥ संप्रीणयन्निंद्रमथाभिमानीसपौं डरीकंक्रतुमाजहार ॥ ७१ ॥

प्रायंशुभदेवं २ प्रायोपवेशनं असौदुर्योधनःउपाविक्षत् अशिश्रियत् समुज्झितःत्यक्तः ॥६९॥ स्वपनलब्धसुरारिसाह्यं स्वप्नप्राप्तदैत्यसाह्यं बंधुताबंधुवर्गः निषिद्धःपरावृत्तः घु-

ष्यद्दलःगर्जनायुक्तसैन्यः कुरुराजधानीहस्तिनापुरम्॥७०॥ अमृतायमानंहव्यंअमृतसदृशंहोमद्रव्यं संप्रीणयन्संतुष्टतामुत्पादयन् पौंडरीकक्रतुमाजहार पौंडरीकयज्ञंचकार७१

भूयोऽपितांवनभुवंप्रविहायभेजेभूयः सकाम्यकतपोवनमंडलानि॥किर्मीरनाशमुदिताखिलतापसौघस्वाध्यायघोषमुखरीकृतदिङ्मुखानि॥७२॥मृदुभिर्नववल्लिकंदमूलैर्विहितातिथ्यविधिः सतत्रपार्थः॥ स्थितिमाचरतिस्महृष्टचेतास्तृणबिंदोर्वचनेनपोवनेच॥७३॥ प्रासूतयासदसिपट्टपटीरसंख्याः सैषासमागतवनीतिसकौतुकाक्ष्यः॥ वेणीधरामुटजसीमनियाज्ञसेनींविस्मित्यवल्कलवसंदद्दशुर्गृहिण्यः॥ ७४ ॥

वनभुवंप्रविहायद्वैतवनंत्यक्त्वा किर्मीरनाशमुदितःकिर्मीरराक्षसवधेनहर्षितः तापसौघःमुनिसंघः मुखरीकृतःसनादःकृतः ॥ ७२ ॥ विहितातिथ्यंयोग्यातिथिसत्कारः स्थितिमाचरतिस्मनिवासंचकार तृणबिंदुःऋषिविशेषः ॥ ७३ ॥ सदसिसभायां पट्टपटीःप्रासूतकौशेयवसनानिउत्पादयामास सकौतुकाक्ष्यःकौतुकपूर्वकदर्शनोत्सुकाः उटजःपर्णशाला याज्ञसेनीद्रौपदी गृहिणीमुनिपत्नी ॥ ७४ ॥

तत्तादृक्षेकरेस्याद्विविधवनभवंकंदमूलोपहारंदातुंलज्जापयोधेस्तलमभिमम्रशुर्धर्मदारामुनीनाम्॥यस्यस्पर्शानुभावादविरतमुदितैःपायसैरेवदिव्यैः किंचिद्भांडंवनांतेतनुमतिथिजनस्याननोदन्यथार्थाम् ॥ ७५ ॥ दिशिदिशिमृगयायैतेषुयातेषुजातुस्वयमुटजमवाप्तः सोमकेंद्रस्यपुत्र्याः॥ लपनशशिमहिम्नालंघयामासवेलांतरलितमकरांकस्तत्क्षणंसिंधुराजः ॥ ७६ ॥

तादृक्षंविलक्षणं अस्याःकरेद्रौपद्याःहस्ते वनभवं अरण्योत्पन्नं २उदकोत्पन्नं लज्जापयोधेस्तलमभिमम्रशुः लज्जामग्नावभूवुः दाराःस्त्रियः अविरतःविस्तृतः उदितःउत्पन्नः पायसःमधुरान्नविशेषः किंचिद्भांडंकिंचनपात्रं अन्यथार्थातनुमतनोत् अतनुंमहतींतनुमकरोत् ॥ ७५ ॥ तेषुधर्मादिषु उटजमवाप्तः पर्णशालांप्राप्तः सोमकेंद्रपुत्रीद्रौपदी लपनशशी-वदनचंद्रः वेला २ मर्यादा २ तीरं तरलितःतप्तः मकरांकःमदनः यस्यसःतरलितमकरांकः २ तरलिताःमकरांकाः ग्राहाःचिन्हानिपस्यसः तरलितमकरांकःसिंधुराजः जयद्रथः २ समुद्रः ॥ ७६ ॥

(गद्यम्) ततः कंदंतींकुररीमिवानंदनीमेनांपुरस्तादधिरोप्यमूत

करतीव्रदंडाध्यापितवेगतंत्रपारीणरथ्येनघनतरतज्जघनपयोधर भागक्रमणविनम्रीभूतपूर्वभागतयापार्थदर्शनशंकयानिकुब्जीभूयेवधावताशतांगेननिमिषचूषितपरिणाहवनीपथंजयद्रथं पुनरप्याश्रमपदमाश्रित्यनिशामितप्रमदावार्तेनदावार्तेनेवपूर्वजेननियुक्तौजटारिकिरीटिनौरोषविद्रुमलताकिसलयैरिवलोचनैः शरासनमवकीर्यमृगयाविहारनिवृत्तमात्रेण चरणेनद्रुतमन्वदुद्रुवताम् ॥ १७ ॥ ततःक्षणादेवकर्णपूरवनकुसुमसौरभजिघ्रत्सिंजिनीकेनधनंजयेनसपत्राकृतोधृतत्रासतयाविद्यामिवविनयविपर्ययः कृष्णांविमुच्यकृतपलायनःसदुर्मेधाःपुरःप्रधावितेनमागधविरोधिनारुरुधे ॥ १८ ॥

क्रंदंतीआक्रोशंकुर्वती कुररीकुररीपक्षिणी सूतःसारथिः वेगतंत्रपारीणःवेगशास्त्रपारंगतः रथ्यःअश्वः पयोधरःस्तनः निकुब्जीनम्रा शतांगःरथः निमिषचूषितःपरिणाहः अल्पकालेनपीतादीर्घता निशमितंश्रुतं दावार्तःदावाग्निपीडितः पूर्वजेननियुक्तः जेष्ठबंधुना आज्ञप्तः जटारिःभीमः किरीटीअर्जुनः शरासनंअवकीर्यधनुःविलोक्य द्रुतमन्वदुद्रुवतांशीघ्रंअनुधावताम्॥१७॥ कर्णपूरंकर्णभूषणं सौरभःसुगंधः सिंजिनीधनुर्ज्या सपत्राकृतःअतिव्यथितः विनयविपर्ययःअविनयः कृष्णाद्रौपदी मेधाःमतिः मागधविरोधिःभीमसेनः॥

( पद्यम् ) कचेगृहीत्वाभुविपातितस्यकठोरचारित्रपरस्यशत्रोः ॥ संताडनेमारुतिरात्मपाणेःसच्छात्रयामासपदंचवामम् ॥ ७७ ॥ सौवीरभर्तुरथमूर्धनिपंचचूडाःक्लृप्ताःक्षुरेणपवनात्मभुवाविरेजुः ॥ इंगालधूमकलिकाइवशाम्यतोंतस्त्रासांबुभिः स्मरशरानलपंचकस्य ॥ ७८ ॥ विमतमनुजनीतंवीक्ष्यभूपःस्मितास्यःकृतनतिशिरसंतंकेशभारेहतेऽपि॥त्वदसुहरणमार्गेदुःशलैवार्गलानःक्वचिदपिकुरुमैवंकुत्सितेत्युत्ससर्ज ॥ ७९ ॥ दीनधीःसतपसाहिमशैलेदक्पथंपुरहराद्गृहयालोः ॥ आददेवरमथोविजयौद्वावंतरेणयुधिपांडवरोधम् ॥ ८० ॥ पार्थाश्चकृच्छ्रादुत्तीर्णापार्षतींप्राप्यरेमिरे ॥ हेमंतात्पद्मिनींमुक्तांहेलेरिवकरांकुराः ॥ ८१ ॥ तत्रांतरेज्वलितवर्णवपुःकदाचिदंगेपुशब्दइवकर्णमवाप्यरात्रौ॥ भासांनिधिःकृतनमस्करणायतस्मैप्रेम्णाशिषःप्रणिजगादयवीयसींगाम् ॥ ८२ ॥ अह

महहरधिनाथोनुग्रहान्मेपृथायामयिजननमगास्त्वंवत्सकोशोगुणा
नाम् ॥ तदिदमिहरहस्यंशासनंगृह्यतांमेतनयकुशलयोगेतानपा
दायतंते ॥ ८३ ॥

कठोरचारित्रपरःशत्रुःसाहसीजयद्रथः मारुतिःभीमसेनः पाणिःहस्तः सच्छात्रपामा ससहायंचकार ॥ ७७ ॥ सौवीरभर्ताजयद्रथः क्षुरःबाणः अंतःशाम्यतःशरीरांतर्भागे शांतिंप्राप्नुतः त्रासांबुभयोत्पन्नंघर्मोदकं स्मरशरानलः मदनबाणाग्निः ॥ ७८ ॥ विम तंजयद्रथं भूपःधर्मः कृतनतिशिरसंकृतनमनं हृतःदूरीकृतः असुःप्राणः दुःशलाजयद्रथप-त्नी अर्गलाविघ्नं कुत्सितंनीचम् ॥७९॥ दीनधीःनीचबुद्धिः दृक्पथंगृहपालुः प्रत्यक्षत्वंगृहीतः पुरहरःश्रीशंकरः विजयौद्वौअर्जुनोजयश्च पांडवरोधः पांडवप्रतिबंधः ॥ ८० ॥ कृछ्रोत्तीर्णःविघ्नमुक्तः पार्षतींप्राप्यरेमिरेपत्नीसुखमनुबभूवुः हेलेःकरांकुराःसूर्यस्यकिरणोद्गपाः ॥८१॥ ज्वलितवर्णवपुःदीप्तिमानशरीरंयस्यसः अंगःअवयवः २ अंगदेशःराज्ञौ अवाप्यस्वप्नेप्राप्य भासांनिधिःसूर्यः आशिषःयवीयसींगांमणिजगादआशिर्वादानंतरं वाणीमुवाच ॥८२ ॥ अहरधिनाथःसूर्यः पृथाकुंती त्वमगाः त्वंप्राप्तवानसि तातःपिता कुशलयोगेयवंते लब्धपरिपालनेअप्राप्तप्रापणेयत्नंकुर्वंति ॥ ८३ ॥

मुखसंधानविश्लेषमुक्तेकवचकुंडले ॥ तवैतेभूषणेशोभांतन्वाते
परदुर्लभाम् ॥८४॥ एतानियाचितुमिहद्विजवेषगूढमाल्लब्धकाम
ममराधिपतिंकुथास्त्वम् ॥ आज्ञापथात्स्वलसिचेदणुमात्रमस्मा
द्वध्योभविष्यसिसुखेनरणेरिपूणाम् ॥ ८५ ॥ इत्थंनिशम्यतांवा
चंराधेयोरचितस्मितः ॥ हर्षादंजलिनासाकमाददेप्रतिभापीतम्
॥ ८६ ॥ तवार्यमेतिप्रथितेऽपिशब्देममार्यमेत्यर्थिजनेषुदानम् ॥
निषेधरूपेनिदधातिमार्गेपदंकथंवाभवदीयजिह्वा ॥ ८७ ॥ सततं
सदर्थिसदसेबहुदातुंसकुतूहलस्यपुरुषस्यजगत्याम् ॥ उदकोर्मि
काकरधृताहिविभूषाकनकोर्मिकातुपरमंगुलिभारः ॥ ८८ ॥
दिवसेशयःखलुशयः प्रतिकर्तुंधृतलालसोभवतिनार्थिषुदैन्यम् ॥
प्रतिपादयेत्सतुकथंपुरुषस्यप्रतिलोमवर्णनिजनामपदार्थम् ॥ ८९ ॥

मुखसंधानविश्लेषमुक्तः मुखसंधिपृथक्तारहितः शोभांतन्वातेशोभांकुर्वाते ॥ ८४॥ द्विजवेषगूढःविप्ररूपगुप्तः अमराधिपतिःइंद्रः कामःइच्छा वध्यःवधंकर्तुंशक्यः ॥८५॥ वाचंनिशम्यवचनंश्रुत्वा राधेयःकर्णः रचितंकृतं स्मितंहास्यं प्रतिभापितमाददेप्रतिव-

धनंस्वीचकार ॥८६॥ अर्यमासूर्यः यःखलुददातिसः अर्यमाप्रथितंप्रसिद्धं आर्यःश्रेष्ठः अर्थिजनःयाचकः ॥ ८७ ॥ सदर्थीसुयाचकः सकुतूहलःकौतुकयुक्तः उदकोर्मिकाउद कलहरी २ उदकांजलिः कनकोर्मिका स्वर्णांगुलीयकंभूषणम् ॥८८॥ दिवसेशःसूर्यः शयःहस्तः लालसाइच्छा प्रतिलोमवर्णशयः विपरीताक्षरशयःयशःइत्यर्थः ॥ ८९ ॥

यशएवजन्मफलमात्मवतामिदमेषितव्यमतियत्नभरात् ॥ अपि भूषितंगुणगणैरपरैरयशस्विनंनजगदाद्रियते ॥ ९० ॥ व्यापृता वितरणोपनिषत्सुव्याहरंतिहिविपश्चिदधीशाः ॥ स्पर्शनेनरहिता वितिहेतोर्लुब्धकंचकुणपंचसमानौ ॥ ९१॥ दृष्टेवनीपकजनेवद नंस्मितेनदानांबुनाकरतलंयशसादिशश्च ॥ शुभ्रीकरोतिविवशः स्वयमेवदाताकस्तादृशंप्रतिनिवर्तयितुंक्षमेत ॥ ९२॥ वांछामना प्तेनवनीपकेनसहासवोदातृजनस्ययांति॥ तदद्यशक्रार्चनयाधृता सोप्राणीवधोमेपरमोहिलाभः ॥९३॥ यद्येहप्रतिहारभूतलशिला चिंतामणिःकल्पकायस्यारामहीरुहश्चसुरभिःसाहोमधेनुःपुनः॥ तादृग्याचतिचेदुपेत्यमघवासंपूर्यतत्कामनांत्रैलोक्यस्थवदान्यसं सदुपरिस्यामेषमेनिश्चयः ॥ ९४ ॥ वीक्ष्यवंध्यवचनोपिगुणज्ञोवि स्मयांबुनिधिवीचिषुमग्नः ॥ पद्मबंधुरितिवादिनमेनंपाटलस्मित रुचिर्गिरमूचे ॥ ९५ ॥

जन्मफलंजन्मपुरुषार्थः अपरःगुणगणःसौंदर्यादिगुणसमूहः ॥ ९० ॥ वितरणंदा नंउपनिषत्रहस्यं विपश्चिदधीशःव्याहरतिशास्त्रनिपुणश्रेष्ठःवदति स्पर्शनंदानम् २ स्प र्शः लुब्धकःकदर्युः कुणपंशवः ॥ ९१ ॥ वनीपकःयाचकः विवशःदानवशः स्मितंहास्यं ॥ ९२ ॥ अनाप्तःअप्राप्तः असुःप्राणः शक्रार्चनंइंद्रपूजा धृतप्राणःधृतासुः ॥ ९३ ॥ प्रतिहारंद्वारं आराममहीरुहःउपवनवृक्षः कल्पवृक्षः सुरभिःकामधेनुः मघवाइंद्रः कामनां संपूर्यमनोरथंपूरयित्वा वदान्यसंसदुपरिदातृसभाश्रेष्ठः ॥ ९४ ॥ वंध्यःनिष्फलःअंबुनि धिवीचिःसमुद्रलहरी पद्मबंधुःसूर्यः पाटलःओष्ठप्रांतः ॥ ९५ ॥

( गद्यम् ) अयिवत्सभवताभाषितंक्षममेवस्थूललक्ष्याणामीदृशं तवमतंपुनरपिममरसनांनिदेशावशेषपथपांथिनींनिर्मिमीते॥ १९॥ त्वंशुनासीरस्यमनीषितस्यपूरणात्प्रागेवपूर्वदेवगर्वनिर्वापणधूर्वह तयाकुलिशमपिचिरारूढकलंकाकुलजर्जरितधाराशतमातन्वती

तदीयांशक्तिमाधवेत्स्वेति ॥ २० ॥ ततस्तथेतिपरमंगीकृत्यपश्य
तस्तनूजस्यसमक्षमचिरेणसमरीचिमालीचरमाचलशिखरपरिशी
ल्यमानविहारमिहापिसमाचचार ॥ २१ ॥

स्थूललक्ष्यःदानप्रवीरः रसनानिदेशःजिव्हावचनं पांथिनीपथिका ॥१९॥ शुनाशी
रमनीषितंइंद्रमनोरथः पूर्वदेवगर्वनिर्वापणधुर्वहतादैत्यगर्वसंहारभारवाहकताकुलिशंवज्रं
कलंकाकुलं जर्जरितं मलव्याप्तंजीर्णं आतन्वतींकुर्वतींशक्तिमाधत्स्ववासवीशक्तिंगृहाण
॥२०॥ तनूजःकर्णः मरीचिमालीदिनकरः चरमाचलःअस्ताचलः विहारःक्रीडा ॥२१॥

( पद्यम् ) कतिपयदिनेकालेयातेततोमरुतांपतिःसदसिततयंभा
नोरित्यार्थिचाटुशताकुले ॥ कवचमतुलंवाचायाचत्सकुंडलमाद
रादयमपितथेत्युक्त्वाशक्तिंततोजगृहेद्भुताम् ॥९६॥ नकारमेतेव
हतोरिपुंममेत्यमर्षभारादिवशस्त्रधारया ॥ सुतोरवेर्दंशनकर्णवेष्टने
स्वयंसमुत्कृत्यददौबिडौजसे ॥ ९७ ॥ निशम्यतत्कल्पतरोर्ह्रिया
च्युतैश्चिरार्जितैस्त्यागयशोभरैरिव ॥ सुपर्वमुक्तैःकुसुमैर्नकेवलंत
दंगमंगाश्चसुगंधयोऽभवन्॥९८॥जाग्रत्सुसर्वावयवेषुतस्यकर्णस्य
कर्णःपुनरर्थिनेस्वाम्॥ हिरणमयींतद्वितताराभूषांतन्नामसाम्यंध्रुव
मत्रहेतुः॥९९॥आपृच्छ्यतंतदनुनाकपतिःसुधर्मामासाद्यसिद्धम
रुदप्सरसांसमाजे ॥ प्राशंसदस्यचरितंसविधेसुरभ्यारोमंथमप्य
विगणय्यनिशम्यमानम् ॥ १०० ॥ तावत्पार्थास्तेपिपुनःकाम्य
कसीमांहित्वासंघैर्भूविबुधानामनुयाताः ॥ तीर्थव्रातान्विस्मृतपू
र्वानवगाढुंवध्वासार्धं द्वैतवनारण्यमवापुः ॥ १०१ ॥

मरुतांपतिःमहेंद्रः भानुतनयःकर्णः अर्थिचाटुशताकुलः याचकमिथ्यामधुरवचनव्य
ग्रः अतुलंतुलनारहितंअद्भुताशक्तिः वासवीशक्तिः ॥ ९६ ॥ अमर्षभारःकोपातिशयः
दंशनंकवचं कर्णवेष्टनंकुंडलं उत्कृत्यछित्वा बिडौजाःइंद्रः ॥९७॥ ह्रीच्युतःलज्जाभ्रष्टः
चिरार्जितःचिरकालसंपादितः त्यागयशःदानकिर्तिः अंगःअंगदेशः॥९८॥अर्थीयाचकः
हिरणमयींभूषांविततारस्वर्णमयंभूषणंददौ तन्नामसाम्यंकर्णइतिनामसदृशत्वम् ॥९९॥
नाकपतिःइंद्रः सुधर्मामासाद्यदेवसभांप्राप्य अस्यचरितंकर्णचरित्रं सुरभीकामधेनुःरोमंथं
चर्वितचर्वणम्॥१००॥ पार्थाःपांडवाः काम्यकसीमांहित्वाकाम्यकवनमर्यादांत्यक्त्वा
विबुधसंघःब्राह्मणवर्गः तीर्थव्रातःतीर्थसंघः वध्वासार्धंद्रौपद्यासह अवगाढुंस्नातुम् १०१

(गद्यम्) तत्रकदाचिदाश्रमद्वारिहामहाभागाममहोमसाधनमप
हृत्यहरिणोयमितस्ततोधावतीतिबाष्पायमाणस्यकस्यचिदग्रज
न्मनःशोकनिवारणायचक्रीकृत्यचापमनुधावतस्तान्पार्श्वेलता
ताडनानुशक्तनवकिसलयजालमुत्प्लवनवेगपवनबहिर्ज्वलितगर्भव
ह्निशिखाकंदलमिवारणिंविषाणयोर्बिभ्राणःकतिपुचित्पदेषुसुग्रह
इवकतिपुचिद्दुरासदइवचित्रगतिःकोपिकृष्णसारोदूरमपाकृष्यस्व
यमंतरधात् ॥२२॥ तदनंतरंललाटंतपनखंपचहेलिधूलिभ्यांद्या
वापृथिवीभ्यामुदन्यावदान्यमहिमनिदिनयौवनेप्रकृतमर्थमिवपा
नीयमपिइतस्ततोविचिन्वद्भिरनुजैःसहकस्यचिद्विशालस्यवनसा
लस्यमूलभुवंतच्छायमंडलमिवपांडवःशनैःशनैरुपससर्प ॥ २३ ॥

हेमहाभागाः महाभाग्यशालिनः होमसाधनंहोमोपकरणं बाष्पंनेत्राश्रु अग्रजन्माब्रा ह्मणः चापंचक्रीकृत्यधनुषिशरसंधानंकृत्वा अनुषक्तःसंलग्नः उत्प्लवनंउड्डाणं गर्भवह्निशि खाकंदलंउदरस्थाग्निज्वालासमूहः अरणिःअग्निमंथनकाष्ठं विषाणंशृंगं सुग्रहःसुखेनगृ हीतुंशक्यः दुरासदः दुःखेनप्राप्तुमशक्यः कृष्णसारः हरिणविशेषः दूरमपाकृष्यदूरंनीत्वा ॥२२॥ हेलिःसूर्यः द्यावापृथिव्यौआकाशभुवौ उदन्यावदान्यमहिमाउदन्यापिपासात स्याः वदान्यःदातामहिमायस्यसः दिनयौवनंदिनमध्यकालः प्रकृतार्थंहरिणं विचिन्वद्भिः अन्विष्यद्भिः सालःवृक्षविशेषः ॥ २३ ॥

(प०)तत्रानिलैःकमलगंधिभिरुच्यमानामाशांगतेषुसलिलायचिरा
यितेषु॥ भीमादिषुक्षितिभुजापरितप्यभेजेतेपांपदानुसरणादथ
कापिवापी ॥१०२॥ तस्यास्तटेकमलिनीदलपात्रपाणींस्तान्पं
क्तिशोनिपतितानवलोक्यवीरान् ॥ बाष्पांबुभिःप्रथमदर्शितमार्ग
येवतन्वान्नृपस्यधरणौसहसानिपेते ॥ १०३ ॥ सनृपतिर्दृशोधि
कवत्सलःसपदिमूर्च्छितधीर्निभृतांगकः॥स्वयमपिप्रविभज्यतदा
दशामनुभवन्निवतामनुजाश्रिताम् ॥१०४॥ नासाविलोभनपटू
न्नवपुष्पगंधानादायतत्रमधुपैरनुसेव्यमानाः ॥ वर्धिष्णुचेतनमि
मंवनवापिकायाःकल्लोलमल्लपवनाःकलयांबभूवुः ॥१०५॥

अनिलःवायुः उच्यमानाशासूच्यमानादिक् क्षितिभुजापरितप्ययुधिष्ठिरेणतापंप्रा प्य ॥ १०२ ॥ दलंपत्रं पाणिःहस्तः तनुःदेहःधरणिःभूमिः ॥ १०३ ॥ नृपतिःधर्मरा-

णिकपाकर्णे कर्णे निशम्य श्रुत्वा अवस्थामरणं अनिशं दिनरात्रं नगरीभाजः पुरजनाः स्व
स्त्रीभिः सह भगिनीपुत्रैः सुयोधनादिभिः सह सौबलः शकुनिः मुदा हर्षेण ॥१०९॥ इह अ
सून्विमुंचति इह स्थले प्राणान्त्यजति स्थापदां निधिं पंचश्रुभक्ष्यं अपुत्रगतिः अनभिज्ञा पदनी
आश्रयस्थलम् ॥ ११० ॥

कूटस्थशीतकरकुक्षिगतं कुरंगं कुर्वन्नमुं जातिरूपकोपरमातिरेकम् ॥
कोदंडमप्यगणयन्कुलिशास्त्रसूनोः कासौ स्थितो यत्र मृगः कुलहान
येनः ॥ १११ ॥ इत्थं विलप्य नृपती स्वयमप्यमीषामंतस्यहेतुरि
दमित्युदकं सरस्याः ॥ पातुं प्रवृत्तवति कोऽपि पुमानदृश्यो गंभीरमा
ह गगनस्थित एव वाचम् ॥११२॥ राजन्मदुक्तिसरणेः प्रतिवाक्य
दानं देवोऽप्युपेक्ष्य जलमत्र न पातुमीष्टे ॥ एतेमदीयमपमत्य वचो
ऽवलेपात्पीतांभसः सपदि दीर्घनिद्राम् ॥११३॥ तत्प्रत्युदी
र्यमौक्तिकं नृपिबेति यक्षः प्रश्नानसौ दीर्घ चरस्यपदूत्तरैः स्वैः ॥ प्रत्यु
यत्पौत्रहृमतेर्थनंदयतानामिंदोः करा भियनरंग कुलैः पयोधिः ११४
कटिल्यंवितवल्कलो जटालः कमनीयाकृतिः नयोनयज्ञसूत्रः ॥ कुश
बर्हवसनं सिनः सदेवः कुरुराजस्य पुरोऽयमीर्यनस्थौ ॥ ११५ ॥

कूटस्थशीतकरः आदिकुलपुरुषः चंद्रः कुरंगः हरिणः अतिरेकः अतिशयः कुलिशास्त्रसू
नुः अर्जुनः कुलहानिः कुलनाशः नः अस्माकम् ॥ १११॥ अमीषां अंतहेतुः बंधूनां मरणहे-
तुः सरसी वापी पुमान् पुरुषः वाचम् आह शब्दमुवाच ॥ ११२ ॥ सरणिः पद्धतिः मदुक्तेः प्रश्न
काभवति वचः अवमत्य अपमान्य अवगण्य अवलेपः गर्वमदः अंभः जलं सपदि तत्क्षणे दीर्घनि
द्रा मरणम् ॥ ११३ ॥ तत्प्रत्युदीर्य कथय प्रत्युत्तरं दत्वा सलिलं जलं अमीषां धर्मः द्विविधः दे-
वः प्रदूत्तरं पुनः प्रत्युत्तरं ददौ करः चंद्रकिरणः तरंगकुलं लहरीमाला पयोधिः समुद्रः ॥११४॥
जटालः जटाधारी कमनीयं मनोहरं बर्हवसनं अवलंबितः भूषणयुक्तः कुरुराजः धर्मः ॥११५॥

(गद्यम्) सम्मतरुलोकातीतेन राकाशशमिवाकारयमानिजेन तेजसा
कुड्मलीकृतकरकमलयुग्मं नमन्तं मम संभवंप्रममंदुरमेवमवादीत् ॥
॥ २५ ॥ अयं यत्समापयमे मरोहसंप्रतानापमनजन्मावनीर्णापावयं
विपिनक्लेशमनु भवनोभवनोभावं प्रभूत्मूरवम। आत्मनदृष्टापरी
क्षितेन भवतः शान्तेन समंजसेन प्रश्नोत्तरेण च भृशमोदितानस्मि ॥२६॥
तस्मान्ममानुग्रहेण स्वमातृसहितोऽस्य भूयोऽप्युत्थितेन रनुजन्माभिः सह

त्रयोदशींशरदंरूपांतरवंतंभवंतंकोपिनजानीयादितिवरंचतमरणिं चविस्मयविस्मारितनयनपरिस्पंदनार्यनिजनंदनायप्रतिपाद्यसपु मानंतर्दधे ॥ २७ ॥

लोकातीतःलोकविलक्षणः राकापूर्णिमारात्रिः आत्मसंभवःपुत्रःयुधिष्ठिरः प्रेममेदुरं प्रेमयुक्तं राकाशतमाकारयताशतचंद्रतुल्याकृतिः ॥ २५ ॥ मांधर्मअवेहिमांयमधर्मजानीहि विमतजनवितीर्णरिपुदत्तं शीलंस्वभावः प्रसेदिवान्प्रसन्नः ॥२६॥ अनुजन्मावंधुः शरत्संवत्सरः विस्मयःआश्चर्यं विस्मारितःस्मृतिरहितः परिस्पंदःनिमेषः सःपुमान्यमधर्मः नंदनःधर्मः ॥ २७ ॥

( पद्यम् ) तत्तादृशोभगवतोवचसानिकाममासाद्यमोदभरमाश्र ममाणतानाम् ॥ प्राप्तारणेर्द्विजवरस्यशुचेवसाकमंतर्जगामसम योऽपिमहानमीषाम् ॥ ११६ ॥

इत्यनंतभट्टकविकृतौचंपूभारतेपंचमस्तवकः ॥ ५ ॥

भगवतःयमस्य निकामंमोदभरं अत्यंतंहर्षभरं द्विजःब्राह्मणः शुचासाकंदुःखेनसहितं अंतर्जगामसमाप्तोबभूव समयःवनवासकालः अमीषांपंडुनंदनानाम् ॥ ११६ ॥

पंचमस्तवकः समाप्तः

---

अथ षष्ठस्तवकः ॥

(पद्यम् ) तदनुतेभरताव्यवधाश्रयाच्चरमहायनलंघनकांक्षिणः ॥ अतिचिरंरविभांडविवर्द्धितानुचरानिवतामटवींजहुः ॥१॥

भरताःपांडवाः २ नटाः व्यवधाअंतर्धानं २ वेषांतरं अयनंवर्षं रविभांडं सूर्यदत्तपात्रं अटवींजहुःअरण्यंतत्यजुः ॥ १ ॥

( गद्यम् ) तदनुतदनुचितवचनसाहसाधिगतवाहसाधिपवपुर्नहु षमौदरदमुनःशमनायचतुरर्णववारिकांक्षिणःपारिकांक्षिणःकोपो दिताच्छापोदधेरुत्तरैरमुमुत्तार्यतस्मादेवविस्मारितनिजविधिदु- र्विलासादासादितवराः वरारोहयातयासहदुःसहनिजधामपिधान वैदग्ध्यमभ्यसितुकामाइवमत्स्यनगरस्यानतिसमीपगामिनींपितृ वनशमीमभजन् ॥ १ ॥

वचनसाहसाधिगतवाहसाधिपवपुः दुर्भाषणप्राप्तमहाजगरशरीरनहुषः भूपतिविशेषः औदरदमुनःशमनं क्षुधानिवारणं चतुरर्णववारिचतुःसागरोदकं पारिकांक्षीमुनिः

अगस्त्यः उत्तरंनौका२ प्रतिवाक्यं विस्मारितःस्मृतिरहितः आसादितंप्राप्तं वरारोहाद्रौपदीधामपिधानवैदग्ध्यंतेजाच्छादनचातुर्यं मत्स्यनगरंविराटनृपनगरं पितृवनंस्मशानं१

( पद्यम् ) क्रमेणमत्स्येंद्रपुरोपकंठेकरालमापुःपितृकाननंते ॥ वधूद्रुहांभाविनिसूतजानांवधप्रदेशस्यदिदृक्षयेव ॥ २ ॥ शमीतरौ तत्रनिधायशस्त्रममीतदंतर्ज्वलदग्निकल्पम् ॥ जगाहिरेवेषमिवान्यमुच्चैर्ध्वजंविराटस्यपुरंप्रवीराः ॥ ३ ॥ समत्वमुत्कर्षनिकर्षयोःस्वंसंदर्शयिष्यन्निवधर्मसूनुः ॥ क्रमेणहंसःपरमोऽपिभूत्वाकंकत्वमापद्यतसद्यएव ॥४॥ पुरार्जुनस्येवयतित्वमेतदस्यापिकामप्यपरांसपत्नीम् ॥ संपादयेत्किंनुममेतिकृष्णातथाविधंवीक्ष्यनृपंशशंके॥५॥त्रिदंडकाषायकमंडलूज्ज्वलोजपस्फुरद्दंतपटोयुधिष्ठिरः ॥ उपानहंदारुमयींपदास्पृशन्नुपासदत्संसदिमेदिनीश्वरम् ॥ ६ ॥ दृष्ट्वासमुत्थितोमात्स्योधृतप्रश्रयविस्मयः ॥ तत्पादपांसुंफालांते चक्रेतंपुनरासने ॥७॥ दुर्वीरगर्वासहनोथभीमोदर्वीकरोदर्शितसूदभावः ॥ शोणाधरालोलुपसूतसूनोःप्राणानिलान्पाययितुंकिलासीत्॥८॥ पितुःसखायंपरिपूज्यमेधैर्दिनेदिनेतृप्तिमिवोपनेतुम् ॥ सूदाकृतिःसोपिययौविराटंवृकोदरोवृत्तशरावपाणिः ॥ ९ ॥ कुलशैलशृंगइवजंगमेतदाकुरुकुंजरेचलतिकंपनंमुहुः ॥ वसुधैवतस्यनपुरस्यकेवलंवहतिस्मकीचकभुजाप्यदक्षिणा ॥१०॥ महानसेऽवतरतोजनस्यसपतिःकृतः ॥ महानसेवतरसोमात्स्यंस्वादुषुकर्मसु ॥ ११ ॥

उपकंठेसमीपे करालंपितृकाननंभयंकरंश्मशानं वधूद्रुहः द्रौपदीद्रोहकर्तारः सूतजाः कीचकाः॥२॥ अंतर्ज्वलदग्निकल्पःगर्भस्थिताग्निसदृशः अमीपांडवाः अन्यवेषःरूपांतरम् ॥३॥ निकर्षःविपत् परमहंसःहंसश्रेष्ठः २संन्यासी कंकत्वंबकत्वं २ कंकसंज्ञाधरविप्रत्वम् ॥ ४ ॥ पुरासुभद्राहरणप्रसंगे अपरासपत्नीअन्यास्त्री कृष्णाद्रौपदी ॥ ५॥ उज्वलःदीप्तिमान् दंतपटःओष्ठः दारुमयंकाष्ठमयं उपानत्पादुका मेदिनीश्वरमुपासदत् विराटनृपसमीपंजगाम ॥६॥ मात्स्यःमत्स्यनृपः प्रश्रयःविनयः पांसुःधूलिः फालंललाटं ॥ ७ ॥ दुर्वीरःप्रमत्तशत्रुः दर्वीकरःनागः२ दर्वीहस्तः सूदभावःपाचकत्वं २ नाशकत्वं शोणाधरालोलुपःद्रौपदीकामुकः सूतसूनुःकीचकः प्राणानिलःप्राणवायुः ॥८ ॥ पितुः

सप्तार्यअग्निं एधंइंधनं वृत्तशरावपाणिःवृकोदरःदर्वीहस्तः भीमसेनः ॥ ९ ॥ कुटशैटः विंध्याद्रिः कुरुकुंजरःकुरुश्रेष्ठः वसुधाभूमिःअदक्षिणावामा ॥ १० ॥ ( महानसःपाक शाला ) महानसावतरतोजनपतिसूदजनाध्यक्षः स्वादुकर्ममधुरान्नपाकक्रिया ॥११॥

स्त्रीत्वेनयोगःखलुवीरगर्ह्यःपुंस्त्वेनचांतःपुरवासविघ्नः ॥ इतीवषंढ त्वमवश्यभाव्यमादायपार्थोऽपिजगाममात्स्यम् ॥१२॥ कृतवस तिरसौनृपस्यकन्यागृहमुविनर्तयतिस्मताल्पाणिः ॥ मधुकरमु खरोल्लतावनांतेमलयगिरेरिवमारुतप्ररोहः ॥ १३ ॥ ममध्वजांक स्यबिभर्तिसंज्ञामसाविति प्रेमभरादुपेतः ॥ प्रसूनधन्वेवसुतोऽपि माद्यामात्स्येंद्रमागत्यननाममूर्ध्ना ॥ १४ ॥

गर्ह्यनिंद्यं अवश्यंभाव्यंषंढत्वंउर्वशीशापात्प्राप्तं भविष्यन्नपुंसकत्वं आदायधृत्वापार्थः अर्जुनः ॥१२॥ नृपकन्याविराटकन्याउत्तरा तालपाणिःतालक्रियानिपुणहस्तः मधुक- रमुखरःभ्रमरेणसशब्दः ॥१३॥ ध्वजांकसंज्ञामत्स्यनाम असौमत्स्यनृपः प्रसूनधन्वामद- नः माद्रीसुतःनकुलः ॥ १४ ॥

तंपश्यन्नकुलंराजातंद्रालुर्दृङ्निमेषणे ॥ निजांमात्स्येश्वराभि ख्यांनिनायप्रकटार्थताम् ॥१५॥ कशांकरेसविभ्राणंशशांककु लभूषणम् ॥ मंदुरापतिमातेनेतंदुरापपराक्रमम् ॥ १६ ॥ अस्म त्तिरोधिविरतेर्भविताऽत्रहेतुरेतद्दिनैःकतिपयैरितिजानतेव ॥ पांडोः सुतेनचरमेणचतस्यराज्ञोवृंदंगवांप्रजुगुपेपृथुकौतुकेन ॥ १७ ॥ आगतानगरवासवांछयादेवतेवविपिनस्यपार्षती ॥ केलिपुष्पमि वदंतकंकतंबिभ्रतीनृपवधूमुपागमत् ॥ १८ ॥ सैरंध्रीरूपभाजो स्याजातिनैच्यान्नतंशिरः॥ सुदेष्णायास्तुवीक्ष्यैनांसुंदरींव्रीडपी डनात् ॥१९॥ वनभुवइवमाधवोदयश्रीर्मनुजपतेरवरोधयोषितो सौ ॥ अनुदिनमखिलाल्लिलालनीयैरलमकरोत्तिलकैरतीवदृश्यैः२०

दृङ्निमेषणंतंद्रालुः तटस्थः अभिरूपासंज्ञा प्रकटार्थताअन्वर्थकता ॥ १५ ॥ कशा अश्वताडनचर्म प्रतोदःशशांकः चंद्रः मंदुरापतिःअश्वशालाध्यक्षः॥१६॥विरोधिविरतिः गुप्तस्थितिः पांडुसुचरमःसहदेवः गवांवृंदंधेनूनांसंघः ॥ १७ ॥ पार्षतीद्रुपदकन्या केलि पुष्पंक्रीडापुष्पं दंतकंकतं (फणी इ. म.भा.) नृपवधूःविराटनृपस्त्रीसुदेष्णा॥१८॥ (सै- रंध्रीरूपभाजः) सैरंध्रीनामधार्याःनैच्यान्नतंनीचत्वात्नम्रीकृतं सुंदरीद्रौपदी व्रीडपीडनं

लज्जादुःखम् ॥ १९ ॥ माधवःवसंतः मनुजपतिःविराटः अवरोधयोषित्पट्टराज्ञीसुदेष्णा आलिःसखी लालनीयंमनोहरं दृश्यंप्रशंसनीयं अलंअलंकृतम् ॥ २० ॥

( अनंतरंस्ववशाभ्रमाद्दृतकंकतमतिरसोत्पादनचणमधिगतशोभ
नाटनपाटवमिश्रितगंधर्वकुलमाकलितगोत्रापलापंपं चानामपिरू
पमुदंचयंतीपांचालनृपतिसुतापंचापिपतीननुयातवती )

( स्ववशाशिल्पकारिणी गंधर्वकुलंअश्वसंघः गोत्रापलापंगोरक्षणं पांचालनृपतिसुताद्रौपदी )

( पद्यम् ) विमतानपितैर्जित्वाविवासमिवदायकः ॥ अक्ष्येष्वकुरु
ताद्दत्तिमवनींद्रेणधर्मभूः ॥ २१ ॥

विमतःशत्रुः विवासःप्रवासः अक्षावृत्तिर्द्यूतक्रीडाभ्यासदक्षत्वं अवनींद्रःविराटः धर्मभूःयुधिष्ठिरः ॥ २१ ॥

( गद्यम् ) एवंतैस्तैःस्वकृत्यैःसंपादितंशिरःकंपंवयःकृतमिवसंतत
मनुभवतानेनमहीपतिनाबहुमानिताःपृथासुताःयथाविवासनखे
दंतथातदीयमपिस्वरूपमितरेजनास्तत्रनाज्ञाशिषुः ॥ २ ॥ अथै
कदातत्रसुदेष्णायाःप्रेषणेनमदनोत्सवासवायवासवायतनसदृशं
वासगेहमागतांकौरवाधमकरपरिक्लेशदुःखादिवविवर्णेनवाससाव
गुंठितांगींनखशशिपरंपरासेवनलालसतयेवप्रपदसंमुखीनलोचन
नीलोत्पलांराजीवशंकयानुव्रजताराजहंसेनेवरजतभाजनेनराजि
तकरांचलांपांचालसुतांविलोक्यपंचेषुबाणवंचितविवेकोमंचादु
पसृत्याकिंचिदाकुंचितमौलिःकीचकोनीचांवाचमुवाच ॥ ३ ॥

शिरःकंपंप्रशंसार्थकशीर्षचलनं वयःवार्धक्यं विवासनंप्रवासः सेदंनाज्ञासिषुःदुःखंनज्ञानवंतः तत्रमत्स्यपुरे॥२॥ आसवंमद्यं वासवायतनंइंद्रसदनं वासगेहंनिवासगृहं कौरवाधमःदुःशासनः विवर्णवासःमलिनवस्त्रं अवगुंठितागं वेष्टितांगंशशिपरंपराचंद्रपंक्तिः सेवनलालसतासेवनेच्छा प्रपदंपादाग्रं प्रपदसंमुखीनलोचननीलोत्पलाअधःपश्यतीत्यर्थः (नीलोत्पलंकमलं) राजीवशंकाकमलभ्रांतिः राजतभाजनं रौप्यपात्रं राजितकरांचला भूषितहस्ताग्रा पांचालसुताद्रौपदी पंचेषुबाणवंचितविवेकः मदनेनकृतःविचारशून्यः मंचःमंचकः आकुंचितमौलिः वक्रीकृतशीर्षं नीचांवाचंदुर्भाषणम् ॥ ३ ॥

(पद्यम्) इदमेवहिसद्मभर्द्रंभद्रंयदिदानींतवमार्दवद्गमंघ्रेः॥ अयभ प्यहमस्मिधन्यधन्योहरिणाक्षित्वदपांगगोचरोयः ॥ २२ ॥ नत गात्रियदागमेनमांनयमेमोदगिरेरधित्यकाम्॥ चिरपुण्यफलांकु रश्रियांदिवसोवैजननस्तदेषमे ॥ २३ ॥ अन्वर्थतामालिनितेभि धायाःकुतोनजागर्त्यधुनाकचेषु ॥ तस्याःप्रतीपोदितवर्णपंक्तेरर्थो थवालंकरणंह्यमीषु ॥२४॥ बाह्वोरनंगदत्वस्यबालेतेकारणेउभे ॥ एकेनयोस्तुलावण्यमितरंनावगम्यते ॥ २५ ॥ अरम्यभावंभज तेजगत्यामंगेषुकिंचिद्विकलोऽपिलोकः ॥ निरीक्ष्यसेत्वंतुविचित्र मेतन्मध्येनहीनापिमनोज्ञमूर्तिः ॥ २६ ॥ नपल्लवस्तान्विनविद्रुम श्चताम्रोऽधरोऽयंतवबिंबमेव ॥ चंद्रोयदिस्यात्तववक्रमेतच्चंद्रस्य बिंबंसहजंहिलोके ॥२७॥ कांतेतवाननमिदंकमलावलीषुस्रष्टुंपु रासरसिविस्मृतमेवधात्रा ॥ पश्चाद्विचिंतनवतातदुपांतभागेसंल क्ष्यतेविचरितःखलुहंसपादः ॥ २८ ॥ कूपस्यतीरेनिवसन्नपायं कोवानधत्तेवदकोमलांगि ॥ त्वन्नाभिकूपस्यतटेनिवासीनदृश्य तेसंप्रतिमध्यभागः ॥ २९ ॥ अक्षीणवक्त्रशशिसेवनलाभतोषा दालिंगितामिवमिथोरजनेस्त्रियामीम्॥ त्रेधाविभज्यरचितांवहसे द्यवेणींकिंसिंहसंहननमूहयितुंवियुक्तम् ॥ ३० ॥ सुदतिबद्धपराग धूसरापित्वमपहरस्यधुनामनोमदीयम् ॥ रतिरिवहरकोपदग्धमा नस्मरतनुधूमलवाविलाखिलांगी ॥ ३१ ॥ त्वामुल्लसद्बिंबफला धरांमेमामप्यनंगाशुगमर्दितंते ॥ विशंकमस्मिन्विजनेप्रदेशेपद्मा ननेपातुमयंहिकालः ॥ ३२ ॥

सद्मगृहं भद्रंभद्रंअतिमंगलप्रदं अंघ्रिःपादः अपांगगोचरःनेत्रकटाक्षविषयः ॥२२॥ नतगात्री नम्रांगी मोदगिरेरधित्यकाहर्षपर्वतस्यऊर्ध्वभूमिः वैजननःउत्पत्तिदिवसः२३॥ अन्वर्थतामालापृकता कचेषुनजागर्तिकेशेषुनविद्यते प्रतीपोदितवर्णपंक्तिः मालिनीना म्नः विपरीतवर्णमालानीलिमा केशभूषणविशेषम्॥२४॥ अनंगदत्वंबाहुभूषणराहित्यं२ मदनदातृत्वं इतरंअन्यकारणम् ॥२५॥ अरम्यभावःकुरूपता विकलःव्यंगः मध्यहीना कटिभागरहिता अतिसूक्ष्मा कटियुक्ताइत्यर्थः मनोज्ञंरम्यम्॥२६॥ तन्वीकृशांगी वि- द्रुमःप्रवालरत्नं वक्त्रंवदनं सहजःसहोत्पन्नः॥२७॥ आवलिःपंक्तिः स्रष्टुंनिर्मातुं धात्राबि-

विधिना उपांतसमीपंहं सपादःहंसचरणः२ लेस्तनप्रमादचिह्नम् ॥२८॥ अपायंधत्तेत्संकटंधारयति मध्यभागः कटिपुरोभागः ॥ २९ ॥ अक्षीणवक्त्रशशीपूर्णवदनचंद्रः त्रियामीरजनी विग्रहराराात्री सिंहसंहननमूहयितुंसुंदरपुरुषंमृगयितुम् ॥३०॥ परागधूसराधूलिमलिना रतिःमदनस्त्री लवःलेशः आविलामलिना ॥ ३१ ॥ अनंगाशुगःमदनबाणः विजनप्रदेशः एकांतस्थलं पातुंचुंबनंकर्तुम् ॥ ३२ ॥

(गद्यम्) इतितस्यताद‍ृशंवचनमाकर्ण्यापिचित्तचंपकमंजरीचंचरीकायमाणंपंचशरविकारापांचालीगिरमिमांस्मररागतिमिरकौमुदीमुदीरयामास ॥ ४ ॥

तस्यवचनमाकर्ण्यकीचकभाषणंश्रुत्वा चंचरीकायमाणः भ्रमरायमाणः चंपकेभ्रमरोनागछतीत्याशयः पंचशरःमदनः स्मररागःमदनप्रीतिः तिमिरकौमुदीअंधःकारनाशकर्त्री चंद्रिका गिरमुदीरयामासवाणीमुवाच ॥ ४ ॥

(पद्यम्) अंतःपुरेषुविहरन्नपिकीचकत्वंसैरंध्रयेस्पृहयसीतिविगर्ह्यमेतत् ॥ रम्येषुकल्पकुसुमेषुचरन्द्विरेफोरज्येतर्किंपितृवनद्रुमगुच्छिकायाम् ॥ ३३ ॥ प्रतायतेचपललतापतिवल्लीषुयाहठात् ॥ इष्टार्थसिद्धेःप्रागेवदिष्टांतंदोग्धिसानृणाम् ॥ ३४ ॥ गंधर्वाःसंतिमेकांताबाधतेयान्स्मरोनिशम् ॥ स्वाभिख्यांस्वास्त्रसंख्यांचवहंतीतीर्ष्ययाकिल ॥ ३५ ॥ दोष्मतामवतंसास्तेस्वरूपंनैवकेवलम् ॥ गोपायंत्यप्रमादेनपरेभ्योमांचमानिनः ॥ ३६ ॥ तदद्यपथिवामेस्मिन्संप्रलिप्सासस्येयदि ॥ तेतुत्वांचारयिष्यंतिदक्षिणेपिधृतक्रुधः ॥ ३७ ॥ इत्यूचिषीसामहिषीकुरूणांशेमुषीमती ॥ सद्योनिवृत्तेतस्माच्चित्तवृत्तिरिवात्मनः ॥ ३८ ॥ यथायथास्याधावंत्यारिंखणेनपदोर्युगम् ॥ तथातथारुषारुण्यंतस्याधत्तदृशोरपि ॥ ३९ ॥ कृष्णाततस्तेनकृतांतभासाकेशेगृहीत्वाभुविपातितासा ॥ पर्यायबद्धोद्यमविश्रमाभ्यांपद्भ्यांकराभ्यामपिपर्यभावि ॥ ४० ॥ प्रहारभीत्येवतदामृगाक्ष्यानाढ्यांक्वचिद्यांतरधत्तसंज्ञा ॥ उद्भ्रम्यसादूरगतेप्रहर्तर्युद्घाटयामासदृशौचिराय ॥ ४१ ॥

सैरंध्रीराजपत्न्याःदासी स्पृहयसिइच्छांकरोषि विगर्ह्यंअनुचितं द्विरेफोरज्येतभ्रमरः आसक्तःभवेत् पितृवनद्रुमगुच्छिकाःस्मशानतरुपुष्पमंजरी ॥ ३३ ॥ चपलताव्यभिचारः

पतिवत्नीसभर्तृकास्त्री हठाद्बलात्कारात् दिष्टांतंदोग्धिमलयंददाति॥३४॥ मेकीताःगंधर्वाःसंतिममपतयःगुप्तरूपाःसंति अनिशंचिरं स्वाभिरूप्यांस्वकांतिईर्ष्यांश्चभिमानः॥३५॥ दोष्मतामवतंसाःभुजवीर्यशालिश्रेष्ठाः अप्रमादेनगोपायंतिदाक्षिण्येनरक्षंति मानिनःमानधनाः ॥ ३६ ॥ वामपथःदुर्मार्गः प्रतिष्ठामस्थामं दक्षिणेपथित्वांचारयिष्यंतित्वांहनिष्यंति धृतक्रुधःकोपवशाः ॥ ३७ ॥ महिषीद्रौपदीशेमुषीमतीबुद्धिमती बुद्धिमानित्यूषिषीइत्युक्तवती तस्मात्निववृतेकीचकान्निवृत्ता ॥ ३८ ॥ रिंखणंगमनस्खलनं पदोर्युगंपदद्वयं रुषाकोपेन आरुण्यंरक्तवर्णत्वंदृशोर्युगंनेत्रद्वयम्॥३९॥ कृष्णासैरंध्रीक्कतान्तः यमः उद्यमःश्रमः विश्रमःविरामः पर्यभाविपराजितातताडिता ॥ ४० ॥ नाड्यामंतरधत्तमूर्च्छायुक्ताबभूव संज्ञाचेतना उद्गम्य दर्शयित्वा मृगाक्षीसैरंध्री ॥ ४१ ॥

( गद्यम् ) तदनुशनैरुत्तस्थुषीधरातलपरागधूसरिमतिरोहितदीधितितयावासरापलापितमहामहौषधिलतेवविलुलितचूर्णकुंतलतयाचक्रवाताकुलीकृतवालपूलिकाचरममृगीवसूतान्ववायजनपदस्यप्रथमामीतिबाधामिवबाष्पधारामुत्सृजंतीक्वचिदपिशरणमलभमानासायाज्ञसेनीमंदंमंदंतदेवभूपतिभवनमभिजगाम ॥ ५ ॥

धरातलंभूतलं परागधूसरिम्णाधूलिधूसरत्वेन तिरोहितदीधितिः व्याप्तकांतिः वासरः दिवसः विलुलितंमर्दितं कुंतलःकेशः पूलिकागुच्छः वालःकेशः सूतान्वयःकीचककुलं ईतिबाधाअतिवर्षणपीडानाशकारिणी शरणःरक्षिता याज्ञसेनीसैरंध्री भूपतिभवनंविराटगृहं५

( पद्यम् ) दृष्ट्वातांज्ञातवृत्तांतोदेव्यागेहेचरज्जनः ॥ नयनांभोविमुमुचेनतुकिंचनभाषितम् ॥४२॥ सायंमहानसशयंशनकैर्ययौसाभीमंरहःपृथुशरावकृतोपधानम्॥ धूमाधिरोहमलिनंवसनंवसानंनीलांबुवाहपरिवीतमिवाचलेंद्रम् ॥ ४३ ॥ निःश्वस्यदीर्घमियमंतिकमावसंतीस्पृष्टेनबाष्पसलिलैःकुचयोःस्खलद्भिः ॥ बुद्धेनतेनकिमिदंव्यसनंतवेतिपृष्टासगद्गदमुवाचविषण्णचेताः ॥ ४४ ॥ किमद्यमेदुःखमपत्रपाकाकोवीरपत्नीत्वपदेभिमानः ॥ सर्वगतंकीचकनीचपिङ्गाध्दृत्वाकचेताडनमाप्तवत्या ॥ ४५ ॥ मयिदुःखेनपुष्यंत्यांमत्स्याधिपसभांतरे ॥ तथ्यस्यैवयतेरासीद्धर्मसूनोरुपेक्षणम् ॥ ४६ ॥ बुभुक्षतेनजीवंतींमारितामेवमांनृपः ॥ कल्याणंखलुतत्तस्यकंकभावभृतोऽधुना ॥ ४७ ॥ तस्यैवाज्ञापये

जस्रंचलतास्खलनंविना ॥ भवताखलुनिःशंकंपरामृश्येकचेपरैः ४८

ज्ञातवृत्तांतावर्तमानश्रुता देवीसुदेष्णा नयनांभोविमुमुजेरुरोद ॥ ४२ ॥ सायंरात्रौ महानसःपाकशाला रहःएकांतस्थलं शरावंपाकपात्रं आधिरोहःलेपः अंबुवाहःमेघः अचलःपर्वतः॥४३॥ अंतिकमावसंतीसमीपंस्थिता बाष्पसलिलंनेत्रोदकं बुद्धःजागृतः तेन भीमसेनेन व्यसनंसंकटं सगद्गदंअस्पष्टाक्षरसहितम्॥४४ ॥ मेमम अपत्रपालज्जारहिता नीचपिड्ःअधमविटः पदंस्थानम् ॥ ४५ ॥ घुष्यंतीआक्रोशंकुर्वती मत्स्याधिपःविराटः तथ्यंसत्यं धर्मसूनोरुपेक्षणंधर्मराजस्यउपेक्षा ॥ ४६ ॥ बुभुक्षतेभोक्तुंइच्छति२ भक्षयितुं इच्छति मारितामृता कंकभावःकंकनामगृध्रत्वम्॥४७॥ अजस्रंसर्वदा स्खलनंविघ्नं कचे केशेपरामृश्येधृता परः परपुरुषः ॥ ४८ ॥

दुःशासनादप्यधिकोपराधेसूतात्मजोयंननिहन्यतेचेत् ॥ आद्ये कचग्राहिणिनाशितेपिसमायुपौवेणिमवेहिमांच ॥ ४९ ॥ अयं बलीयानितिमतिश्चेदन्यत्रमांक्वापिनयस्वभीरुम् ॥ अज्ञातवासेप्यनुभूयमानेरक्ष्यंहिशीलंगृहिणीजनानाम् ॥ ५० ॥ श्रुत्वावधूगिरमिमांस्वपनोपनीतंशोणत्वमक्ष्णिपुनरुक्तयतोरुषाऽपि ॥ तस्याधरोष्ठमुदवेपतनिर्गमिष्यत्क्रूराक्षरावलिविमर्दनशंकयेव।५१॥ गदापिसातिष्ठतुमेगभीरानियुद्धमात्रंमयिनिर्ममाणे ॥ क्वमेघवाहः क्वमरालवाहःक्वताक्ष्र्यवाहःक्वमहोक्षवाहः ॥ ५२ ॥ हिडिंबकिर्मीरबृहद्रथात्मभूबकादिहत्यातरतस्त्रपांबुधौ ॥ निमज्जनायैवभुजस्यमेऽधुनासृजस्यमुंकीचकसूदनोद्यमम् ॥५३॥ तथाप्यौदास्यमेतस्मिन्ननौपायिकमेवमे ॥ क्षोदीयानपिवध्योहिकुलस्त्रीध्रुङ्महीयसाम् ॥ ५४ ॥

अपराधःकेशाकर्षणं सूतात्मजःकीचकः आद्यकचग्राहीदुःशासनः ॥ ४९ ॥ बलीयान्शक्तिमान् तेतव अन्यत्रअन्यदेशे भीरुर्भयशीलः गृहिणीशीलंकुलस्त्रीमर्यादा ॥ ५० ॥ वधूगिरं स्त्रीवचनं स्वपनोपनीतंनीद्राप्रापितं शोणत्वंआरक्तत्वं रुषारोषेण उदवेपतअस्फुरत् क्रूराक्षरावलिःभयंकराक्षरपंक्तिः ॥ ५१ ॥ गभीराभंगरहिता निपुद्धंबाहुयुद्धं मेघवाहःइंद्रः मरालवाहःविधिः ताक्ष्र्यवाहःश्रीकृष्णः महोक्षवाहःश्रीशंकरः ॥ ५२ ॥ बृहद्रथात्मभूःजरासंधः हत्यावधः त्रपांबुधिःलज्जासमुद्रः कीचकसूदनोद्यमंसृजसिकीचकहननोद्योगमुत्पादयासि निमज्जनंस्नानम् ॥ ५३ ॥ औदास्यमनौपा-

पिकंउदासीनताअयोग्या क्षोदीयःक्षुद्रः वध्यःवधंकर्तुंयोग्यः कुलस्त्रीधृक्कुलस्त्रीग्राही महीपाः सःश्रेष्ठपुरुषाः ॥ ५४ ॥

( अयेतान्विकिंबहुना ) तस्यासृजायावकितांघ्रिमस्थांचूर्णेनकर्पूरमयांगरागाम् ॥ अकीर्तिमष्याथविलिप्तनेत्रामलंकरिष्येममवीवीरलक्ष्मीम् ॥५५॥ वीरश्रियःशिल्पमिदंमयोक्तंयथार्थभावादनुभूयसद्यः ॥ सैरंध्रिकाचारविनोदनेपितवानुसारेच्छुमवेहिमांत्वम् ॥५६॥ त्वयापुनःश्वःस्मितपूर्ववाचाप्रत्युत्पतंत्येवकटाक्षखेलैः ॥ क्रीडांविधातुंक्रियतामसुष्यसंकेतभूस्तांडवमंडपोऽयम् ॥ ५७ ॥

सृजायावकितांघ्रिःरुधिरेणसंजातः लाक्षारसयुक्तःपादः अंगरागः ( उटि म.भा. ) अकीर्तिमषीअकीर्तिरूपंकज्जलम् ॥ ५५ ॥ वीरश्रीशिल्पंवीरलक्ष्मीप्रसाधनं यथार्थसत्यं सैरंध्रिकाचारविनोदनं दास्याचरणविनोदः अनुसारंअनुकरणम् ॥ ५६ ॥ पुनःश्वःअन्यदिने स्मितपूर्ववाचाहास्यपूर्वकभाषणेन प्रत्युत्पतंतिसन्मुखंगच्छंति क्रीडारतिमुखं अमुष्यसंकेतभूःकीचकस्यसंकेतस्थलं तांडवमंडपःनृत्यमंडपः ॥ ५७ ॥

( गद्यम् ) इत्याश्वासितवतःपत्युरनुमत्यापुनरागत्यनेपथ्यभवनमधिशयालोरस्याश्चेतसःपलायमानस्यभयभरस्यसापिविभावरीसहचरीवभूव ॥ ६ ॥

पत्युरनुमतिःभीमस्यानुमोदनं नेपथ्यभवनंराज्ञाःअंतर्गृहं विभावरीसहचरीवभूवराज्याःसहचारिणीवभूव गताइत्यर्थः ॥ ६ ॥

( पद्यम् ) अन्येद्युरेत्यचपलःपुनरब्रवीत्तांसुभ्रुप्रसीदमयितुल्यनिकारपात्रे ॥ केलीसुहार्दकलहेषुचकेशकृष्टिपादाहतिंचदधतीकुरुवैरशुद्धिम् ॥५८॥ पंचसंतुधवास्तेभ्योमुंचभीतिंमयिस्थिते ॥ पंचवक्त्रेवनेदृष्टेकिंचरेयुःपरेमृगाः ॥ ५९ ॥ मस्तकेंजलिपद्मस्यममसंप्रतिभामिनि ॥ प्रसादशंसिनंपादंप्रयच्छसहचारिणम् ॥६०॥

एत्यआगत्य तुल्यनिकारपात्रःपराभवसदृशापराधपात्रः केलिःरतिक्रीडा हार्दकलहःप्रेमकलहः केशकृष्टिःकेशाकर्षणं पादाहतिंपादताडनं वैरशुद्धिःरोषप्रतीकारः।५८। धवःपतिः भीतिंमुंचअपकृतिभयंत्यज पंचवक्त्रःसिंहः परमृगःअन्यपशुः ॥ ५९ ॥ अंजलिपद्मंहस्तकमलं शंसिनःसूचकः सहचारोमित्रं भामिनीकोपना ॥६०॥

( गद्यम् ) इत्यविवेकंप्रलपंतमेनंप्रतिजुगुप्सयामुखसाचीकरणेन-

पाहेतुकतामभिनयंतीसाकुंतीस्नुषातृष्णाभिभूतेववचनमिदंकिंचिदुदंचयांचक्रे ॥ ७ ॥ अयिभद्रजगदिदमारुद्रंक्षुद्रयितुमनिद्राणस्यशंबरद्रुहःशासनमुद्रणायद्रुह्यतिकोवाजनःकिंतुइयानेवभस्तुतेविशेषः ॥ ८ ॥

अतिवेलंअतीवप्रलपंतं निंद्यभाषणंकुर्वाणं जुगुप्सानिंदा साचीकरणंवक्रीकरणं त्रपालज्जातृष्णाभिभूतासंगेच्छापराभूता उदयांचक्रेउवाच ॥ ७ ॥ क्षुद्रयितुंनिर्बलंकर्तुं अनिद्राणःदक्षः शंबरद्रुट्मदनः आरुद्रंरुद्रपर्यंतं (रुद्रःशंकरः) द्रुह्यतिद्रोहंकरोति ॥८॥

(पद्यम्) स्त्रीपुंसयोर्भावनटौमिथोयौपूर्वस्तयोर्व्रीडतिरःपटेन ॥
चिरायतेस्पष्टयितुंस्वरूपंपरस्तुतन्नोत्सहतेऽनुमंतुम् ॥ ६१ ॥

नटःनर्तकः व्रीडालज्जा तिरःपटःअंतःपटः पूर्वःप्रथमः चिरायतेविलंबंकरोति परःपुरुषः नटः ॥ ६१ ॥

( किंबहुना ) गीर्भिस्तवाद्यचतुराभिरुदस्यतेमेगंधर्वदंडनभयंत्वदवाप्तिविघ्नः ॥ तस्माद्व्रजस्वरतिसौख्यभरायरात्रौभीमेस्थितेतमसिनर्तनगेहमध्यम् ॥ ६२ ॥ तथैवलीलांतनवानितत्रतल्पांतसीमानमुपेयुषस्ते ॥ भूयोयथांतःपुरिकाजनानांवक्त्रंनपश्येर्नपुनःस्पृशेश्च ॥ ६३ ॥

गीःवाणी अवाप्तिविघ्नःप्राप्तिसंकटं दंडनभयंउदस्यतेशासनभीतिंत्याज्यते भरःअतिशयः भीमंभयंकरं तमःअंधकारः ॥६२॥ लीलांतनवानिसुरतक्रीडांकुर्या युद्धक्रीडांकुर्या तल्पांतसीमानंशय्यास्थलं वक्त्रंमुखं अंतःपुरिकाजनःराज्ञःस्त्रीजनः ॥ ६३ ॥

(गद्यम्) एवंमृगाक्ष्यावचनमाक्षिकस्यक्षौद्रपटलीभूतकर्णपुटःप्रमोदार्णवजलमानुपायमाणहृदयः सदनमासाद्यसमालंभनपूर्वेणसलिलावगाहेनविरजीकृतांगोयमंतरिवबहिरप्यवलिप्तः ॥ ततःपरंभगवतिनिजतनुजप्रजावतीमनोरथसिद्धिसंपादयितुमिवकमलबंधौचरमसिंधौनिमग्नेनिरुध्यमानदिविपदध्वांतेध्वांतकदंबेसंभृतसंभोगसंविधानःकीचकोनिर्वर्तितराजभोजनपरिवेषणकृत्येनपवनसूनुनाप्रविष्टपूर्वंतदेवनर्तनगेहमगाहत ॥ ९ ॥

मृगाक्षीवचनमाक्षिकंसैरंध्रीभाषणमधु क्षौद्रपटलीमधुमक्षिका प्रमोदार्णवःहर्षसागरः आसाद्यआगत्य समालंभनंसुगंधिपुष्पंकचूर्णलेपनं अवगाहःस्नानं विरजीकृतंविमलीकृतं

अवलिप्तः सर्वितः २ गर्वितः भगवतिसूर्ये तनुजप्रजावतीभ्रातृपत्नीसैरंध्री कमलबंधुःसूर्यः चरमसिंधुनिमग्नःअस्तंप्राप्तःदिवसद्ध्वांतः गगनमार्गांतर्भागः ध्वांतकदंबःअंधःकारसंघः संभृतःसंपादितः संभोगसंविधानंमदनोद्दीपकपदार्थः पवमानःवायुः ॥ ९ ॥

( पद्यम् ) कसालभंजिकेवासिमानिर्निनिस्तंभपार्श्वगा ॥
इत्यसौभीमतल्पांतमाससादशनैःशनैः ॥ ६४ ॥

सालभंजिकापुत्तलिका तल्पांतमाससादशय्यासमीपंप्राप पार्श्वगापार्श्वगामिनी ६४

(ग०)ततस्तंवल्लवोऽपिस्त्रैणसमुचितेनकंठस्वरेणमृदुलमेवंजगाद ॥ १० ॥

वल्लवःभीमसेनः स्त्रैणःस्त्रीवशः समुचितंसम्यक्योग्यं मृदुलंमृदु ॥ १० ॥

( पद्यम् ) वधूशतमनादृत्यमामपेक्ष्ययदागमः ॥
तत्त्वांबहिर्गतप्राणंमन्यतेमेमनोधुना ॥ ६५ ॥

अनादृत्यअनादरंकृत्वा मांअपेक्ष्यमदभिलाषंकरोषि वधूःस्त्री बहिर्गतप्राणःअन्यासक्तप्राणः २ प्राणरहितः ॥ ६५ ॥

(ग०)एवमुक्तवतेवृकोदरायकीचकःपुनरपिवाचंमृदुपदामुपदामाददे ॥

वृकोदरःभीमसेनः वाचंभाषणं उपदामाददेउपायनंचक्रे प्रत्युवाचइत्यर्थः ॥ ११ ॥

(पद्यम्) गंधर्वानपिदयितांस्तृणायमत्वामामेवंरतिविधयेप्रतीक्षसे यत् ॥ देवत्वादपिसुतनुत्वयाऽधुनामेमर्त्यत्वंजगतिमहत्तरंप्रक्लृप्तम् ॥ ६६ ॥ सुराधिकत्वेपिपदेवितीर्णेमय्यंतवास्त्येवहिकृत्यशेषः ॥ कुरुष्वमेरोरधिकेकुचेमांसुधाधिकंपाययचाधरोष्ठम् ॥ ६७ ॥ इत्थं ससांत्ववचनोदयमर्धमंचमारोढुमानमितपूर्वतनोःसभीमः ॥ मुष्ट्याहतिंनिटिलसीम्निचकारशत्रोरायुर्लिपिंशिथिलयन्निवधातृदत्ताम् ॥ ६८ ॥ गंभीरचेताःसचकीचकोऽपिगंधर्वबुद्ध्याप्रतिहंतुमेनम् ॥ सद्योभविष्याःशवतादशायाःसाधारणीमेवबबंधमुष्टिम् ॥ ॥ ६९ ॥ जवंभजंतौजयतर्षवंतौरुषंवहंतौरुधिरंकिरंतौ ॥ परस्परंतौपटुशब्ददंतौनियुद्धकेलिंनिशिनिर्मिमाते ॥ ७० ॥ अक्ष्वेलितारावमवीरवादमवीक्षकश्लाघनचाटुगुंफम् ॥ अनुच्चनिश्वासमहुंक्रियाकमभूनपूर्वनदभून्नियुद्धम ॥ ७१ ॥ शिलीमुखैश्चित्तजचापजुष्टैर्दत्तानिरंध्राणिदधन्निजांगे ॥ समीरजातेनविधूनितोऽपि सकीचकोनवचुकूजकिंचित् ॥ ७२ ॥ तस्मिन्हतेनिपतितेवक

वैरिमुष्ट्यारंगेणतेनसमकंपिचलत्पताकम् ॥ पार्थाच्चिरेणपरिशी
लितमुत्तराद्यैःकन्याजनैरभिविडंबयतेवनाट्यम् ॥ ७३ ॥

दयितःपतिः रतिविधये सुरतोत्सवाय मर्त्यत्वंप्रक्लृप्तं मनुष्यत्वंकृतम् ॥६६॥ वितीर्णपदंदत्तंस्थानं अस्त्येव हिख्यातं मेरुःसुवर्णपर्वतः सुधाअमृतम् ॥६७॥ सात्वोदयंप्रेमाविर्भावयुक्तं मंचःमंचकः पूर्वतनुःशरीरोर्ध्वभागः आहतिःताडनं निटिलसीम्निभालदेशे धाताविधिः ॥ ६८ ॥ गंभीरःधैर्यवान् एनंभीमं शवतादशाप्रेतावस्था साधारणी सदृशा ॥ ६९ ॥ जवःवेगः जयतर्षवान्जयतृष्णाधारी रुषंक्रोधं रुधिरंकिरंतौःरक्तंवर्षंतौ नियुद्धंबाहुयुद्धम् ॥ ७० ॥ अक्ष्वेलितारवःसिंहनादरहितः अवीक्षकःअप्रेक्षकः श्लाघनंप्रशंसा अनुच्चनिश्वासःउच्चश्वासरहितः अभूतपूर्वंपूर्वकालेनभूतम् ॥ ७१॥ शीलीमुखःबाणः भ्रमरः चित्तजचापजुष्टंमदनधनुसेवितं रंध्रंछिद्रं क्षतं समीरजातःभीमः वायुसमूहः कीचकः वेणुः वीरविशेषः चुकूजशब्दंकृतवान् भाषणंकृतवान् ॥ ७२ ॥ बकवैरिःभीमः रंगःनृत्यमंडपः चिरंपरिशीलितंसदाअभ्यस्तंनाट्यंनृत्यं अभिविडंबनंअनुकरणम् ॥ ७३ ॥

( गद्यम् ) तत्रमंडपेपिंडतयाकृतंतस्यदस्योस्तरसंतरसाविलोक्य
प्रहर्षवत्यापार्षत्याश्लाघापूर्वमाघ्रातभुजःकुरुव्याघ्रोनिर्गत्ययथा
पुरमविकृतमानसोनहानसोदरंप्रविश्यसुखेनाधिशिश्ये ॥ १२ ॥

दस्युःशत्रुः कीचकः तरसंमांसं पार्षतीसैरंध्री श्लाघास्तुतिः अविकृतःविकाररहितः महानसोदरंपाकशालांतर्भागः कुरुव्याघ्रः अधिशिश्ये भीमःनिद्रांचकार ॥ १२ ॥

(पद्यम्) निपात्यमानिन्यपितत्रशत्रुंचक्रंदभीत्येवचलाग्रपाणिः॥
निशम्यतत्किंकिमितिब्रुवाणाःसर्वेऽपितस्यावरजाःसमेयुः।७४॥
विलोक्यतंभ्रातरमात्तशोकामृत्युद्विपस्येवपिधानपिंडम् ॥ ज्या
यांनिवामीविदधुःस्थलींतामस्रेणगुल्फद्वयसींनिजेन ॥ ७५ ॥

शत्रुंकीचकं अग्रपाणिःहस्ताग्रं कीचकावरजाःकीचककनिष्ठबंधवः ॥ ७४ ॥ द्विपपिधानपिंडःहस्तिभक्ष्यपिंडः अस्रंरक्तं वाष्पं ज्यायानिवज्येष्ठभ्राताकीचकेवअमीकीचकबंधवःउपकीचकाः ॥ ७५ ॥

( गद्यम् ) ततस्तेसोदरविपत्तिनिमित्तमियमेवेतिरोषरूषितचेत
सोनिवेशितशवपिंडभरस्यमूर्तैर्भीममुष्टिभिरिवनारिकेलफलैरुपब
ध्यमानस्यचरमविमानस्यस्तंभदारुणिसंदानितांकौंतेयसीमंति

र्नीतिमिरमुदिरसौदामिनीभिःकरदीपिकाभिः दीयमानचंक्रमाव काशेनपितृवनमुपनीयस्वकीयविवेकसंपत्यासहाचित्यामन्याक्षुः॥ ॥ १३॥ तावदेषाचकितचकिताहानाथजगत्प्राणभूतविपत्समय वंधोसंप्रतिकांतारंसवतीपरिगृह्यमुग्धामिमांकथंनगणयसीत्युच्चकै श्ररोदीत् ॥ १४ ॥

सोदरविपत्तिःबंधुमरणं रूपितंगुंठितं चरमविमानंप्रेतवाहनंदारुकाष्ठं संदानितावद्धा कौंतेयसीमंतिनीसैरंध्री तिमिरंअंधःकारः मुदिरःमेघः सौदामिनीविद्युत् चंक्रमंगमनं पितृवनंश्मशानं विवेकःयोग्यायोग्यविचारः ॥ १३ ॥ एषासैरंध्री जगत्प्राणभूःवायुपुत्रःभीमः बंधुःसंरक्षकःकांतारम्या २ स्त्री रसवतीपाकशाला २ नवरसयुक्ता मुग्धामूढा उच्चकैःउच्चैः ॥ १४ ॥

(पद्यम्) तत्रास्यारुदितस्वनैरथजवादाकारितोमारुतिःसक्थ्योर्वातवलादलातमहसामीषद्भ्रमोन्मीलनैः॥ध्वांतेगारुडभित्तिभंगिपिशुनेप्योघंद्विषांधावितुंज्येष्ठस्याध्वनिदिव्यदृष्टिमकरोद्दोर्दर्पसिद्धांजनैः ॥ ७६ ॥ निपातितान्स्वेननिरीक्ष्यतत्रसूतान्सवीरःसुमनायतेस्म ॥ उत्पातमुद्रांदधतास्वपित्रातरूनिवारण्यतलेविरुग्णात् ॥७७॥ गंधर्वभीरुषुजनेष्वितरेषुतत्रविष्वक्पलायनपरेषु र्विमुक्तबंधा ॥ कृष्णाचकीचकरिपुश्चकृतप्रशंसावन्योन्यमभ्यगमतांनगरंपुनस्तौ ॥ ७८ ॥

स्वनःशब्दः आकारितःनिमंत्रितः मारुतिःभीमसेनः संक्थ्योर्वातवलात्ऊरुगमनजन्यवायुवेगात् अलातमहःज्वलत्काष्ठतेजः ध्वांतंगाढतमः भित्तिभंगिपिशुनःभित्तिरचनासदृशः ओघःसमूहः द्विपःउपकीचकाः ज्येष्ठस्याध्वनिसिद्धांजनैःद्रिव्यदृष्टिमकरोत् जघानेतिभावः ज्येष्ठःभ्राताकीचकः तस्यअध्वामार्गः दोर्दर्पःवाहुसामर्थ्यगर्वः ॥७६॥ सूताःउपकीचकाः सवीरःसुमनायतेस्म वीरपुरुषःभीमः शांतोवभूव मुद्रास्वरूपं पितावायुः विरुग्णःभग्नः ॥ ७७ ॥ भीरुःभयशीलः तत्रश्मशाने विष्वक्आसमंतात् विमुक्तबंधाकृष्णा बंधनमुक्तासैरंध्री ॥ ७८ ॥

(गद्यम्) ततःक्षणादेवसंध्यारुणिमकरंबितेनांबरमणिबिंबेनपरिचुंब्यमानेशंबायुधहरिदंगणेपरितोरुधिरवीचिमुचापिशितपिंडेन कृतानुषंगरंगंविडंबयनिसतिशुचानिरस्तमौलिभिर्निर्गलितवाग्भिर्निष्पंदतनुभिर्निखिलैरपिपौरैर्नृपतिनिलयद्वारंनिबिडितमभूत् ॥१५॥

संध्यारुणिमकरंबितः संध्यारागावृतः अंबरमणिबिंबं सूर्यबिंबं शंबायुधहरित्पूर्वदिक् ( शंबायुधःइंद्रः ) रुधिरवीचिः रक्तकल्लोलः पिशितं मांसं कृतानुषंगं रंगं विडंबयति सति सूर्योदयकालेसति निरस्तः त्यक्तः मौलिःबाष्पं वाङ्निर्गलितःशब्दरहितः निष्पंदंअचंचलं निलयंगृहं पौरैःनिबिडतमभूत् पुरजनामिलिता इतिभावः ॥ १५ ॥

( पद्यम् ) वध्वस्तदामंडलशोनिविष्टारुंधांद्भिराशारुरुदुर्विलापैः ॥
महत्सुदुःखेष्वपिजृंभितेषुमालिन्युपालंभनमस्पृशद्भिः ॥ ७९ ॥
तस्मिन्दिनेसन्निधिमागतासाकृष्णादृशंकेकयराजपुत्र्याः ॥मषी
शलाकार्पणयाविनापिमंदेतरामश्रुकणैरकार्षीत् ॥ ८० ॥ तावद्यु
धिष्ठिरमुखाअपिवातजातव्याधूतकीचककुलाकुलकोटिभागम् ॥
निर्यत्प्रियानयनवारिझरीपरीतंसंकेतशैलमधिरुह्यनिशश्वसुस्ते ॥
॥ ८१ ॥ तदनुविदितवार्तोधार्तराष्ट्रश्चरेभ्यःशुभगुणचरितेभ्यः
सूतजानांशतस्य ॥ वसतिमरिजनानांमात्स्यभूपालपुर्यांहृदय
मुकुरलग्नैर्हेतुभिर्निश्चिकाय ॥ ८२ ॥ अन्येद्युरंगेश्वरसौबलिभ्या
मास्थायगोष्ठीमधिपःकुरूणाम् ॥ भीष्मादिमान्बंधुजनान्विलो
क्यगंभीरमेवंगिरमाबभाषे ॥ ८३ ॥

वध्वःकीचकस्त्रियः मंडलशोनिविष्टाःमंडलाकारेणमीलिताः आशादिक् जृंभितःवृद्धिंप्राप्तः मालिनीसैरंध्री उपालंभनंउपहासः ॥ ७९ ॥ केकयराजपुत्रीराज्ञीसुदेष्णा मषीकज्जलं मंदेतराविपुला ॥ ८० ॥ युधिष्ठिरमुखाःधर्मप्रमुखाःपांडवाः वातजातव्याधूतंवायुपुत्रेणभीमेनहतं २ वायुसंघेनभग्नं कीचककुलंकीचकोपकीचकवर्गः २ वेणुसंघः कोटिभागःअग्रभागः ऊर्ध्वभागः निर्यत्निर्गच्छत् नयनवारिनेत्राश्रु संकेतशैलः संकेतस्थानं रूपपर्वतः निशश्वसुःनिश्वासंतत्यजुः ॥ ८१ ॥ चरःवार्तानिवेदकः शुभगुणचरितःसत्यभाषणादिकर्मएवचरित्रंयस्यसः सूतजविदितवार्ताकीचकवधविदितवृत्तांतः अरिजनवसतिंपांडवस्थानं मात्स्यभूपालपुरीविराटनगरी मुकुरलग्नःआदर्शप्रतिबिंबितः धार्तराष्ट्रःनिश्चिकायदुर्योधनोनिश्चयंकृतवान् ॥ ८२ ॥ अंगेश्वरसौबलीकर्णशकुनी गोष्टीमास्थायसभामधिष्ठाय गिरमाबभाषेभाषणमुवाच ॥ ८३ ॥

( गद्यम् ) भोभोविदितंकिंभवतामपीदंसंप्रतिखलुमात्स्यपुरेकामपिकामिनींकामयमानःकीचकोनिशितस्यासर्तांभिरदृश्यैःपंचभिर्गंधर्वैरनुरहमस्त्वसंख्यापदाभिधेयतामनीयत ॥ १६ ॥ तस्यै

पुनरपिद्रुह्यंतस्तदनुजाअपितथैवेतिकाचिदियंकिंवदंतीकर्णात्क र्णमधिरोहति ॥ १७ ॥ एवंचेदसंशयंसाचतुष्पथमंडपिकास्तंभ सालभंजिकेवसर्वकरावमर्शभाजनंपांचालसुता ॥१८॥ तेऽपि पुनरज्ञातवासिनःपरेतपतिपवमानपाकशासनाश्विनांपारस्त्रैणेया स्तस्याःपतिविडंबकाःतेष्वपिद्वितीयेनैवबाहुशालिनावधूद्रुहांनि हंत्राभवितव्यम् ॥ १९ ॥ अहोसर्वत्रविशृंखलममीषांदौःशी-ल्यम् ॥ २० ॥ तथाहि ॥

विदितंज्ञातं मात्स्यपुरंविराटपुरं कामिनीकामयमानःस्त्रीसंभोगोत्सुकः अनुरहसि एकांतस्थले पंचभिःगंधर्वैः पंचभिःगुप्तपुरुषैः स्वसंख्यापदाभिधेयतामनीयत पंचत्वम-नीयत हतःइतिभावः ॥ १६ ॥ द्रुह्यंतःद्रोहंकुर्वंतः तदनुजाःकीचकबंधवःउपकीचकाः तथैवेतितैःहताइतिइयंजनवार्ताकर्णमधिरोहतिकर्णमागच्छति ॥ १७ ॥ सास्त्री साल-भंजिकापुत्तलिका करावमर्शभाजनंहस्तस्पर्शपात्रं पांचालसुताद्रौपदी ॥ १८ ॥ तेपांडुपुत्राः परेतपतिपवमानपाकशासनाश्विनांपारस्त्रैणेयाः यमवाय्विंद्राश्विनीकुमाराणां-परस्त्रियोत्पन्नाःपुत्राः धर्मभीमार्जुननकुलसहदेवाः पतिविडंबकःपतित्वानुकरणशाली बाहुशाली वधूद्रुद्हंताबलवान्स्त्रीशत्रुवधकर्ता ॥ १९ ॥ अमीषांपांडुपुत्राणां वि-शृंखलंदौःशील्यं अप्रतिबंधंदुःशीलत्वम् ॥ २० ॥

(पद्यम्) देशेजरासंधमुखैर्व्यरुधन्वनेपिकिर्मीरहिडिंबमुख्यैः ॥
गूढेनिवासेऽपिचसूतपुत्रैःक्वनुस्थितास्तेकलहंविनान्यैः ॥ ८४ ॥

गूढनिवासःअज्ञातवासः सूतपुत्राःकीचकोपकीचकाः ॥ ८४ ॥

( गद्यम् ) अत्रैवस्थित्वावेषांतरकंचुकैरकिंचनैरेतैर्वंचितःखलुक्षु द्रोविराटइत्यभिधायसुयोधनोराधेयेनसहकृतहस्तताल्लोवल्गद्भु जशिखरमुच्चैर्जहास ॥ २१ ॥

वेषांतरकंचुकःवेषांतराच्छादकः अकिंचनःदारिद्र्ययुक्तः राधेयःकर्णः हस्तताली-हस्तताडनं वल्गत्भुजशिखरंचलत्स्कंधः ॥ २१ ॥

(पद्यम्) संक्षोभेनरस्यमत्स्यनृपतेर्यौद्धुंस्वयंनिर्गतान्दृष्ट्वातानवकी र्णिनोवितनुमोगच्छाधुनात्वंपुरः ॥ इत्युक्तःकुरुभूभुजासदसिगा हर्तुंत्रिगर्तेश्वरस्तस्यैवापपुरींदिनावधिरिवार्यम्णःप्रतीचींदिशम् ८५

संक्षोभः त्रासः तान्पांडुपुत्रान् अवकीर्णीव्रतभ्रष्टः वितनुमःकूर्मः कुरुभूभुजःदुर्योधनः गाःधेनूः त्रिगर्तेश्वरःत्रिगर्तराजा सुशर्मा तस्यपुरीविराटस्यनगरं दिनावधिःदिनांतः अर्यमासूर्यः गाःकिरणान् ॥ ८५ ॥

( गद्यम् ) तत्रदक्षिणेनपुरंव्यग्रतरसैन्येनकाल्यमानंक्वचिदरुणतयानिमग्नजमदग्निकुमारोष्णनिश्वासवेगविलुलितवीचीप्रपंचामिवस्यमंतकपंचकंक्वचिन्नोलतयामदकंडूलवेतंडशुंडाविधूनितविटपमालमिवसालवनंक्वचिद्धवलतयामंदरगिरिमंथनपरिक्षोभितफेनकूटमिवक्षीरोदमध्यमुन्नमितलांगूलमुद्गमितहुंकारमुल्लसितधूलीकमुद्दामघंटारवंगोधनंनिशम्यसेनाकुंभिकुलगंभीरबृंहितारंभैर्मंदिराग्रसिंहप्रतिछंदवृंदमुखकंदरमौननियमंविभिंदन्ननुकूलपवमानपुरोनाटितपटैर्वैरिभटजीवितहरणायवैवस्वतमिवाह्वयद्भिःकेतनदंडैःपरिमोटितगगनतटिनीतटविटपिवाटोविराटोऽपिरणप्रयाणारभटीमटीकत ॥ २२ ॥

व्यग्रतरंगोहरणत्वरमाणं काल्यमानंहठान्नीयमानं अरुणतारक्तता जमदग्निकुमारःपरशुरामः लुलितवीचीप्रपंचःप्रसृतलहरीसमूहः स्यमंतकपंचकंक्षत्रियरक्तकृतपरशुरामतीर्थं कंडूलवेतंडःकंडूयुक्तः हस्ती विधूनितविटपमालाकंपितशाखापंक्तिः धवलताशुभ्रता परिक्षोभितफेनकूटःआसमंतात्पतितफेनजालं क्षीरोदमध्यमुन्नमितंक्षीरसमुद्रमध्यभागेनउच्चीकृतं लांगूलोद्गमितःपुच्छाविष्कृतः धूलीकंधूलिः उद्दामंउच्चंगोधनं धेनुरूपधनं कुंभिकुलंगजसंघः बृंहितंगजगर्जना प्रतिछंदवृंदःप्रतिमासमूहः नाटितपटंचालितपटवस्त्रं वैवस्वतःयमः आह्वयद्भिःनिमंत्रणंकुर्वद्भिः केतनंध्वजः परिमोटितःभंजितः गगनतटिनी आकाशगंगा विटपिवाटःवृक्षसंघः आरभटीमटीकत युद्धोद्योगंचकार ॥ २२ ॥

(पद्यम्)संख्यायथानेपुसमारुरुक्षाकेलिस्पृशांकीचकबांधवानाम्॥ अश्वप्रसंगेऽप्यभिधीयमानोगंधर्वशब्दोगरलायतेस्म ॥ ८६ ॥ सभ्यैश्चसूदैश्चतुरंगिभिश्चपौरैश्चविज्ञापितवीर्यभूम्नः ॥ दंतानिवेंद्रद्विरदःसपार्थान्धीरःपुरोधायरुरोधशत्रुम् ॥ ८७ ॥ तृणकल्पमपित्रिगर्तभूपंतमुपेक्ष्यैवतदागवांकुलानि ॥ सहदेवविलोकमात्रहर्षात्सहसामात्स्यपुरीसमीपमापुः ॥ ८८ ॥ मौर्वीकुशांकितकरावथबद्धपंक्तीमात्स्यत्रिगर्तवसुधाधिपयोरनीकौ ॥ आध्मातशंखनि

नदप्रणवप्रधानमायोधनाध्ययनमद्भुतमारभेताम् ॥८९॥ मत्स्येंद्रमंदिरमहानसभक्ष्यवृंदस्वच्छंदभक्षणरहस्यवदावदेन ॥ क्ष्वेडारवेणवल्लस्यतदारिपूणांचित्तंनकेवलमकंपिदिशोदशापि ॥९०॥

संरूपापपानं युद्धायवाहनं आरुरुक्षाआरोढुमिच्छा अभिधीयमानःउच्चार्यमाणः गरलापतेस्मगरलवद्बभूव॥८६॥ सभ्यःसभासदः सूदःवल्लवः वीर्यभूमावीर्यवैपुल्यं द्विरदः ऐरावतहस्ती पार्थान्धर्मभीमनकुलसहदेवान् पुरोधाय अग्रभागेकृत्वा ॥ ८७ ॥ तृणकल्पःतृणसदृशः त्रिगर्तभूपःसुशर्मा गवांकुलानिधेनूनांसंघाः ॥ ८८ ॥ मौर्वीकुशांकितकरौधनुर्गुणरूपदर्भयुक्तहस्तौ मात्स्यत्रिगर्तवसुधाधिपौसुशर्मविराटौ अनीकंसैन्यं आध्मातशंखनिनदः कृतशंखशब्दः प्रणवःॐकारः आयोधनंमारभेतांयुद्धारंभंचक्रतुः ॥ ८९ ॥ महानसःपाकशाला क्ष्वेडारवःसिंहनादः वललःवल्लवःभीमसेनः नकेवलमकंपिनकेवलंकंपितम् ॥ ९० ॥

उदयेसमरस्यसैनिकानामुभयेपामसिधेनवोववल्गुः॥ निजनामपदापरार्धवाच्यंनिखिलंग्राहयितुंचरक्षितुंच॥९१॥तावदंबरपथादभिगंतुस्तामनीकसरणीशमनस्य ॥ कासरादहरधीशतुरंगःकांदिशीकइवदूरमयासीत्९२ पाटलीकृतपयोधरपंक्तिःप्रादुरासशनकैरथसंध्या ॥ वासरस्यरजनेरपिसीम्नोर्मध्यभागकुरुविंदशिलेव ॥९३॥

असिधेनवःववल्गुःछुरिकाःचंचलाःबभूवुः निजनामपदापरार्धवाच्यं असिधेनुइतिनिजनाम तस्यपदस्यशब्दस्यअपरार्धंउत्तरार्धंधेनुः तस्यवाच्यं गोधनमित्यर्थः ॥९१॥ अंबरंआकाशं अनीकसरणीयुद्धमार्गः शमनकासरःयममहिषः अहरधीशतुरंगःसूर्याश्वः कांदिशीकः भयाकुलः ॥ ९२ ॥ पाटलीकृतारक्तवर्णीकृता पयोधरपंक्तिःमेघमाला वासरःदिवसः कुरुविंदंमाणिक्यम् ॥ ९३ ॥

संध्याव्रमौसासमरेभटौघोर्बिंबंबिभिद्यादितिभीतिभारात् ॥ विवस्वताविद्रवताविसृष्टादिवस्थलेर्दीप्तिरिवाग्निदेया ॥९४॥ नभःपयोधेर्नवविद्रुमश्रीःक्रमेणसंध्याकृशिमानमागात् ॥ उद्यत्प्रकोपैरुभयैरनीकैर्विभज्यनीतेवविलोचनानि ॥ ९५ ॥ ध्वजिनीजनितंरजोंधकारंत्वरितंबांधवकौतुकातिरेकात् ॥ परिरब्धमिवांधकारसंघःपरमार्थोरणचत्वरंजगाहे ॥९६॥ संकोचपक्षानेकेपुसंविशत्स्वपिपत्रिपु ॥ विस्तार्यपक्षानपरेविचेरुस्तत्रपत्रिणः॥९७॥ शरवर्षे

भयेनतत्रयुद्धेसकलेकंककुलेगतेविदूरम्॥ प्रमदंदधदेकएवकंकः परिबभ्रामससभीमपक्षपातः ॥९८॥ अन्योन्यपट्टसविघट्टभवैःस्फुलिंगैराजिस्थलेरुधिरकर्दमभाजियोधाः ॥ आगामिनीषुसमितिष्वधिकंविधातुमासन्प्रतापनवबीजमिवावपंतः ॥९९॥ नलिनीशबिंबपथचारमलब्ध्वानभसिभ्रमत्सुनववीरसुरेषु ॥ करपल्लवौपरिनिपीड्यमृगाक्ष्यःकलहायनक्तमशपंतसुराणाम् ॥ १०० ॥ रराजहैमीरथकेतुराजीरज्यत्पटारक्तकणैःप्रकीर्णैः ॥ आकर्ण्य युद्धाद्भुतमर्धमार्गाद्दृष्टुंनिवृत्ताचरमेवसंध्या ॥ १ ॥

भटौघःवीरसंघः विवस्वान्सूर्यः विद्रवान्पलायमानः वियत्आकाशं विसृष्टंत्यक्तं दीप्तिःतेजः ॥९४॥ नभःपयोधिः आकाशरूपसागरः विद्रुमश्रीःप्रवालशोभा कृशिमानं क्षीणत्वं उभयानीकंसुशर्मविराटसैन्ये ॥ ९५ ॥ ध्वजिनीजनितंसैन्योत्पादितं अतिरेकःअतिशयः परिरब्धुंआलिंगनंकर्तुं परमार्थःसत्यः रणचत्वरंजगाहेसमरांगणंप्रविवेश ॥ ९६ ॥ संविशत्प्राविशत् पत्रीपक्षिः २ बाणः ॥९७॥ तत्ररणांगणे कंककुलंगृध्रसंघः कंकःधर्मः प्रमदःहर्षः भीमःभयंकरः २ भीमसेनः पक्षपातःपक्षचालनं २ साहाय्यम्॥९८॥ पट्टसविघट्टभवःपट्टिशायुद्धप्रहारोत्पन्नः स्फुलिंगःअग्निकणः आजिःयुद्धं आगामिनीआगच्छंती समितिःसयुद्धम्॥९९॥नलिनीशबिंबप्रथचारमलब्ध्वासूर्यबिंबमार्गमप्राप्य नक्तंकलहःरात्रियुद्धं सुरमृगाक्ष्यःअशपंतअप्सरसःशापंददुः॥१००॥ रराजशुशुभे हैमीरथकेतुराजिःसुवर्णयुक्तरथध्वजपंक्तिः पटःध्वजवस्त्रं प्रकीर्णःसर्वतःप्रसृतः युद्धाद्भुतंयुद्धवृत्तम्

( गद्यम् ) तत्रतावदरिशरनिकृत्तमत्तगजससिकुलपत्तिनवरक्तासिक्तंरणचत्वरमनुभूयभूयसारोपेणसंवर्तसमवर्तिसममूर्तिर्हृदिनर्तितधार्तराष्ट्रशासनवार्तस्त्रैगर्तःकैवर्तइवमत्स्यचक्रवर्तिनमाहर्तुमुहूर्तादुपावर्तत ॥ २३ ॥

अरिःशत्रुः निकृत्तःछिन्नः सप्तिःअश्वः रणचत्वरंयुद्धांगणं संवर्तसमवर्तिः प्रलयकालसंबंधीयमप्रभा धार्तराष्ट्रःदुर्योधनः शासनंआज्ञा त्रैगर्तःसुशर्मा कैवर्तःधीवरः मत्स्यचक्रवर्तीराजाविराटः उपावर्ततसन्मुखमगमत् ॥ २३ ॥

( पद्यम् ) मानिनामचरमोथसुशर्माभध्यवर्तिनमनीकपयोधेः ॥ संमुखोझटितिबंधमनैषीत्सज्ज्ययारिपुमपत्रपयाच ॥ २ ॥ भूपेपराभवपदेयुधिधर्मसूनोर्भ्रूवल्लिकंपकलिकामवतंसयन्सः ॥ मथ्नन्बलानिरिपवमरुतःकुमारोमात्स्यंविमुच्यविततारदशांतदी

याम्॥३॥ विराटसैन्येषुमिषत्सुयुद्धेत्रिगर्तनेतुर्दृढबंधनाय॥कोदंड युक्तोगुणएवतत्रकर्ताचचक्षेकरणंचजज्ञे ॥ ४ ॥ तस्यांनिशायां तुतमःकदंबकंनिमीलनोन्मीलनयोर्दशांयथा ॥ युद्धंतयोर्मात्स्य सुशर्मणोस्तथासमानरूपंफलमेवसंददौ ॥५॥ विमानितोवायुभु वाविराटतोविमोचितोधर्मभुवादयालुना ॥ तयारजन्येवससामि शेषयासमंध्वजिन्यानिरगाद्यथागतम् ॥६॥ व्याकृत्तशीर्षकरको विमलाक्षस्थिदंतोरक्तन्हदांशुकधरोरथकेतुदंडः ॥ सेनाक्षधृग्धृतश मःस्वयमाजिरंगःकंकादिवापचरमाश्रमसंप्रदायम् ॥ ७ ॥

अचरमःश्रेष्ठः अनीकपयोधिःसेनासागरः ज्याधनुर्गुणः अपत्रपानिर्लज्जा॥१०२॥ भूपःविराटः भ्रूवल्लिकंपकलिकांअवतंसयन् भ्रूकंपेनसूचयन्नित्यर्थः बलंसैन्यंरिपुःसुशर्मा मात्स्यःविराटः तदीयांदशांवितताार विराटस्यबंधनदशांददौइतिभावः॥१०३॥ मिषत् पश्यत् त्रिगर्तनेतासुशर्मा कोदंडंधनुः गुणःधनुर्ज्या २ वल्लवः कर्ताभीमः करणंज्यावं- धनं २ मौर्वीकरणम्॥१०४॥तमःकदंबकंअंधःकारसंघं दशांमीलनोन्मीलनंदर्शनाभावः समानरूपंफलंसुशर्मविराटबंधनम् ॥१०५॥ विमानितःअवमानितः धर्मभूःधर्मः ध्वजि- नीसेना॥१०६॥व्याकृत्तशीर्षं छिन्नमस्तकं करकंकमंडलुं रक्तांशुकंरक्तवस्त्रं अक्षःरथा- क्षः२रुद्राक्षः शमःयुद्धावमानं२शांतिः आजिःयुद्धं चरमाश्रमःश्रेष्ठाश्रमः संन्यासदीक्षा७

( गद्यम् ) तदनुमुहुर्मुहुर्वल्लमेवकेवलमवलोकमानावलमानाव लशासनदिशायामोजायमानेनचंद्रमसाप्रसूतैर्मदकरटिघटाविषा णांगणप्रतिफलनशतगुणितधवलिमवीचिभिर्मरीचिभिर्दलितरण विमर्दश्रमदुर्दशाविराटस्यचमूरपिप्रतिनिवर्तनवेगहर्षमाणागोधन पयःस्रवनधारापातशीतलितसिकतायांपदव्यांपक्ष्मपंक्तिनिमील नेनसमरभूरेणुभारेणलोचनयोर्निमीलनशिल्पकल्पितबहुसाहाय्य कमुद्रयानिद्रयातांयामिनींपाश्चार्धमीमामत्यवीवहत् ॥ २४ ॥

वलल:वल्लवः भीमसेनः बलशासनःइंद्रः दिक्पूर्वदिक् ओजस्वीतेजोयुक्तः मदकरटिघ- टामत्तगजसंघः विषाणगणप्रतिफलनंदंतपंक्तिप्रतिबिंबं धवलिमवीचिःशुभ्रलहरी मरीचिः चंद्रकिरणः गोधनंधेनुसंघः शीतलितसिकताशीतलाकृताशर्करा पदवीमार्गः रेणुभारः धूलिजालं शिल्पकल्पिताक्रियाकृता यामिनीरात्रिः पाश्चार्धसीमामत्यवीवहत्उत्तरार्धा- वमानंप्रापयामास ॥ २४ ॥

पञ्चस्तबकः समाप्तः ।

(पद्यम्) आरूढेद्यामर्कबिंबेपरेद्युःसाकंसैन्यैःसार्वभौमःकुरूणाम्॥
पार्थीदेकांबिभ्रदाहृत्यगोत्रांमात्स्यादन्यांतत्पुरेहर्तुमागात् ॥१॥
विदूरमार्गश्रमविह्वलांगीसेनासमस्ताधृतराष्ट्रसूनोः॥ आभीरवा
टांतिकएवतस्थौसद्योनिरुद्धेवतदाज्यगंधैः॥ २॥

द्यांगगनं अर्कःसूर्यः अपरेद्युःद्वितीयदिने पार्थःधर्मराजा गोत्रापृथ्वी आहृत्यअपहृत्य मात्स्यःराजाविराटः गोत्रागोसमूहः ॥ १ ॥ विदूरंअतिदूरं विव्हलाअसमर्था आभीरवाटांतिकं गोपालनिवासस्थानसमीपम् ॥ २ ॥

( गद्यम् ) तावत्तस्यपादातंसर्वाभिसारेणगाहंगाहंगवांव्रजंव्रजगृहेजगृहे ॥ १ ॥

तस्यपादातंदुर्योधनस्यपत्तिसंघः अभिसारंसहगमनं गवांव्रजंगाहंगाहंधेनुसंघं प्रविश्य प्रविश्य व्रजगृहंघोषस्थानम् ॥ १ ॥

( पद्यम् ) दंडाघातेदीयमानेऽपियोधैर्दुग्धंभूयोदोहशेषंवहंत्यः ॥
घोषाद्गावोनिःसरंतिस्मयत्नाद्गोभ्योघोषोयत्नलेशंविनैव ॥ ३ ॥
इतस्ततःसंभ्रममीयुषीणांगोपांगनानांकुचदर्शनेन ॥ निषादिपं
क्तिर्निजहस्तिमस्तेसृणिंविधातुंश्लथपाणिरासीत् ॥ ४ ॥ भीम
सेनभिषजाशमितोयोदक्षिणेझटितितस्यपुरस्य॥ उत्तरेप्युदभव
त्सतुपार्श्वेपक्षवातइवकौरवबोधः ॥ ५ ॥ वृत्तंनिवेदयितुमेतदती
ववेगादाधाव्यकश्चिदथगोपयुवाविविग्नः ॥ रिंखत्पदाःक्षितिपते
रिवघोषसीम्निस्वस्यापिगाविमुमुचेनृपसूनुगोष्ठ्याम् ॥ ६ ॥ औ
दास्यंकिमिदंकुमारकुरवोगृह्णंतिगास्तेखिलास्त्वद्दोष्णोःसमयोय
माजिपुपरैर्दुष्प्रापमाप्तुंयशः॥ देवींकेकयनंदिनींकुरुमहावीरप्रसू
मूर्द्धसुद्रागारोहरथंगृहाणचधनुर्धत्स्वाभ्यमित्रीणताम् ॥ ७ ॥

आघातःप्रहारः भूयःदुग्धंबहुतरंदुग्धं घोषःगोस्थानम् २ आर्तशब्दः निःसरंतिस्म निःसंसारः २ निर्जग्मुः ॥३॥ संभ्रममीयुषीगोपांगना त्वरयाप्राप्नुवतीगोपस्त्री निषादिपंक्तिःहस्तिपकसंघः मस्तकुंभस्थलं सृणिंविधातुंअंकुशमारोपयितुं श्लथःशिथिलःपाणिः हस्तः ॥ ४ ॥ भिषक्वैद्यः दक्षिणेदक्षिणदिग्भागे उत्तरेउत्तरदिग्भागे पक्षवातः अर्धांगवायुः ( रोगविशेषः ) बोधःउपसर्गः पार्श्वेवामभागे ॥ ५ ॥ अतीवअतिशयं गोपयुवातरुणगोपालः विविग्नःभीतिवशः रिंखत्पदंस्खलच्चरणंस्खलच्छंदं क्षितिपतिःविरा-

टः घोषसीम्निगोस्थानभागे गाःधेनूः २ व्राचः नृपसूनुःविराटपुत्रःउत्तरः गोष्ठीसभा गाविमुमुचेउवाचेतिभावः ॥ ६ ॥ औदास्यंउदासीनता गाःधेनूः दोष्णोःभुजयोः आजिःयुद्धं परःशत्रुः देवीकेकयनंदिनी राज्ञीसुदेष्णा प्रसूःप्रसववती द्राकृत्वरितं अभ्यमित्रीणतांधत्स्वधैर्यंधारय एकाकित्वेनजेतृत्वं धारय ॥ ७ ॥

उक्तोयमित्थंपुरतोवधूनामुल्लासयन्श्मश्रुलवान्नखाग्रैः ॥ किंचिन्मणिस्तंभवियोजितांगोगिरंदधेंतःपुरमात्रधीरः ॥ ८ ॥ तथाभुजंविक्रमयेयमेतंयंतायदिस्यादिहमेयुयुत्सोः॥ षष्ठोऽपिनःकश्चन पांडवोभूदितित्रसेयुःकुरवोयथाते ॥ ९ ॥ इदंनिशम्यस्मितलांछितोष्ठ्यात्रोत्तराकेशकृताप्रणुन्ना ॥ बृहन्नलांमागधिकृत्यदक्षांभ्रात्रेनिवेद्यानयतिस्मचैनाम् ॥ १० ॥ अवाप्यतांसंसदमादृतःक्रमादवाग्वभारद्वयमिंद्रनंदनः ॥ नृपात्मजंपूजयितुंचमस्तकंविलासिनीर्हासयितुंचकंचुकम् ॥११॥ षंढोऽपितेजसातत्रसारथ्यसदृशाकृतिः ॥ नकासांपौरदृष्टीनांचकासामासफाल्गुनः ॥ १२ ॥ तंसारथिपदेकृत्वाविधातारमिवेश्वरः ॥ परसेनांहमन्नेवप्रधक्ष्यामीत्यमन्यत ॥१३॥ मालिनीतादृशःपत्युर्महांतंतंरणोद्यमम् ॥ श्यामाकचरुनिर्वापंजज्ञेसोमायवाजिने ॥१४ ॥अक्रत्रिमाण्यद्यवशेकुरूणांपांडुभ्रुपायावसनानिसंति ॥ आहृत्यनस्तानिदिशेतिकन्यास्तमभ्ययाचंतकुतूहलिन्यः ॥ १५ ॥

अयंउत्तरःश्मश्रुलवान् उल्लासयन् क्रोधाविर्भावंकुर्वन्नित्यर्थः ( श्मश्रुम.म.प्रिशी ) वियोजितंसरलंस्थितं अंगंयेनसःवियोजितांगः गिरंदधेभाषणमुवाच अंतःपुरंराजस्त्रीनिवासस्थानम् ॥ ८ ॥ विक्रमःपराक्रमः यंतासारथिः युयुत्सुःयुद्धंकर्तुमिच्छुः त्रसेयुःत्रासंप्राप्नुयुः ॥ ९ ॥ निशम्यश्रुत्वा स्मितंहास्यं उत्तराविराटकन्या केशकृताप्रणुन्नासैरंध्र्याप्रेरिता बृहन्नलाअर्जुनः दक्षाकुशला भ्राताबंधुः एनामानयतिस्म बृहन्नलामानीतवती ॥ १० ॥ संसत्सभा अवाग्वभारअधोभागेदधौ नृपात्मजःउत्तरः आदृतःकृतादरः हृद्येमस्तकंकंचुकंच ॥ ११ ॥ सारथ्यसदृशःमागधिकर्मानुरूपः नचकासामासनविकासयामास फाल्गुनःअर्जुनः ॥१२॥ दृष्टिःज्ञानं २ दर्शनं पदंस्थानं विधाताब्रह्मा ईश्वरःशंकरः परसैन्यंप्रधक्ष्यामि शत्रुसैन्यंहनिष्यामीत्यर्थः ॥ १३ ॥ मालिनीद्रौपदी ता दृशःपत्युःषंढत्वंप्राप्तस्यविजयस्य रणोद्यमंयुद्धोद्योगं सोमायवाजिने श्यामाकचरुनिर्वापं

षंढत्वनाशकमितिश्रुत्यभिप्रायेणरूपकं जज्ञेज्ञातवती ॥१४॥ अकृत्रिमंक्रियारहितं २ अलौकिकं पांडुस्नुषाद्रौपदी आहृत्यअपहृत्य कन्याः तंअभ्यर्थार्चतउत्तराद्याराजकुमार्यःउत्तरंयाचनांकृतवत्यःकुतूहलिन्यःकौतुकवत्यः ॥ १५ ॥

( गद्यम् ) तत्क्षणंयातायातसरभसराजलेखवाहमुखश्रुतबल्लवभुजबलावलेपवृत्तांतमोदमानमुदकुलवीरपत्नीवीरजननीतितवयुगपत्प्रसिद्धेर्वैजननोवासरोयमितिकात्यायनीजनस्तूयमानसुदेष्णंमस्तकतलविन्यस्तहस्तपल्लवतल्लजन्नृद्धबल्लवयोषिदभयया ज्ञावचनप्रतिशब्ददानदक्षगवाक्षमात्रोपलक्षितंकुमारप्रयाणपरिहार्यमाणमातुलशतांतःपुरवधूटीनवविलापघोषंतत्पुरमासीत् ॥ २ ॥

सरभसःवेगसहितः राजलेखवाहःराजदूतः बल्लवःभीमः अवलेपःगर्वः मोदमानंसूदकुलंहर्षयुक्तःपाचकवर्गः युगपदेकस्मिन्काले प्रसिद्धिर्वैजननःख्यातिप्रसूतिसमयः कात्यायनीअर्धवृद्धास्त्री विन्यस्तंस्थापितं प्रतिशब्दंउत्तरं बल्लवयोषित्गोपालस्त्री गवाक्षंवातायनं उपलक्षितंसहितं प्रयाणगमनं मातुलःकीचकः वधूटीराजस्त्री विलापघोषः आक्रंदनम् ॥ २ ॥

(पद्यम् )लाजाभिवर्षीललनासमाजोराज्ञःकुमारायरथस्थिताय॥
मुदाशिषंमूल्यमिवव्यतानीज्जिघृक्षितानांद्विषदंशुकानाम्॥१६॥
आलेख्यदत्तैःपुरुषैरुपेतामालोकयन्राजपथप्रतोलीम् ॥ घोटान्नुदन्तीसरथेनिबद्धान्पोटांपुरस्कृत्यपुरात्प्रतस्थे ॥ १७ ॥

लाजाभिवर्षीमंगलप्रदलाजवृष्टिकर्ता मुदाशिषंव्यतानीत्हर्षेणाशीर्वादंददौ जिघृक्षितंहर्तुमिष्टं द्विषदंशुकंशत्रुवस्त्रम् ॥१६॥ आलेख्यंभित्तिचित्रं दत्तंलिखितं उपेतांयुक्तां प्रतोलीमालोकयन्रथ्यांपश्यन् घोटान्अश्वान् सःविराटपुत्रः पोटाबृहन्नला ॥ १७ ॥

( गद्यम् ) तदनुदक्षिणदिङ्मुखादुदयमानःपवमानोवृंदारकमुक्तमंदारकुसुमवर्षमंदायितधूमगंधबल्लवचिकुरबंधमाघ्रायनिशितस्यजयोत्सवंविज्ञापयितुमवसरंविचिन्वन्निवविराटकुरुनंदनयोःस्यंदनसमीपेमंदमंदमस्पंदत ॥ ३ ॥

उदयमानपवमानःनिर्गतवायुः वृंदारकाःदेवाः मंदारःकल्पवृक्षः वर्षंवृष्टिं चिकुरः केशः आघ्रायआघ्राणंकृत्वा अवसरंविचिन्वन् समयंमृगयमाणः विराटकुरुनंदनौउत्तरार्जुनौ स्यंदनमस्पंदतरथमगच्छत् ॥ ३ ॥

(पृ०)प्रस्वापितेभ्यःपरभूपतिभ्यःस्वजातिवर्गःसुलभोरणेस्मिन्॥ भविष्यतीतिप्रणनर्तहृष्टाशतांगशाटीशतमन्युसूनोः ॥ १८ ॥ जलेमत्स्यान्दधानोऽपिस्थलेमत्स्यान्विलोकितुम् ॥ आगतोब्धिरिवानीकःकुरूणांददृशेततः ॥ १९ ॥ सेहेजिष्णुर्नतत्रारेःसेनाधूलिंविसृत्वरीम् ॥ प्रायेणमानिनापुंसापरागोनहिसह्यते ॥ २० ॥ तत्रारिसैन्यमवलोकितुरुत्तरस्यस्त्रीगोष्ठिकाजनिरणेनिजवेश्मनीव ॥ भीश्चित्तमश्रुलहरीनयनंविमूर्छाबुद्धिंप्रवेपथुरुजावपुरानशेयत् ॥ २१ ॥ व्यातन्वन्कुरवंगलेविरचयंस्तालुन्यपांशोषणंदृष्टीरक्ष्णिविवर्धयन्विपुलयन्घ्रांधार्तराष्ट्रारवैः ॥ सेवायांत्वरयन्धनंजयपदस्यांतर्बहिःकंपयन्त्रासोमात्स्यसुतेचकारचरितंपण्णांमृतूनांक्रमात् ॥ २२ ॥

प्रस्वापितंप्रस्वादनास्त्रविशेषेणनिद्रांप्रापितं स्वजातिवर्गःवस्त्रसमूहः हृष्टाहर्षवती शतांगशाटीप्रणनर्तरथध्वजपताकानृत्यतिस्म शतमन्युसूनुःअर्जुनः ॥१८॥ अब्धिःसमुद्रः अनीकंसैन्यं ततःयुद्धप्रांते ॥ १९ ॥ जिष्णुःबृहन्नला अरिः शत्रुः विसृत्वरीप्रसरणशीला परागःधूलिः शत्रुकृतापराधः ॥२०॥ अरिसैन्यंकौरवसेना गोष्ठिकाऽजनिसभाजाता वेश्मगृहं भीरानशेभीतिःप्राप प्रवेपथुकंपः रुक्व्यथा वपुःशरीरम्॥२१॥ कुरवंव्यातन्वनकुशब्दंप्रकटयन् कुरवंपुष्पविशेषं अपांशोषणंउदकशोषणं अक्ष्णिनयने घ्रांगगनं धार्तराष्ट्राःहंसाः धृतराष्ट्रपुत्राः धनंजयपदंअग्निस्थानं २ पार्थचरणं मात्स्यसुतःउत्तरः चरितंकार्यं त्रासःशत्रुभीतिः ॥ २२ ॥

( गद्यम् ) अथरथादवप्लुत्यपुरंप्रतिपलायमानोयमुत्तरःपश्चादनुधाव्यकचेषुगृहीतवनेफाल्गुनाथफल्गुनाकंठरवेणप्राक्तनचित्रमिवप्रमुषितार्धवर्णवचनमेवमवादीत् ॥ ४ ॥

कचःकेशः फाल्गुनःअर्जुनःफल्गुनाकंठरवेणनीचेनकंठस्वरेण प्राक्तनचित्रंजीर्णचित्रं प्रमुषितंलुप्तं अर्धवर्णःअर्धाक्षरं २ शुभ्रत्वादिवर्णार्धम् ॥ ४ ॥

( पद्यम् ) किंवाचिकीर्षुरसिहंतबृहन्नलेत्वमक्ष्णोर्नमांतिकुरुराजबलान्यमूनि ॥ सद्योनिवर्तयरथंसमरेच्छयालंनेष्यामिहंनिजगृहेष्ववशेषमायुः ॥ २३ ॥ गाःकालयंतुसहवत्सकुलैरशेषैर्घोषान्दहंतुकुरवःप्रहरंतुगोपान् ॥ मह्यंपलायनमहोत्सवमेवदेहिप्राणेषु

किंचिदपिमेगुरुतांनवेत्सि ॥ २४ ॥ मातुर्मुखंममपुरःपुरएत्यति
ष्ठत्युत्कंठितस्यनयतत्सविधंकृपालो ॥ यावंतिसंतिममकोशगृहे
सवित्रीतावद्भिरेवकनकैरभिषेक्ष्यतित्वाम् ॥ २५ ॥ चित्रेयुद्धंवि
लोक्याहंचापलादेत्यवंचितः ॥ तत्रासद्भिरिवोद्यद्भिःक्ष्वेडाहेषि
तबृंहितैः ॥ २६ ॥ यथाहंभूतलंत्यक्त्वारथमारूढमुच्छ्रितम् ॥
तथाहृदंतरंत्यक्त्वाकंठंप्राणोधिरोहति ॥ २७ ॥

बलंसैन्यं अक्ष्णोर्नमांतिद्रष्टुंनशक्नोमि समरेच्छयालंयुद्धतृष्णयापुर्यतामपितुनकर्तव्ये-त्याशयः अवशेषमायुःअवशिष्टायुष्यम्॥२३॥ कालयंतुदृष्टान्नयंतु घोषःगोस्थानं गुरु-तांमहत्त्वं नवेत्सिनजानासि॥२४॥ मातासुदेष्णा तत्सविधंमातुःसमीपं कोशगृहेभांडारगृहे सवित्रीजननी कनकंसुवर्णं त्वांकनकैरभिषेक्ष्यतितुभ्यंबहुसुवर्णदास्यतीत्यर्थः ॥ ॥ २५ ॥ चापलंअविवेकः असत्अविद्यमानं उद्यत्प्रादुर्भवत् क्ष्वेडासिंहनादः हेषितं-अश्वगर्जना बृंहितंगजशब्दः ॥ २६॥ रथमारूढं रथमारूढवानस्मि उच्छ्रितंउन्नतं प्रा-णोहृदंतरंत्यक्त्वाकंठमधिरोहति प्राणनाशंभवेदित्यर्थः ॥ २७ ॥

(गद्यम्) इतिबहुधाविलप्यपादयोःप्रणिपतंतंनृपसुतमपरांगेकर
पुटेनमुहुरास्पृश्यालिंगयन्सस्मितंगिरममरपतिसुतोपिप्रवर्तयामास५

प्रणिपतंतंनमनंकुर्वन्तं अपरांगंपृष्ठभागः मुहुःवारंवारं अमरपतिसुतःगिरंप्रवर्तया-मास अर्जुनउवाचेतिभावः ॥ ५ ॥

(पद्यम्) उदितोऽसिविराटभूपतेरुदराद्भद्रकथंत्वमीदृशः॥ प्रवया
अपियःकुतूहलात्परसैन्यैरधुनापियुद्ध्यते ॥ २८ ॥ सारथौगतभ
येऽपिरथीत्वंसंगरेयदिबिभेषिरिपुभ्यः॥ मत्स्यकेकयभुवांभुजभा
जांमानकर्तनमितोऽपिपुनःकिम् ॥ २९॥ विस्तीर्यसंसदिविश्रृंख
लवीरवादंयुद्धात्पलायितवतोऽद्यतवांगकंपः॥ अंतःपुरेषुहसता
मबलाजनानामाचार्यएवभविताकुचवल्गितानाम् ॥ ३० ॥ कि
यद्विषामंशुकमाहृतंतेसहोदरेणेतिसखीभिरुक्ते ॥ मानोत्तराया
भृशमुत्तरायाःकिमुत्तरंब्रूहितदुत्तरत्वम् ॥ ३१ ॥ जरठोजनको
ऽपिमातुलाःशतमप्यंतमगुस्त्वमेककः॥ यदियासिनधैर्यमत्रतेनव
शेराष्ट्रमिदंभविष्यति ॥ ३२ ॥ तदिदंविजहीहिसाध्वसंकुरुपा

णौतृणतांकुरुष्वपि ॥ नवमत्स्येपतेस्तुवाहिनीमुखभागेखलुव ल्गनंक्षमम् ॥ ३३ ॥

उदितोसिउत्पन्नोसि ईदृशःसमरभयशीलः प्रवयाःवृद्धः परःशत्रुः अधुनापिअद्यापि ॥ २८ ॥ संगरंसमरं बिभेषिभीतोसि मत्स्यभुवःपितृकुलोत्पन्नाः केकयभुवःमातृकुलोत्पन्नाः भुजभाजःभुजवीर्यशालिनः कर्तनंनाशकारकम् ॥ २९ ॥ वादंविस्तीर्णबहुभाषणमुक्त्वा विशृंखलंनिरर्गलं वल्गितंचांचल्यं आचार्यःगुरुः अबलास्त्री ॥ ३० ॥ द्विषःशत्रवः अंशुकंवस्त्रं सहोदरःबंधुः भृशंअतिमात्रं मानोत्तरामानिनीश्रेष्ठा ॥ ३१॥ अंतमगुःमृत्युंप्राप्नुवन् राष्ट्रंतेवशेनभविष्यति त्वद्धस्तेराज्यंनदास्यतीत्यर्थः ॥३२॥ साध्वसंविजहीहिभीतिंत्यज तृणतातृणतुल्यत्वं पाणिःहस्तः मत्स्यपतिःमहामत्स्यः मत्स्यदेशराजा तृणताधनुः वाहिनीनदी सेना वल्गनंचांचल्यगमनं क्षमंउचितम् ॥ ३३ ॥

(गद्यम्) इत्याश्वास्यपितृवनाटवीतटमुपेत्यशमीविटपिकोटिसमाटीकितकिरीटशंखचापनिषंगोजयलक्ष्मीपरिणयनयोग्यतांसंपादयितुमिवखंडितषंढभावोऽयमाखंडलसुतोनिजतत्त्वव्याकरणाच्छतधापल्लवितधाष्ट्र्यैनैतेनसुदेष्णापत्येनपरिकल्पितसारथिशिल्पंरथमारुह्यक्षणेनवारिनिधिपूरस्यवडवावह्निरिवसपत्नसैन्यस्य संमुखीनोबभूव॥ ६ ॥

पितृवनाटवीश्मशानारण्यं विटपिकोटिसमाटीकितंवृक्षाग्रसमानीतं निषंगःतूणीरः परिणयनंविवाहः खंडितषंढभावःविसर्जितषंढत्वं आखंडलःइंद्रः तत्वव्याकरणंनामरहस्याख्यानं पल्लवितंपुष्टंकृतं सुदेष्णापत्यःउत्तरः परिकल्पितंसंपादितंशिल्पंचातुर्यं वारिनिधिःसागरः वडवावह्निःवडवाग्निः सपत्नसैन्यंशत्रुसेना ॥ ६ ॥

(प०)संख्यातीतमवेक्ष्यकौरवबलंतत्सव्यसाचीपुनश्चापेताद्दशिकिंचिद्देषविदधेसाचीभवंतींदृशम् ॥ पार्वत्यानिजवस्त्रपट्टशकलंस्नेहार्द्रयार्द्रस्वयंन्यस्यन्यस्यचिकित्सितव्रणशिरादेवोऽपियंश्लाघते ३४
नभसिप्रविसारिदेवदत्तेनरदत्तध्वनितंततोदधाने ॥ मुमुहुर्द्विरदामुमुचुर्हुरश्वारथिनश्चुक्षुभिरेभटाश्चबिभ्युः॥३५॥ पर्यायेणास्यगांडीवःपातितज्यःप्रकोष्ठयोः॥गंधर्वयुद्धमारभ्यस्तंमौनंसमापयत् ३६

संख्यातीतंअसंख्यं बलंसैन्यं सव्यसाचीअर्जुनः साचीतिर्यक् दृक्दृष्टिः पट्टंकौशेयं शकलंखंडं स्नेहःप्रीतिः २ तैलं स्वयंन्यस्यस्वयमुपरिस्थापयित्वा चिकित्सितःशमितः

देवःश्रीशंकरः ॥ ३४ ॥ देवदत्तःअर्जुनस्यशंखः नरःअर्जुनः ध्वनितंनादं द्विरदामुमुहुः हस्तिनःमोहंप्रापुः भटाश्वबिभ्युःवीराःभीतिंप्रापुः ॥३५॥ गांडीवंविजयधनुः ज्याधनुर्गुणः प्रकोष्ठःमणिबंधः गंधर्वःचित्रसेनः कृतंमौनंसमापयत्‌धनुर्गुणशब्दोभूदित्यर्थः॥३६॥

( गद्यम् ) अथकरतलद्वयमंडपकृततांडवस्यगांडिवस्यविस्फारेणपांडवोऽयमितिनिश्चित्यलोलानिस्तीर्णविस्तरसंधासिंधुरयंपुनरपिनिर्बंधमागतइत्यधृष्ययानिजेर्ष्ययारुक्षाःविपक्षाःपूर्वपक्षाःसिद्धांतमिव युद्धायतंपर्यवारयन् ॥ ७ ॥

तांडवंनृत्यविशेषं विस्फारणंभृत्यंचानादं पांडवःविजयः संधाप्रतिज्ञा सिंधुःसागरः निर्बंधंआग्रहं अधृष्याबलीयसी ईर्ष्यापरोत्कर्षासहिष्णुता रुक्षंकठोरं विपक्षःशत्रुः तंयुद्धायपर्यवारयन्‌विजयंयुद्धंकर्तुमवेष्टंत ॥ ७ ॥

(पद्यम् )विजयस्यरथेततोनिपेतुर्विमतानामिषवःपरःसहस्राः॥ जनमेजययागवेदिमध्येजगतांभीतिकराइवाहिसंघाः ॥३७॥ जंभद्विषोऽपितनयोजगदेकवीरोजन्यंसमारभतजृंभयितुंस्ववीर्यम् ॥ प्रत्यर्थिरक्तनटिनीस्नपनैःशराणांभेत्स्यन्निवाथपितृकाननवासदोषम् ॥ ३८ ॥ चलदश्वरथद्विपोत्थरेणून्वरणस्रङ्मधुभिःप्रणीयशांतिम् ॥ सुखदृष्टरणायथाभवेयुःसुरवामागगनेतथासमीयुः३९ कौंतेयकर्णहितयोपकंठमौहूर्तिकावेदितजैत्रयात्रैः ॥ आशातशल्यैरुरुधेऽथभल्लैराशाकुबेरस्यचवैरिणांच ॥ ४० ॥ उद्धारसंधिपरिमुक्तिषुमार्गणानामाद्येउभेअपिनदातिसृपुक्रियासु ॥सायुज्यमापतुरिवांतिमयासमीकेचक्रीकृतेधनुषिशक्रसुतेनतेन ॥४१॥ युद्धसीम्निभुजगर्वविभ्रुषामुच्छ्रितान्कटकनिःसृतांभसः ॥ तत्रलक्ष्यमकरोत्सकुंजरान्तस्यतातइवशैलसंचयान् ॥ ४२ ॥ कांडैरपातयदधःकरिमंडलानांशुंडाःप्रचंडतरदोर्युधिपांडुसूनुः ॥ निद्रास्यतांनिखिलवैरिमहीपतीनामुत्पादयन्निवपृथूरुपधानपंक्तीः४३

विजयःअर्जुनः विमतःशत्रुः इषुर्बाणः परःसहस्राःअसंख्याः जनमेजयःपार्थप्रपौत्रः अहिसंघःसर्पकुलम् ॥ ३७॥ जंभद्विपःमहेंद्रस्य जन्यंसमरं वीर्यंजृंभयितुंभुजबलंवर्धयितुं प्रत्यर्थीशत्रुः तटिनीनदी स्नपनैःभेत्स्यन्स्नानैःनाशयिष्यन् पितृकाननंश्मशानम् ॥३८॥ द्विपःहस्ती रेणुःधूलिः वरणस्रङ्मधुमृतवीरपुष्पमालामकरंदः सुरवामाःसमीयुः अप्सर-

सः आजग्मुः ॥ ३९ ॥ कौंतेयः विजयः उपकंठे समीपे मौहूर्तिकावेदितंज्योतिर्विदकथितं जैत्रंजेतृत्वं आशातशल्यंभस्वरशराग्रं भल्लःशरः कुबेराशाउत्तरदिक् ॥ ४० ॥ उद्धारः निषंगबहिर्निष्कासनंसंधिः धनुर्गुणलापनं परिमुक्तिःमोचनं मार्गणःबाणः सायुज्यमापतुःऐक्यंप्रापतुः समीकंयुद्धं शक्रः इंद्रः ॥ ४१ ॥ विप्रुट्लेशः उच्छ्रितंकटकंउच्चं गंडस्थलं २ उच्चंपर्वततटं निःसृतांभःप्रसृतंमदं २ प्रसृतं जलं कुंजरःहस्ती नागःमहेंद्रः शैलःपर्वतः ॥ ४२ ॥ कांडःबाणः करिमंडलंहस्तिसंघः दोःभुजः निद्रास्यतांनिद्रांकरिष्यतां महीपतिःराजा पृथूरुपधानपंक्तीःविपुलोच्छीर्षकपंक्तीः ॥ ४३ ॥

विशालरंध्रंविजयास्त्रदत्तंदेहस्यमध्येदधतोमहांतः ॥ स्कंदस्य शक्त्याक्षतमेखलस्यक्रौंचस्यलीलांकरिणोविवव्रुः ॥४४॥ आधोरणस्यशिरसापतनार्धमार्गेसंधानभाजिदिवमुत्पतितेकबंधे ॥ न्यस्यस्रजंसुरवधूरवबद्धमौनातस्माद्भयाद्विविपलायतदूरमेका ॥ ४५ ॥ तुंगागजाश्चजवनास्तुरगाश्चवीरायोधाश्चतेननिहताभुवमाशुजग्मुः ॥ निद्रास्यतोनिबिडमत्रनरेंद्रसंघात्प्रागेवसम्यगवकाशजिघृक्षयेव ॥ ४६ ॥ गंगांसितांरविसुतामसितांपिशंगींचक्रेनयोःसहचरींचपुराविरिंचिः ॥ शोणाकृतानतटिनीतिकिलार्जुनेनबाणालिभिःशतमसृक्सरितांवितेने॥४७ ॥ कर्णेक्वेतिगवेषणस्यविषयेगांधारनाथेपुनर्निर्गंतुंकृतदिक्भ्रमेशकलितछत्रेऽपिदुर्योधने ॥ द्रोणेऽपिक्षपितध्वजेकृतधनुर्भंगेऽपितस्यात्मजेमूर्च्छालेसरितःसुतेऽपियुधिसामम्लौकुरूणांचमूः ४८॥वीणामुनींद्रोविजयस्ययुद्धंनीरंध्रभावेननिरीक्षमाणः॥ आनंदजैरश्रुभिरेवचक्रेहस्तार्पितैराह्निककृत्यमभ्रे ॥४९॥ विस्मयार्णवविभावरीविभुंवीक्ष्यवीक्ष्यविजयस्यविक्रमम् ॥ उत्तमांगमखिलाप्सरोगणैरुर्वशीनभसिसाप्यकंपयत् ॥ ५० ॥ वपुरस्त्रसात्कृतवतांसुभटानांवरणस्रजेविबुधवारवधूभ्यः ॥ कुसुमात्ययेसतिदलान्यपिदत्वाक्षुपतामवापकुलिशायुधशाखी ॥ ५१ ॥ बाह्वोःप्रवृष्टकुसुमस्यततोनिलिंपैःप्रस्वापनास्त्रमहिमातिशयेनतस्य ॥ निद्रायतेस्मनिखिलापृतनारिपूणांयुद्धावतीर्णमपनेतुमिवश्रमंस्वम् ॥ ५२ ॥

अस्त्रदत्तंरंध्रंशस्त्रकृतंछिद्रं स्कंदःकार्तिकेयः क्षतंछिन्नं मेखलाकटकः क्रौंचःपर्वतविशेषः करीहस्ती ॥४४॥ आधोरणःहस्तिपकः संधानंशरसंधानं दिवंस्वर्गं कबंधंशीर्षरहित- शरीरं न्यस्यनवदेवभ्रांत्याक्षिप्त्वास्रजंपुष्पमालां अवबद्धंधृतं दिविआकाशमार्गे ॥ ॥ ४५ ॥ तुंगंउच्चं जवनःवेगवान् तुरगःअश्वः आशुत्वरितं निद्रास्यतः ( अस्त्रबले- न ) निद्रांकरिष्यतः निबिडंसर्वदा जिघृक्षाग्रहीतुमिच्छा ॥४६॥ सितःशुभ्रः रविसु- तायमुना असितःकृष्णः पिशंगीपीता सहचरीसखी विरिंचिःविधिः शोणातटिनीरक्ता- नदी अलिःपंक्तिः असृक्रक्तं सरित्नदी ॥ ४७ ॥ गवेषणंअन्वेषणं गांधारनाथः शकुनिः शकलितंछिन्नं क्षपितंछिन्नं सरितःसुतःभीष्मः मम्लौदीनाबभूव ॥ ४८ ॥ मुनींद्रःऋषिःनारदः नीरंध्रभावःएकाग्रता आह्निककृत्यंसंध्यादिकर्म अभ्रंआकाशं ॥ ४९ ॥ विस्मयार्णवःआश्चर्यसागरः विभावरीविभुःचंद्रः उत्तमांगंशीर्षं उत्तमांगम- कंपयत्प्रशंसांचक्रेइत्यर्थः ॥ ५० ॥ वपुरस्त्रसात्कृतवतांमरणंप्राप्नुवतां वरणस्रजेपुष्प- मालाप्राप्त्यर्थं विबुधवारवध्वःअप्सरसः कुसुमात्ययःपुष्पनाशः दलंपर्णं क्षपतापुष्पप- त्रराहित्यं कुलिशायुधशाखीकल्पवृक्षः ॥५१ ॥ प्रवृष्टंविकीर्णं निलिंपाःदेवाः प्रस्वाप- नास्त्रंनिद्रास्त्रं पृतनानिद्रायतेस्मसेनानिद्रांचकार अवतीर्णश्रममपनेतुंमातं श्रमंदूरी- कर्तुम् ॥ ५२ ॥

( गद्यम् ) ततोबीभत्सुःपरिषत्समानीतनिजवधूपरिभवानुरूपफ लप्रदित्सयेवसारथिनाविद्विषामपहारितविविधपरिधानोगुरुप्रभृ तिषुदिवास्वापोमाभूदितिकृपयामन्यमानइवपुनरपितदस्त्रंक्षणा देवसंजहार ॥ ८ ॥

बीभत्सुःपार्थः परिषत्सभा वधूःद्रौपदी परिभवानुरूपफलप्रदित्सानम्रत्वरूपफलदा- तुमिच्छा सारथिःउत्तरः विद्विषांशत्रूणां परिधानंवस्त्रं दिवास्वापःदिवानिद्रा ॥ ८ ॥

( पद्यम् ) अथदृशःपरिमृज्यकरांचलैररुणिताःपरिमीलनमुद्रया॥ प्रकटितास्यबिलैःपटुजृंभणात्प्रबुबुधेकुरुराजचमूचरैः ॥ ५३ ॥ पूर्वप्रयोगमुदिताइवतस्यबाणा निद्रांद्विपत्सुनिखिलाददुरेवदी र्घाम्॥ पश्चात्प्रयुक्तममुनाहमितीवरोषात्प्रस्वापनंतुवितताररतादृ शीताम् ॥ ५४ ॥ सतुवपुरनुशोच्यधार्तराष्ट्रःसमितिविराटसुताप नीतचेलम् ॥ कुलिशभृदनुजीविदत्तबंधांकुशलममन्यतघोषवा टयात्राम् ॥ ५५ ॥ पराञ्चिकर्तुंवदनान्यनीशाःपश्चाद्विमर्देननम्र

स्यमर्यः ॥ निरीक्ष्यनग्नान्नृपतीन्ह्रियार्तानिमीलनाज्ञंनयनंनि
निंदुः ॥ ५६ ॥ इतिपरिभवलक्ष्म्यासंभृतांभोगमुद्रांतनुभिरभि
दधानाःस्थाणुभिर्नग्नभावे ॥ ध्वजपटशकलाग्रैःक्लृप्तकौपीनकृ
त्याःसुबलदुहितृपुत्राःस्वांपुरींप्रत्यगच्छन् ॥ ५७ ॥

दृशःपरिमृज्यनेत्राणिपरिशोध्य करांचलंहस्ताग्रं अरुणितंरक्तवर्णं आस्यंवदनं पटुजृंभणंबलवंतंजृंभणास्त्रं चमूसेना ॥ ५३ ॥ पूर्वप्रयोगःप्रथमप्रयोगः द्विषःशत्रवः अमुनापार्थेन प्रस्वापनंनिद्रास्त्रं तादृशींदीर्घांनिद्रां नवितताररमरणंनददौ ॥ ५४ ॥ धार्तराष्ट्रःधृतराष्ट्रपुत्रः समितिसमरे अपनीतंअपहृतं चेलंवस्त्रं कुलिशभृत्इंद्रः अनुजीविदत्तंगंधर्वदत्तं वपुःअनुशोच्यशरीरंधिकृकृत्वा ॥ ५५ ॥ परांचिकर्तुंपश्चात्कर्तुं अनीशः अशक्तः ह्रियार्ताअमर्यःलज्जापीडिताअप्सरसः निमीलनाज्ञंअनिमिषत्वात्निमीलनासमर्थम्॥५६॥ संभृताभोगमुद्रासंपादिता नग्नावस्था स्थाणुःस्थिरः शकलाग्रंखंडाग्रं क्लृप्तंसंपादितं सुबलदुहितागांधारी पुरींहस्तिनापुरम् ॥ ५७ ॥

( गद्यम् ) तदनुहारिदंगणविशृंखलविश्रमितविजयशंखरवोनिजा
युधनिक्षेपरक्षिपुभूतकुटुंबेषुनवसमररुधिरांजलपानपरितृप्तिकि
लिकिलितमनुभवितुकामइवपुनरपिपितृवनमेत्यतरुनिहितशस्त्रसं
भारःपुरात्समायातेषुगुणेषुआवामेवरणाद्भुतदर्शनंप्रतिवांचतेइति
उपालब्धुमिवभूयोऽपिक्लैब्यसारथ्याभ्यांकृतानुषंजनःकुरुकुंजरो
भूमिंजयमेवंजगाद ॥ ९ ॥

हरितदिक् रवःशब्दः निक्षेपःगुप्तस्थापना रुधिरंरक्तं किलिकिलितपिशाचशब्दं कामःइच्छा पितृवनंश्मशानं तरुनिहितंशमीवृक्षस्थापितं उपालब्धुंमिवनिंदितुमिव क्लैब्यं षंढत्वं कृतं अनुषंजनं स्वीकारः यस्यसःकृतानुषंजनः कुरुकुंजरःविजयः सभूमिंजयंजगादउत्तरमुवाच ॥ ९ ॥

( पद्यम् ) कुमारकोशीकुरुकेशपाशंमुखेऽश्रुणोमार्जयपातमार्गम्॥
तूण्यासमंदोष्णिनिधेहिचापंराशेरुपर्यास्वरथपटानाम् ॥ ५८ ॥
बधानधैर्यंवदबंधुगोष्ठ्यामात्मानमेवारिरिजयस्यहेतुम् ॥ मानुःपि
तुर्वाधुरिमंत्रिणंवामातत्वगंधंममसूचयेति ॥ ५९ ॥

केशपाशंकोशीकुरुकेशान्बधानेतियावत् पातमार्गपातचिह्नं तूण्यासमंनिषंगेनसह दोःबाहुःपटःवस्त्रं उपर्यास्वउपरिनिषीद॥५८॥गोष्ठीसभा अरिःशत्रुःधुरिसमीपभागे मम

तत्त्वगंधंमासूचयमत्कीर्तिनसूचय मातत्वगंधं २ माअतत्त्वगंधं अस्मत्त्वायुष्मद्वाचकत्वं आत्मशब्देनसूचितम् ॥ ५९ ॥

( गद्यम् ) अथतथेत्यभ्युपगम्यक्षतजपंकारुणितनेमिरखैर्द्विषदौत्पातिककालचक्रैरिवपरिभ्रमद्भिश्चक्रैः संक्रीडनाशतांगेनपरिगच्छन्नग्रेसरगोघटाखुरपुटकुट्टनत्रुटितधरणीतलोच्चलितरजोभाराक्रमणविनम्रीकृतपक्ष्मणापिकुरुभटजैत्रोयमितिविस्मयबलविस्तारितेनचक्षुषाल्हादृन्नलामप्यनादृत्यमुहुर्मुहुरापिबद्भिः पौरैरनुगम्यमानोयमुत्तरोनलकूबरोऽलकामिवस्वांपुरींप्रविश्यपरस्परोपमर्दनद्विगुणितबंदिवादित्रघोषेणमहताराजमार्गेणपितुःसभामभिजगाम ॥ १० ॥

क्षतजपंकःरक्तकर्दमः अरुणितंरक्तवर्णं द्विपदौत्पातिककालचक्रंशत्रूत्पातसूचकंज्वलत्काष्ठचक्रं शतांगःरथः गोघटायाःधेनुसंघस्य कुट्टनत्रुटितंआघातक्षतं रजःधूलिः भटजैत्रःवीरजेता नलकूबरःकुबेरपुत्रः अलकाकुबेरनगरी उपमर्दनंजयः पिताविराटराजा॥

( पद्यम् ) तान्येवपुष्पाणितएवधूपास्तेकेतवस्तेमणितोरणांकाः॥ पुत्रस्यतस्यापिपुरोपचाराबभूवुरग्रेजयिनःपितुर्ये ॥ ६० ॥ तदावनींद्रःप्रणतंकुमारमस्रैर्द्वयैरार्द्रतनुत्रमाजौ ॥ दोर्भ्यांद्विषद्वंधनखेदभाग्भ्यामपिप्रमोदाद्दृढमालिलिंग ॥ ६१ ॥ पार्थोप्युपानीयरथस्यगर्भात्पार्श्वस्थितायैपितुरुत्तरायै ॥ व्यादत्तपट्टांशुकमात्मसूनोःपाणिगृहार्थंकिलमंत्रवासः ॥ ६२॥ आचेटमन्यमखिलंपटमासुदेष्णमंतःपुरायसविभज्यददौकुमारः ॥ सैरंध्रयेनतुमलीमसवाससेऽपिसंचिंत्यतांबहुपटप्रभवावलग्नाम् ॥ ६३ ॥ विनार्जुनंपांडुसुतान्समाजेविस्मित्यविस्मित्यविलोकमानम् ॥ जिघ्रन्विराटश्चिकुरेपुसूनुंजगादविन्यस्यनिजासनार्धे ॥६४ ॥ निपात्यपार्थान्कांतारेनिःसपत्नत्वमीयुषाम् ॥ कंठेगलूयसेवत्सकौरवाणांत्वमेककः ॥ ६५ ॥ नव्यंगुरुंभुविनमार्गितुमुत्तरायाःसंरक्ष्यसूतमपिताद्दृशिसंप्रहारे ॥ जन्मर्क्षजीवदिनयोगफलंचदातुंकन्यासुवत्सकथमेत्यकुरून्व्यजेष्ठाः ॥ ३६ ॥

केतुःध्वजः तोरणांकंद्वारोपरिस्थापितंमंगलचिह्नं जयीपितासुशर्मजेताविराटः ॥

॥ ६० ॥ अवनींद्रःराजाविराटः अस्रंरक्तं २ नेत्राश्रु तनुत्रंकवचं आजिःयुद्धं दोः-भुजः द्विषत्सुशर्मा प्रमोदःहर्षः ॥ ६१ ॥ गर्भःमध्यभागः पट्टांशुकंप्यादत्तपट्टवस्त्रंदत्तवान् आत्मसूनोःपाणिग्रहार्थंअभिमन्युविवाहार्थं मंत्रवासःवाग्दानवस्त्रम् ॥ ६२ ॥ आचेटंसेवकपर्यंतं आसुदेष्णंसुदेष्णापर्यंतं पटःवस्त्रं कुमारःउत्तरः मलीमसंवासःमलिनं वस्त्रं बहुपटप्रभवावलग्नंबहुवस्त्रोत्पत्तिकरकटिभागः ॥ ६३ ॥ समाजःसभा विस्मित्य आश्चर्यंकृत्वा सूनुंविन्यस्य उत्तरंगृहीत्वा चिकुरःकेशः ॥ ६४ ॥ पार्थान्पांडवान् कांतारंअरण्यं निःसपत्नवं शत्रुराहित्यं कंठेगलूयसे कंठरोगवत्पीडितोजातइत्यर्थः ॥ ६५ ॥ मार्गितुंशोधितुं संप्रहारंयुद्धं जन्मर्क्षजीवदिनयोगफलंजन्मनक्षत्रगुरुवारयोः योगफलं वस्त्रप्राप्तिं कुरूनृप्यजेष्ठाःकौरवान्विजितवानसि ॥ ६६ ॥

( गद्यम् ) इतिप्रमोदचंचलेनपाणिनापरामृश्यचरमांगंपुनःपुनरनुयुंजानायतातायसौदेष्णेयोऽपित्रपाप्रवाहाभिमुखमवस्थातुमपारयन्निवविवलितकंधरोगिरमेवंविज्ञापयामास ॥ ११ ॥

प्रमोदःहर्षः पाणिःहस्तः परामृश्यस्पर्शंकृत्वा चरमांगंशरीरपृष्ठभागः अनुयुंजनंपृच्छा सौदेष्णेयःसुदेष्णापुत्रःउत्तरः त्रपालज्जा अपारयन्अशक्नुयन् विवलितंतिर्यक्कृतं कंधरा ग्रीवा गीःभाषणम् ॥ ११ ॥

( पद्यम् ) रोदःप्रसारिध्वनितंमयाचक्रेधुरिद्विषाम् ॥ यावान्मेवेगसन्नाहस्तावांस्तत्रप्रदर्शितः ॥ ६७ ॥ अहमेकोरणेतस्मिन्नपरैरननुष्ठिताम् ॥ रथिसारथिपत्तित्वेरचयामिस्मकर्तृताम् ॥ ६८ ॥

रोदःप्रसारिध्वनितं आकाशपृथिवीव्यापकसिंहनादः २ रोदनेनप्रसारिवशब्दः द्विषांधुरिशत्रूणांअग्रभागे वेगसन्नाहःयुद्धसज्जता २ पलायनसज्जता ॥ ६७ ॥ अपरैरननुष्ठितां अन्यैरनाचरितां पत्तित्वकर्तृतांरचयामिस्मपलायनंकृतवानस्मि ॥ ६८ ॥

( अथेदेवकिंबहुना ) ( पद्यम् ) अपार्थकर्ममेनासीदाहवेयदरातिषु ॥ पुरोविजयमादायपुनरागामिमापुरीम् ॥ ६९ ॥

अपार्थंपार्थरहितं २ व्यर्थं आहवंयुद्धं अरातिःशत्रुः विजयःजयः २ पार्थः॥६९॥

(गद्यम् ) इतितादृशींतस्यवचनचातुरीमाकर्ण्यदुरोदरप्रहारवेदनामप्यविगणय्यतरलितेनाशिरसाश्लाघमानेयतींद्रेवासरविरामशंसिनंयामशंखरवमाकर्ण्ययथोचितसभास्तारान्विसृज्यमेदिनीपतिर्मौदेनसुदेष्णाप्रासादमाससाद ॥ १२ ॥

वचनचातुरींभाषणकौशल्यं दुरोदरप्रहारःद्यूतपाशकताडनं तरलंचंचलं यतींद्रः कंकः धर्मराजा वासरविरामशंसिनंदिनांतसूचकं यामःप्रहरः सभास्तारःसभासदः मेदिनीपतिःविराटः मोदःहर्षः प्रासादःअंतःपुरं आससादप्रविवेश ॥ १२ ॥

(प०)सुतावलोकेननरेंद्रसुभ्रुवश्च्युताखिलाश्रुष्वपिसोदरात्ययात् ॥
विलोचनांगेष्वपिदृष्टिसंपदेविभांडकापत्यविजृंभणायितम् ॥७०॥

नरेंद्रसुभ्रूःसुदेष्णा च्युतंगलितं सोदरात्ययःबंधुनाशः विलोचनांगंनेत्रावयवः नेत्ररूपांगदेशः विभांडकापत्यंऋष्यशृंगऋषिः विजृंभणायितंआचरितम् ॥ ७० ॥

(गद्यम्) अन्येद्युरात्मजमुखादमीषांयाथात्म्यमवगम्यचकित चकितंकुटुंबेनसहसचिवान्पुरस्कृत्यसभामागतोविराटोनामांतरसं निधानादिवहायनमेकैकमनुसर्पद्भिःस्वैःस्वैर्वर्षैःप्रत्यासन्नेनसोद र्यजनेनसमुपास्यमानस्ययुधिष्ठिरस्यचरणनलिनयोःपलितंभावुके नमौलिनामरालयुवकेलिमुल्लासयांचकार ॥ १३ ॥

आत्मजःउत्तरः अमीषांकंकादीनां याथात्म्यमवगम्यसत्यस्वरूपंज्ञात्वा संनिधानंसहवासं हायनंवर्षं अनुसर्पद्भिःदूरंगच्छद्भिः प्रत्यासन्नंसमीपप्राप्तं समुपास्यसंसेव्य पलितंभावुकमौलिःजराशुक्लशीर्षः मरालयुवकेलिमुल्लासयांचकारतरुणहंसक्रीडांप्रकटयामास १३

(पद्यम्) तदानुनोदस्मितपांडुरिम्णातपःसुतोऽक्षक्षतिहेतुमुग्रम् ॥
महेंद्रसूनोर्दृशिशोणिमानमात्स्यस्यचित्तेऽपिचनीलिमानम् ॥
॥७१॥ मात्स्यस्ततःप्रमुदितोमहितेऽह्निकन्यांशौरौसमेयुषिसहा खिलबंधुवर्गैः ॥ मृद्वींशिरीषकुसुमादपिपार्थसूनोःसीमाशिलाम तनुतप्रथमाश्रमस्य ॥ ७२ ॥ तथोपचारंविदधेसुदेष्णाजानिःसं पार्थेषुसमाधवेषु ॥ तमेवगांधारपतिंयथातेजानीयुरत्यंतकृतोप कारम् ॥ ७३ ॥ अथोल्लास्यकुरूनेतान्हरिर्मात्स्यपुराद्ययौ ॥
मंदारप्रमुखान्वृक्षान्वसंतइवनंदनात् ॥ ७४ ॥

इत्यनंतभट्टकृतौश्रीमतिचंपूभारतेसप्तमस्तबकःसमाप्तः ।

पांडुरिमा शुभ्रता स्मितंहास्यं तपःसुतःयुधिष्ठिरः अक्षक्षतिःपाशकव्रणः महेंद्रसूनुः अर्जुनः शोणिमानंआरक्तत्वं मात्स्यःविराटः ॥ ७१ ॥ महितेह्निमंगलदिने कन्या-उत्तरा शौरिःश्रीकृष्णः समेयिवान्प्राप्तः पार्थसूनुःअभिमन्युः प्रथमाश्रमस्यसीमाशिलामतनुतविवाहंतंचकारेत्यर्थः ॥ ७२ ॥ सुदेष्णाजानिःविराटभूपतिः माधवःश्रीकृष्णः

पार्थःअर्जुनः गांधारपतिःशकुनिः ॥ ७३ ॥ कुरून्पांडवान् उल्लास्यहर्षयित्वा मंदारः कल्पवृक्षः नंदनंइंद्रोद्यानं मात्स्यपुरंविराटनगरम् ॥ ७४ ॥

सप्तमस्तवकःसमाप्तः।

## अथाष्टमस्तवकः॥

तावत्पांडुसुतेनकौतुकवताकर्तुंप्रकोष्ठांगणेज्यामेकां युधिनर्तकीं
भुजभुविस्थास्नुंचिरस्यापराम् ॥ आहूताक्षितिपाविराटनगरीसै
न्यद्विपैरुन्मदैःप्रावृड्वासरसंचयाइवघनैःप्रापुर्महाद्रेस्तटीम् ॥ १ ॥
सेनानांयावतीःपार्थोयुद्धायाक्षौहिणीर्दधौ ॥ धार्तराष्ट्रश्चतत्त्रभि
स्तावतीरधिकाः पुनः ॥ २ ॥ उक्ताध्ववृत्तांतमुवाचशल्यंपार्थस्त
तोभानुसुतस्ययुद्धे ॥ आक्षेपवाचाहृदयंवितक्षन्नन्वर्थतामाचर
मातुलेति ॥ ३ ॥

प्रकोष्ठांगणंकूर्परभागः ज्याधनुर्गुणः स्थास्नुंकर्तुंस्थिरीकर्तुं अपराज्यापृथ्वी क्षितिः पृथ्वी उन्मदःमदस्रावी द्विपःहस्ती प्रावृड्वासरःवर्षाऋतुदिनं अद्रिःपर्वतः ॥ १ ॥ यावत्संख्याकाःयावतीः धार्तराष्ट्रःदुर्योधनः तावत्संख्याकाःतावतीः ॥ २ ॥ अध्वा मार्गः पार्थःयुधिष्ठिरः भानुसुतःकर्णः आक्षेपवाक्तेजोवधः वितक्षन्भिंदन् अन्वर्थता शल्यनामान्वर्थता शल्यंलोहमयसूक्ष्माग्रम् ॥ ३ ॥

( गद्यम् ) अथभागिनेयेषुवत्सलतयासत्यसंगरस्तथेतिप्रतिश्रुत्य॥१॥

भागिनेयःभगिनीपुत्रः वत्सलताप्रीतिः सत्यसंगरःसत्यवचनपालकः ॥ १ ॥

( पद्यम् ) भद्रायतवमांविद्धिनिद्रामुंचमितिब्रुवन् ॥ मद्राधि
पोययौपार्थात्सद्राग्दुर्योधनांतिकम् ॥ ४ ॥ ततः ॥ साह्याययु
द्धेसरसीरुहाक्षंवरीतुकामोवलवैरिसूनुः॥ अजातशत्रोरवतंसयन्
गांतुंगध्वजांद्वारवतीमयासीत् ॥ ५ ॥

भद्रंकल्याणं निद्रामुंचंविद्धिजागरूकंजानीहि मद्राधिपःशल्यः द्राक्शीघ्रं अंतिकं समीपम् ॥ ४ ॥ सरसीरुहाक्षःकमलनेत्रः श्रीकृष्णः कामःइच्छा वलवैरीइंद्रः अजातशत्रुःधर्मराजा गामवतंसयन्वचनादरंकुर्वन् तुंगंउच्चं द्वारवतीद्वारका ॥ ५ ॥

( गद्यम् ) तत्रचिरदृष्टस्यकुंजरकुमारकोमलचंक्रमविलासस्यत
स्यविलोकनायवीथीपुवीथीपुजनाःसंघीवभूवुः ॥ २ ॥

चिरदृष्टःबहुकालेनदृष्टः कुंजरःहस्ती चंक्रमंगमनं वीथीराजमार्गः संघीबभूवुःसमुद्विग्नाः ॥ २ ॥

(पद्यम्) हेतुंसुभद्राहरणेतदीयांयतित्वबुद्धिंहृदिकुर्वतीनाम् ॥ गवाक्षमार्गैःकृतवीक्षणानांस्त्रीणांमुखेंदोःस्मितचंद्रिकाऽभूत् ॥६॥ दौवारिकैस्तत्रसदत्तमार्गोनिद्रायमाणस्यनिकेतमध्ये ॥ शौरेरुपायाच्चरणोपधानंतद्गर्भसिंधुच्युतकूर्मशोभम् ॥ ७ ॥ यस्याधिमौलिसविधेप्रथमंसमेत्यतिष्ठन्कुरूद्वहसुतोयुधिसाह्यमर्थी ॥ रेजेपरीक्षितुमिवोत्सुकतांदधानस्तत्कुंतलेनिजमनस्यपिवक्रिमाणम् ॥ ॥ ८ ॥ निमीलनालिंगितनेत्रयुग्मोनिष्पंददेहोनितरांबभौयः ॥ स्वध्यानशैलीसुखमास्थितानांतपस्विनांसंघमिवानुकुर्वन् ॥ ९ ॥ देवीकुचाद्रिरुरुचेघुसृणेनक्लृप्तःसक्तःकपोलफलकेमकरोयदीये ॥ मीनध्वजारिजयिनोविजयस्यसिद्धिंविश्राणयेतिनिगदन्निवकर्णमूले ॥ १० ॥ पाश्चात्यपाथोनिधिपार्श्वभागेसंपूर्यकुक्षिंसलिलस्य पूरैः ॥ स्वजातियूथाच्च्युतिमाश्रितस्यक्रमंदधौयोघनशावकस्य ॥ ११ ॥

हेतुःइच्छा यतित्वंयतिवेषः हृदिमनसि कृतवीक्षणंकृतावलोकनं मुखेंदोःस्मितचंद्रिकाभूत्हास्यंचक्रुरितिभावः ॥ ६ ॥ दौवारिकःद्वारपालः निकेतंगृहं शौरिःश्रीकृष्णः उपधानंउपबर्ह तद्गर्भसिंधुः चरणसंभूतानदीगंगा च्युतंभ्रष्टम् ॥ ७ ॥ अधिमौलिसविधेशीर्षसमीपभागे कुरूद्वहसुतःसुयोधनः अर्थीयाचकः कुंतलःकेशः वक्रिमाणंरेजे वक्रत्वंशुशुभे ॥ ८ ॥ नेत्रयुग्मंनेत्रद्वयं नितरांअतिशयं शैलीरीतिः सुखमास्थितानांसुखंप्राप्नुवतां तपस्वीयोगी ॥ ९ ॥ देवीरुक्मिणी घुसृणं ( म० भा० केशर ) क्लृप्तंविरचितं मीनध्वजःमदनः मीनध्वजारिःशंकरः निगदन्निवकथयन्निव ॥ १० ॥ पाश्चात्यपाथोनिधिःपश्चिमसमुद्रः स्वजातियूथःमेघसंघः च्युतिःभ्रंशः घनशावकस्यक्रमंदधौबालमेघवद्रेजेइतिभावत् ॥ ११ ॥

(ग० ) ततःप्रबुद्धेनतेनदेवेनतयोःप्रथमागमनदर्शनाभ्यांकृत्यसाम्यंहृदिकृत्यरणांगणेगृहीतहेतीनांनवकोटिसंख्यावतांगोपकुमाराणांकदंबेनकेनचिदंशेनकेवलसान्निधानेनस्वेनापिकेनचिदंशेनपरिपूरितमनोरथौसुयोधनधनंजयौस्वावासकटकभुवमासेदतुः ॥ ३ ॥

प्रबुद्धःजागृरूकः कृत्यंकर्तव्यं गृहीतहेतिःशस्त्रधारी कदंबःसमूहः आवासकटकभूः सेनानिवासस्थानं हृदिकृत्यनिश्चयंकृत्वा सन्निधानंसमीपस्थानम् ॥ ३ ॥

(पद्यम्) सेनागजेंद्रमदसौरभवीचिवेगनिर्धूतगोग्रहणसंयुगपूतिगंधम् ॥ संवीक्ष्यमत्स्यवसुधेंद्रपुरोपकंठंशौरिश्चशक्रतनयश्चननंदतुस्तौ ॥ १२ ॥ दृष्ट्वानिवृत्त्यवदतोयुधिपांडवानामुत्साहमुग्रमथसंजयतोनिशम्य ॥ वातैर्विनापिमणिसौधतलेनिवासंकुर्वन्नकंपतभृशंकुरुवंशकेतुः ॥ १३ ॥ पांडोःसुतायवसुधांप्रविभज्यदित्सोःप्रज्ञादृशोरहसिसांत्वपथोपदिष्टम् ॥ दुर्योधनस्तुवचनंनचकारकर्णेकर्णेस्वमेववचनंमधुरंचकार ॥ १४ ॥

गजेंद्रमदसौरभःहस्तिमदसुगंधः वीचिःलहरी निर्धूतंपूतिगंधंदरीकृतदुर्गंधं संयुगं युद्धं वसुधापृथ्वी उपकंठंसमीपं तौकृष्णार्जुनौ ॥ १२ ॥ संजयःश्रीव्यासशिष्यः उग्रंभीषणं कुरुवंशकेतुःधृतराष्ट्रः भृशंअतिशयं मणिसौधतलंरत्नमयसौधाधोभागः ॥ ॥ १३ ॥ वसुधापृथ्वी दित्सुःदातुमिच्छुः प्रज्ञादृक्अंधः धृतराष्ट्रः सांत्वपथोपदिष्टं सामवचनं कर्णेनचकारनाशृणोत् कर्णेमधुरवचनंचकारकर्णेनसहमंत्रंचकार ॥१४ ॥

(गद्यम्) तदनुदिनेदिनेसमुपचीयमाननानाविधनरपतिकुलचतुरंगबलकलकलानप्यभिभवद्भिःकंककाकसालावृकजंबूककदंबकरटितैःकटूकृतनिकटयोःकुरुविराटपुटभेदनयोःकतिपयदिनैरेवपंचखलुवीराःपौरवसाम्राज्यलक्ष्मीमभिवीक्ष्यस्थातुमवशिष्यैरन्निति किंवदंत्यांप्रवहंत्यांसत्यांक्षितिपतिः क्षीणधैर्योदीनाक्षरःसहोदरसमक्षंसरोरुहाक्षमेवंव्याचचक्षे ॥ ४ ॥

समुपचीयमानंनानाजनपदेभ्यआगतं नरपतिकुलंराजवंशः बलंसैन्यं अभिभवत्पराभवंकरिष्यत् कंकःगृध्रः सालावृकःश्वा करटितंविकृतध्वनिः निकटेसमीपे पुटभेदनंपुरं कतिपयदिनैःअल्पावकाशेनेत्यर्थः पौरवःपुरुवंशोत्पन्नः वीक्ष्यअवलोक्य किंवदंतीजनवार्ताक्षितिपतिःराजा सहोदरःबंधुः सरोरुहाक्षंव्याचचक्षे श्रीकृष्णमुवाच ॥ ४ ॥

(पद्यम) एतावतोबंधुजनान्निहत्यकिंलब्धयाकृष्णभुवाऽधुनामे॥ सकंदमूलानिसरिन्निर्झराणिनोकिंममाद्यापिवनानितानि ॥ १५ ॥ संतापकालेसतिघर्ममंभःपतत्यधस्तादितिहिप्रसिद्धिः ॥ जिव्हांविहायाद्यजलंमुहुर्मेदृष्टिंसमारोहतिचित्रमेतत् ॥ १६ ॥ गलत्स

मीरैर्गजकर्णतालैर्नटत्पटेभ्योनगरध्वजेभ्यः ॥ तनूरिदानींममतां
तकांतिराकंपनाम्नायमसावधीते ॥ १७ ॥ आनंदयित्रीमखिल
स्यजंतोरंतःक्षमांस्वामपहायमोहात् ॥ बंधुप्रणाशाद्बहुदुःखदो
ग्र्यैवहिःक्षमायैस्पृहयामिधिङ्माम् ॥ १८ ॥ गतिर्नमेन्यागरुड
ध्वजत्वयाविनाऽधुनास्याविपदोविधूतये ॥ वनानलार्चिर्वलयावृ
तिस्थितेर्वलाहकात्किंशरणंमृगीशिशोः ॥ १९ ॥ बहुभिःकिमि
हापरैःप्रलापैर्बहिरंतश्चवदामितुल्यभावः ॥ कुकुराधिपबंधुभिर्म
मस्वैःकुरुसंधिंकुरुवंशभूतयेत्वम् ॥ २० ॥ इतिब्रुवंतंयदुनाय
कोब्रवीद्युधिष्ठिरंयोगिविचिंत्यवैभवः ॥ महीपतेयद्भवतासमीरि
तंमहात्मनांयुक्तमिदंभवादृशाम् ॥ २१ ॥ सरिदात्मजशासि
तोऽपिसन्सदुरध्वंनजहातिकौरवः ॥ इतिचिंतयतोममाधुनाहृदि
सिद्धिःखलुसंशयेशया ॥ २२ ॥ प्रयतेतथापिनृपसंधिसिद्धये
प्रयतेंद्रियैर्भुविपणायितस्यते ॥ फलतिक्वचिन्नफलतिक्वचित्क्रि
याप्रविधातुरेपनहिदोषसीकरः ॥ २३ ॥ इत्थंनिगद्यमधुरस्मित
मीक्षमाणोभीमस्यवक्त्रमपिदारुकनीतमग्रे ॥ आरुह्यरत्नरथमा
श्रितरक्षलीलाकूलंकषोहरिरगात्कुरुराजधानीम् ॥ २४ ॥

एतावंतःईदृक्परिमाणाः ये अत्रमिलिताइत्यर्थः लब्धाप्राप्ता निर्झरःपर्वतजलप्रवाहः १५ संतापकालःग्रीष्मर्तुः अंभःउदकं विहायत्यक्त्वा जलंमेदर्डिसमारोहविममनेत्रेअश्रु पूर्णेभवतःचित्रंआश्चर्यम् १६।गलत्समीरःगच्छद्वायुः कर्णतालंकर्णएवकालसूचकंवाद्यं वां- तंम्लानं आकंपनाम्नायमसावधीतेभीत्याकंपआविशतीत्यर्थः।१७। जंतुःप्राणी अंतःक्षमा अपराधसहिष्णुताशक्तिः मोहादपहायअज्ञानात्त्यक्त्वा वहिःक्षमांस्पृहयामिभूमिमि- च्छामि॥१८॥ विपदोविधूतिःसंकटनिवारणं वनानलार्चिःदावाग्निज्वाला वलयावृतिः मंडलावरणं वलाहकःमेघः मृगीशिशुःहरिणीवालः ॥ १९ ॥ अपरप्रलापःअन्यभाषणं अंतःअंतकरणे तुल्यभावःसमानत्वं कुकुरःयादवः संधिःसाम वंशभूतिःवंशरक्षणम्॥२०॥ विचिंत्यंचिंतितुंयोग्यं भवतासमीरितंत्वयोक्तं भवादृशःभवत्सदृशाः महात्माउदारबुद्धिः ॥ २१ ॥ सरिदात्मजःगंगापुत्रःभीष्मः कौरवःदुरध्वंनजहातिदुर्योधनःकुमार्गंनत्यजति सिद्धिःकामयत्नसिद्धिः संशयेशयासंशययुक्ता ॥२२॥ प्रयतेंद्रियःजितेंद्रियः पणापितः

संस्तुतः दोषसीकरःदोषलेशः ॥ २३ ॥ इत्थंनिगद्यएवमुक्त्वा दारुकःश्रीकृष्णसारथिः अग्रेनीतंअग्रभागेस्थापितं आश्रितरक्षलीलाकूलंकषःभक्तसंरक्षणक्रियावत्परः ॥२४॥

तमसांकुलानिसकलानिदर्शनेसतिसद्यएवशमयन्महामहाः ॥ स विवेशतत्रविदुरस्यमंदिरंचरमाद्रिकंदरमभीषुमानपि॥२५॥ "अवलोकयन्नथपुरप्रतोलिकामनिमेषपौरजनतानिरंतराम् ॥ मृदुराननतेषुमृदुरासदःपरैर्यदुराजएषविदुरालयंययौ ॥१॥" कंसवैरिणि समीयुषिगेहंक्षत्तुरातिशयितंमदनृत्तम् ॥ संक्षिपांगमयतिस्मपुरारेः सांध्यतांडवविधेरवलेपम् ॥ २६ ॥ विरतेरुचितंविशुद्धमह्नोविधिमाधायपितृष्वसुःसकाशे ॥ वसतोऽस्यनिशैवसासमामोद्वसुदेवात्मभुवःकथानतास्ताः ॥ २७ ॥

तमःअज्ञानं महामहाःमहातेजाः चरमाद्रिःअस्ताचलः अभीषुमान्सूर्यः ॥ २५ ॥ (प्रतोलिकाराजमार्गः) निरंतरंपूर्णं आनतःनम्रः दुरासदंदुष्प्रापं परःशत्रुः आलयं गृहम् ॥ १॥ क्षत्ताविदुरः पितृष्वसाकुंती तांडवविधिरवलेपःतांडवनृत्यस्यगर्वः पुरारिः शंकरः ॥ २६ ॥ वसुदेवात्मभूःश्रीकृष्णः अह्नोविधिमाधायसंध्यानुष्ठानंकृत्वा॥२७॥

(गद्यम्) "अथविगतायांरजन्यामिवपृथासुतकथायांदीनद्युतिषुतारकाकलापेष्विवप्रदीपेषुजृंभितेषुशकुंतिभिरिवबंदिभिःकलकलेपुविकसितेषुनलिनेष्विवनयनेषूत्पलादिवमहोत्पलंराजनगराद्विदुरमंदिरमागतेषुचंचरीकेष्विवसारिकेषुविरोचनइवकमलविलोचनःप्राचीनगिरेरिवपर्यंकादुत्तस्थौ ॥ १ ॥"

रजनीरात्रिः पृथासुतःयुधिष्ठिरः द्युतिःकांतिः शकुंतिःपक्षिः उत्पलंचंद्रविकासिकमलं महोत्पलंसूर्यविकासिकमलं चंचरीकःभ्रमरः सारिकःदूतः विरोचनःसूर्यः कमलविलोचनःश्रीकृष्णः पर्यंकःमंचकः ॥ १ ॥

(गद्यम्) अन्येद्युरखिलमहरारंभकृत्यमवसाय्यबालातपेनबलाहकइवघुसृणमसृणितेनपटीरपंकेनचर्चितकलेवरःपंकेरुहशंकिनीभिरंचलालिखितराजहंसराजिभिरवकृष्यमाणेनेवपीतांबरभागेनपरिचुंबितप्रपदपल्लवोनिजोदरांतरानवकाशतयाबहिर्निर्गतैर्जगदंडशिशुभिरिवमुक्ताफलैःप्रत्युसमेखलामुखभागोवर्षाहेमंतसमययोरप्यविनश्वरंलक्ष्मीलीलाकमलमुपश्लोकयितुमागतेनदिन

मणिबिंबेनेवकौस्तुभेनदेदीप्यमानभुजांतरोदनुजपरिषदौत्पाति
करक्तपरिवेषेणेवपद्मरागकेयूरेणपरिमंडितबाहुदंडोद्वारिनिर्गत्यसु
योधनदुर्वासितायाःनगरभुवःस्पर्शनंपरिहर्तुमिवसविनयमुपागते
नदारुकेणसंयोजितमणिपादुकःकिंचिदेवनमितपूर्वकायेणाविदुरे
णवितीर्यमाणहस्तावलंबोगुरुकृपमुखैर्ब्रह्मसंघैःप्रतिपाद्यमानांज
याशिषंशिरसाप्रतिगृह्णानःकुशलप्रश्नकोरकितमोदाभ्यांकुरुराज
देवव्रताभ्यांसदनाभिगमनायसंप्रार्थ्यमानश्चिरमवसरंप्रतिपाल्य
तामक्षौहिणीपतिनामंजलिवनजावलिमवलोकनेनसंभावयमानो
मुकुंदोबंदिवृंदपरिपठ्यमानकंसादिवधविरुदावलिप्रबंधबंधुरेणमं
गलकुसुमगंधसंपदंधीकृतपुष्पंधयझंकारसहचरवादित्रघोषेणमेघ
वर्जमुन्मिषंतीभिःसौदामिनीभिरीवकनकवेत्रलताभिराकुलितेन
महताराजपथेनसुयोधनादिभिश्चतुर्भिरध्यासितपूर्वसभामंडपंशनैः
शनैरवजगाहे ॥ ५ ॥

अहरारंभःप्रातःकालः अवसाप्यसमाप्य बालातपःबालसूर्यः बलाहकःमेघः पंके-रुहंकमलं अंचलःपीतांबरः राजिःपंक्तिः प्रपदपल्लवःपल्लवतुल्यः प्रपदंपादाग्रभागोयस्यसः जगदंडशिशुःब्रह्मांडबालः प्रत्युप्तंखचितं मेखलाकटिसूत्रं अविनश्वरलक्ष्मीःचिरशोभा उपश्लोकयितुंस्तुवीतुं दिङ्मणिःसूर्यः कौस्तुभःरत्नविशेषः दनुजपरिषदौत्पातिकःदैत्य-सभोत्पातः द्वारिनिर्गत्यअग्रभागेगत्वा दुर्वासःदुःस्थितिः पूर्वकायःकायपूर्वभागः कायः शरीरं हस्तावलंबःहस्तस्वीकृतिः प्रतिपाद्यमानंदत्तं जयाशिषंविजयाशीर्वादं कोरकितं प्राप्तं मोदःहर्षः कुरुराजाधृतराष्ट्रः देवव्रतःभीष्मः अवसरंप्रतिपालयंन्तःसमयंप्रतीक्षमा-णाःवनजावलिःकमलपंक्तिः मुकुंदःश्रीकृष्णः बंदीःस्तुतिपाठक वृंदंसंघः विरुदावलिःकृ-त्यपरंपरा बंधुरःव्यग्रः अंधीकृतपुष्पंधयःमत्तभ्रमरः वादित्रघोषःभेरीनादः उन्मिषंतीप्र-काशमाना सौदामिनीविद्युत् कनकवेत्रंसुवर्णदंडः अध्यासितःअधिष्ठितः शनैःशनैरवज-गाहेमंदंमदंप्रविवेश ॥ ५ ॥

(पद्यम्) तत्रातितुंगेतरसोपनीतेरत्नासनेऽयंरचितोपवेशः ॥ पुरो
हितैरग्रभुविप्रदत्तांपूजामुपादत्तपुमान्पुराणः ॥ २८ ॥ सभांतरे
तत्रसमग्रकांतिंसंवीक्ष्यसंवीक्ष्यसरोरुहाक्षम् ॥ नरेंद्रवर्ज्यैनगरीज
नेपुनकस्यवाभूज्जयनप्रमोदः॥२९॥ भद्रासनादवनतंपदपल्लवाग्रं

संवाहयत्युपगतेविदुरेदयार्द्रः॥ सामाजिकेवुधजनेसतिदत्तकर्णेप्र
ज्ञादृशंगिरमभाषतपद्मनाभः॥३०॥ अल्पैरहोभिरधियुद्धमवेक्ष्य
नंक्ष्यच्चांद्रकुलंतवसुतैःसहपांडवानाम् ॥ संधिंविधातुमधुनासम
येविधेयंप्राप्तोऽहमस्मिभरतर्षभतेसकाशम् ॥३१॥ शतेनसंधत्स्व
तनूभवानांकुंतीकुमारान्कुशलोदयाय ॥ कल्लोलजालेनकलिंद
जायागंगानरंगानिवगेयकीर्ते ॥ ३२ ॥ पादारविंदेप्रणतीःशिरो
भिः शतंशतंसादरमर्पयंतः॥पांडोःकुमाराश्चभवंतमेनंविज्ञापयंति
स्मविनीतपूर्वम् ॥३३॥ जातावनेवयममीभवदंकभूमौसंवर्धिताः
शिरसिशासनमादधानाः॥निस्तीर्णसंगरपयोनिधयस्त्वयाद्यस्या
प्यायथांशमवनेरवनेवनेवा ॥ ३४ ॥ बाल्येवनांतजनुषांममपांड
वानामेकाऽपिरक्षणविधौनवभूवधात्री ॥ इत्येवशोकमनिशंहृ
दयेदधानस्तस्यास्तुनार्धमपिसंप्रतिदित्ससित्वम् ॥ ३५ ॥ इत्थं
ब्रुवाणंयदुवीरमेनंनिश्वस्यदीर्घंनृपतिर्बभाषे॥ व्यरंसिषंव्यध्वममुं
विमुंचविमुंचवत्सेत्यनुशास्यशौरे ॥३६॥ मधुमथननिमीलितामु
नींद्रेममजनीखलुपुत्रवत्सलासा ॥ मुखमहमनवेक्ष्यमूर्खसूनोर्मु
दमधिकामधुनाययादधामि ॥ ३७ ॥ स्वयमपिनविबुध्यतेसुतोऽ
यंसुमतिजनस्यशृणोतिनापिवाचम् ॥ कुरुकुलकुशलांकुराभिवृ
द्ध्यैगुणगणवारिनिधेगतिस्त्वमेव ॥ ३८ ॥

तुंगंउच्चं तरसावेगेन रचितोपवेशःउपविष्टः पुराणःपुमान् श्रीकृष्णः पूजामुपा-
दत्तसन्मानंस्वीचकार ॥ २८॥ सरोरुहाक्षःश्रीकृष्णः नरेंद्रःधृतराष्ट्रः नयनप्रमोदःने-
त्रानंदः ॥ २९ ॥ भद्रासनादवनतंसिंहासनाधोभागागवं संवाहनंमर्दनं दयार्द्रःदया-
शीलः प्रज्ञादृशंधृतराष्ट्रं पद्मनाभःगिरभातपत श्रीकृष्णउवाच ॥ ३० ॥ अहोभिःदि-
नैः चांद्रकुलंनंक्ष्यत्चंद्रवंशोनाशंप्राप्स्यत् तेसकाशंतवसमीपं संधिंविधातुंसामकर्तुम् ॥
॥३१॥ तनूभवाःपुत्राः कुशलोदयःकल्याणप्राप्तिः कल्लोलजालंमहालहरीसंघः कलिंद-
जायमुना ॥ ३२ ॥ अरविंदंकमलं भवंतंत्वां विनीतपूर्वंनम्रत्वपुरःसरम् ॥ ३३ ॥
भवदंकभूमिसंवर्धितंत्वदंकस्थलेवृद्धिंनीतं शासनमादधानःआज्ञांधारयन् संगरपयोनि-
धिः प्रतिज्ञासमुद्रः अंशःराज्यभागः अवनंरक्षणम् ॥ ३४ ॥ वनांतजनुःवनमध्यजन्म
विधिःकर्म धात्रीपृथ्वी २ उपमाता अर्धमपिनदित्ससिअर्धराज्यमपिनदातुमिच्छसि

अनिशंसर्वदा ॥३५॥ यदुवीरःश्रीकृष्णः व्यरंसिषंयत्नेनतूष्णीमभूवं व्यध्वःदुर्मार्गः इ-त्यनुशास्यइत्यनुज्ञाप्य शौरिःश्रीकृष्णः ॥ ३६ ॥ मधुमथनःश्रीकृष्णः मुनींद्रःव्यासः वत्सलास्नेहशीला मुत्हर्षः अनवेक्ष्यअदृष्ट्वा मूर्खसूनुःदुर्योधनः ॥ ३७ ॥ सुतोऽयंस्व-यमपिनविबुध्यतेदुर्योधनःकर्तव्याकर्तव्यंनजानाति वाचंउपदेशं कुशलांकुरःकल्याणो-दयः वारिनिधिःसमुद्रः ॥ ३८ ॥

( गद्यम् ) इतिसिद्धांतितवतिबद्धांजलौराजनिनिजासनार्धंनिवेशितकरतलतयाकिंचिदुन्नमितवामभुजशिखरेणगंडमंडलेनिमज्जितमकरकुंडलकंकटितटचलनकंदलितकांचनपटमर्मरमीषत्कंधरांविनिवर्त्य ॥ ६ ॥

सिद्धांतितवतिवंशरक्षणप्रकारसिद्धांतंकुर्वति अंजलिःहस्तपुटः राजनिधृतराष्ट्रे नि-वेशितःस्थापितः किंचिदुन्नमितंकिंचिदुच्चीकृतं गंडःकपोलः मंडलंमध्यभागः निमज्जितं जातं कंदलितःवलियुक्तः कांचनपटमर्मरःसुवर्णपटशब्दः कंधरांईषद्विनिवर्त्यग्रीवांकिं-चिद्वक्रीकृत्य ॥ ६ ॥

( पद्यम् ) कल्पसस्मितंरविभुवाकृतहस्ततालंदुःशासनेनधुरिदूषितसंधिपक्ष्म् ॥ कर्णोपकंठचलिताधरमातुलास्यंकौरव्यमाहकुरुसंसदिकंसवैरी ॥ ३९ ॥ पृथासुतेभ्यःपृथिवींतदीयांपुनर्दिशेतिब्रुवतोगुरोर्गाम् ॥ अश्रृण्वतःकौरवतेकथंवासंभूतिरेषाशशिनोन्ववाये ॥ ४० ॥ तत्तादृशंश्रृणुमहत्तववंशवृत्तंपूरुर्ददौनववयःपितुरात्तजीर्णः॥त्यक्त्वाश्रमंपितृमुदेतृणवद्वितीयंदेवव्रतोयमिहतिष्ठतिधीरधीरः ॥ ४१ ॥ कितवोक्तिभिःकिसल्तितस्यकर्णयोःसफलोभवेत्तवतदामनोरथः ॥ हरिनंदनेनयुधिपातितंधनुर्हरमस्तकान्नपुनरुन्ममज्जचेत् ॥ ४२ ॥ बंधूपदिष्टंनश्रृणोपिवत्ससंधानमस्मिन्नतवाद्यदोषः ॥ गंधर्वराजेनकृतंवनांतेबंधंपुनर्मुक्तवतांहितेपाम् ॥ ४३॥ वंशःकुरूणांमहितोयमस्मिन्धत्तेकलंकंचतुरौखलुद्वौ ॥ एकत्रकोटीरजनेरधीशःपरत्रमन्येपुरुषोभवांश्च ॥ ४४ ॥

कल्पसस्मितंकृतहास्यं रविभूःकर्णः उपकंठेसमीपे मातुलःशकुनिः कौरव्यमाहदुर्योधन-मुवाच संसत्सभा कंसवैरीश्रीकृष्णः ॥ ३९ ॥ पृथाकुंती दिशेतिदेहीति गुरुगापितु-र्वाणी संभूतिःजन्म शशिनोन्ववायेचंद्रवंशे ॥ ४० ॥ पूरुःनृपविशेषः नववयःतरुणत्वं पिताययातिः आत्तागृहीताजीर्णाजरा येन सः आत्तजीर्णः आश्रमंसंसारपाशं मुदेहर्षे

धीरधीरःमहान्धीरः देवव्रतःभीष्मः ॥ ४१ ॥ कितवोक्तिःकुटिलभाषणं किसलितः-किसलयसंजातः हरिःइंद्रः हरःशंकरः पुनरुन्ममज्जर्वाहिरागतमासीत् ॥ ४२ ॥ बंधुप-दिष्टंपुथिष्ठरोपकृतिः गंधर्वराजः चित्रसेनः वनांतेवनमध्ये ॥ ४३ ॥ महितःमान्यो-ऽस्ति चतुरःकुशलः कोटिःभागः रजनेरधीशःचंद्रः भवान्पुरुषः त्वंदुर्योधनः ॥ ४४ ॥

(गद्यम्)इतिप्रगदितवतिभगवतिक्रोधनःसुयोधनोऽपिगिरमिमामुज्जहार॥७॥अरेनंदनंदनकेवलंविराटतनयाश्रयलाभेनकृतकृत्यंमन्यानांकुंतीभुवांचबहुभिरक्षौहिणीपतिभिरनुक्षणमावेद्यमानांजलिधोरणीमवलोकितुमप्यलब्धावसराणामस्माकंचकिंवासंधानंकिंवातवदूतकृत्यंकिंवामयादेयमीदृग्विधंमुधायासमवधूयभवतायथागतंगंतव्यमिति ॥ ८ ॥

प्रगदितवान्भगवान्प्रगल्भंभाषणंकृतवान्श्रीकृष्णः गिरमुज्जहारभाषणमुवाच ॥ ॥ ७ ॥ नंदनंदनःगोपालपुत्रः विराटतनयःउत्तरः अक्षौहिणीपतिःसेनापतिः आवेद्य-मानांजलिःधोरणी निवेद्यमानाहस्तनमनरीतिः अवसरःप्रसंगः संधानंसंधिकृत्यं मुधाया-समवधूयनिष्फलयत्नंत्यक्त्वा ॥ ८ ॥

(पद्यम्)आकर्ण्यतच्चकितचेतसिनम्रवक्रेकर्णौपिधायनृपतौकरसंपुटाभ्याम्॥ मत्वातृणायमधुवैरिणमप्यलंघ्यंगोष्ठ्याजवेननिरगात्कुरुराजसूनुः ॥ ४५ ॥

आकर्ण्यश्रुत्वा चकितःभीतः कर्णौपिधाय कर्णद्वयंआच्छाद्य नृपतिःधृतराष्ट्रः तृणायमत्वातृणसमतुच्छंकृत्वा मधुवैरीश्रीकृष्णः गोष्ठीसभा ॥ ४५ ॥

(गद्यम्) तदनुदनुजारातिरेपरोपस्मितलेशरूपिताधरस्तादृशेनतस्यावलेपवचनेनभियाविहस्तान्मुदानिरस्तान्समस्तानपिसभास्तारान्पुरस्तान्निरीक्ष्यपुनरपिवाचमेवंव्याजहार ॥ ९ ॥

दनुजारातिःश्रीकृष्णः तस्यावलेपवचनंदुर्योधनस्यदर्पोक्तिः विहस्तःव्यग्रः मुदानि-रस्तःआनंदेनत्यक्तः सभास्तारःसभासदः वाचंव्याजहारवचनमुवाच ॥ ९ ॥

(पद्यम्)धराभुजाकिंतटिनीभुवाकिंमयाधुनाकिंवसताऽपिदूत्ये॥ पार्थायदातुंप्रभवेद्धरित्रींगदैवसागंधवहस्यसूनोः ॥ ४६ ॥ शौरेस्तांवाचमाकर्ण्यसाध्वसाक्रांतचेतसः ॥ जोषंभावंसभास्तारायुगपद्दधुरुत्तरम्॥४७॥ बहिःससंमंत्र्यबलावलिप्तैस्त्रिभिःसहायैर्दु-

तराष्ट्रसूनुः ।। गंधर्वराजेनकृतांदशांस्वांगदाग्रजन्मानमियेषनेतुम् ॥४८॥श्रुत्वातत्कुपितोहरिःस्वयमसावेकोऽपिसर्वात्मकस्ताराभिर्नवभिर्ग्रहैर्निविडितांशैलैर्वनैःसागरैः ॥ पेटीभूषणमंजरीमिवधृतांकुक्षौजगन्मंडलींजंघालामतनोत्सभाजिरजुषांदृक्पंक्तिघंटापथे ॥ ४९ ॥ तस्मिन्नंगुष्ठमात्रेनवइवमुकुरेवीक्ष्यसर्वंप्रपंचंविस्मेराःसिद्धविद्याधरसुरसदसःपुष्पवर्षंव्यमुंचन् ॥ सांद्रंमोहांधकारंसकलमुनिजनः संमदाश्रूणिभीष्मः क्षत्ताऽक्ष्णोःपक्ष्मपातंकरिपुरजनताप्रेमदुर्योधनेऽपि ॥ ५० ॥ अस्याट्टहासध्वनिरादिपुंसोविशृंखलंव्योम्निविजृंभमाणः।। दिक्पालसौधावलिजालकानामध्यापकत्वंबिभरांबभूव ॥ ५१ ॥ संस्तूयमानचरितस्यजनैस्त्रिलोकीसाधारणीकृतरूपस्यहरेःप्रसादात् ।। चक्षुष्मतांसमधिरुह्यधुरंमुहूर्तंभूयस्ततोप्यवततारसभूमिपालः ॥ ५२ ॥ ओजस्तवेदमुपसंहरमाधवेतिघुष्यत्सुसत्सुगुरुभीष्मपुरोगमेषु ॥ घोरंविहायनिमिषेणकुशेशयाक्षोगोपीदृशांकुतुकहेतुमवापरूपम् ॥५३॥

धराभुजादुर्योधनेन तटिनीभूःभीष्मः दूत्येदूतकर्मणि धरित्रीपृथ्वी गंधवहसूनुःभीमः ॥ ४६ ॥ साध्वसाक्रांतःभयाकुलः जोषंभावंमौनम् ॥ ४७ ॥ बलावलितःबलगर्वयुक्तः गदाग्रजन्माश्रीकृष्णः ॥ ४८ ॥ सर्वात्मकःहरिः सर्वव्यापकःश्रीकृष्णः तारा नक्षत्रं निविडितंयुक्तं शैलःपर्वतः जगन्मंडलींजंघालामतनोत्विश्वरूपंप्रकटयामासेत्यर्थः जंघालाजवेनगमनकर्त्री सभाजिरंसभांगणं घंटापथःविस्तीर्णमार्गः ॥ ४९ ॥ तस्मिन्भगवतिश्रीकृष्णे प्रपंचःस्थावरजंगमवस्तूनि विस्मरःआश्चर्ययुक्तः सदसिसभायां सांद्रःगाढः संमदःहर्षः क्षत्ताक्ष्णोःविदुरनेत्रयोः पक्ष्मपातंनयननिमीलनं करिपुरजनताहस्तिनापुरजनसंघः ॥ ५० ॥ ध्वनिःशब्दः आदिपुमानश्रीकृष्णः व्योम्निस्वर्गे विजृंभमाणं वर्धमानं सौधावलिजालकंगृहपंक्तिगवाक्षं अध्यापकत्वंबिभरांबभूवस्वर्गपर्यंतंअट्टहासशब्दोजगामेत्यर्थः ॥ ५१ ॥ हरिःश्रीकृष्णः चक्षुष्मतांधुरं समधिरुह्यदृष्टिं प्राप्य भूमिपालःभूपस्ततोप्यवततारधृतराष्ट्रःपुनःअंधोबभूव ॥ ५२ ॥ ओजःविश्वरूपदर्शनसामर्थ्यं घुष्यत्सुआक्रोशंकुर्वत्सु विहायत्यक्त्वा कुशेशयाक्षःश्रीकृष्णः रूपमवापस्वरूपंस्वीचकार ॥ ५३ ॥

( गद्यम् ) ततस्तादृशंनिरुपमानंतस्यमहिमानमनुभूयचरितार्थो

मुनिसार्थःसमुपसृत्यशांतमूर्तिंतमेवमस्तौषीत् भगवन्महात्मभिर विदितप्रभावायतस्मैप्रभवेभवतेभगवतेनमः ॥ १० ॥

निरुपमानंउपमारहितं महिमाप्रभावः सार्थःसंघः चरितार्थःकृतार्थः शांतमूर्तिंसमुपसृत्यश्रीकृष्णसमीपंगत्वा महात्मामहत्सामर्थ्ययुक्तः अविदितंअज्ञातम् ॥ १० ॥

( पद्यम् ) दुग्धांबुराशितनयानयनद्वयेनतुल्याकृतित्वमहिमानमिवोपगंतुम् ॥ मत्स्यत्वमेत्यभुवियःसुरवैरिनीतामध्येसमुद्रमनवीनगवीर्विचिक्ये ॥ ५४ ॥ मंथानशैलमपिमार्गरुधंहिमांशोर्वीचीकणैःसदृशमंगविपक्तिभाग्भिः ॥ कायेवभारचरमेकमठाकृतिर्योजीवातुमुद्रमयितुंजलधेःसुराणाम् ॥५५॥ दंष्ट्राग्रवर्तिकिटिवेषधरस्ययस्यक्ष्मामंडलंकुवलयांकुरकोमलाभम्॥ऊर्ध्वप्रसृत्वरबकावलिकावलीढप्रावृट्पयोदवलयस्यवभारलीलाम्॥५६॥ इंद्रद्विपन्मदगजस्यहिरण्यनाम्नोभेदंरसस्यपिशितस्तवकावलीनाम् ॥ जिज्ञासमानइवयोधृतसिंहभावःस्तंभादुपेत्यनखैरस्तमुरस्यभांक्षीत् ॥ ५७ ॥ याञ्चाप्रतारणवशादधियज्ञवाटंयोवामनत्वमवलंब्यबलिंनिगृह्णन् ॥ दुःखंसतांस्वमिवखर्वतमंसुखंचस्वीयंपदक्रममिवोन्नतमाततान ॥ ५८ ॥ सृष्टौपुरामुखभुजोरुपदेमुरारेरंगंद्वितीयमभजत्किमुवंध्यभावम् ॥ इत्येवसंशयमशेषजनस्यचक्रेयस्याहवेषुकरतांडवितःकुठारः ॥ ५९ ॥ श्वश्रूर्मुनेरजनियस्यपदाब्जधूलिर्यत्कृष्टमीशधनुरापशरव्यकृत्यम् ॥ यस्माद्भियाब्धिरपिकंपमकंपमागाद्यत्पत्रिणोर्विघसएवविभीषणोऽभूत् ॥ ६० ॥ हन्यामहंयुधिरिपूनहमेवहन्यामित्येवयन्मुसललांगलयोर्विवादः ॥ यस्यांबरंनिजरुचिप्रतिमल्लवर्णंयत्षष्ठसंस्करणमासवपानमाहुः ॥६१॥

दुग्धांबुराशितनयाक्षीरसागरकन्यालक्ष्मी महिमानमुपगंतुं सामर्थ्यंप्राप्तुं सुरवैरीशंखासुरः अनवीनगवीःवेदः ॥ ५४ ॥ मंथानशैलंमंदराचलः रुध्रोधकः हिमांशुःचंद्रः वीचिकणः समुद्रोर्मिबिंदुः विपक्तिःसंगमः चरमकायःसुंदरशरीरं कमठःकच्छपः जीवातुंअमृतम् ॥ ५५ ॥ किटिःवराहः क्ष्मापृथ्वी कुवलयांकुरःनीलकमलपत्रं कोमलाभामनोहरकांतिः प्रसृत्वरंप्रसरणशीलं आवलिकालीढंपंक्तियुक्तं पयोदवलयंमेघमंडलम् ॥५६॥ इंद्रद्विट्दैत्यः भेदंरुचिं पिशितस्तवकः मांसगोलकः जिज्ञासाज्ञातुमिच्छा सिंह

भावः सिंहावतारः तमभांक्षीत् हिरण्यकशिपुं व्यदारयत् ॥५७॥ याचायाचना वामनत्व वामनावतारः अधियज्ञवाटं यज्ञमंडपं स्वर्वं ह्रस्वं पदः क्रमः पदन्यासः ॥ ५८ ॥ पुरास्पृष्टौ जगदारंभे मुरारिः श्रीकृष्णः द्वितीयांगं भुजः आहवः युद्धं वंध्यभावः निष्फलता॥५९॥ श्वश्रूः अहल्या मुनिः गौतमः पदाब्जं चरणकमलं कृष्टं प्रज्जं कृतं ईशधनुः शिवधनुः शरव्य शरवेधं अब्धिः सागरः अकंपः अचलः पत्रीबाणः विघसः भोजनशेषः अवशिष्टान्नम् ६० विवादः भाषणकलहः अंबरं वस्त्रं रुचिः शुभ्रकांतिः प्रतिगच्छवर्णः शत्रुवर्णः नीलवर्णः आसवं मद्यम् ॥ ६१ ॥

(पु०) यस्तन्यपानसमयेसतिपूतनायाःप्राणानपिप्रविदधेपरमोपदंशम् ॥ नाकाधिपस्यवनभूरपियेनसद्योनारीमुदेपदनखंपचधूलिरासीत्॥६२॥ वार्यस्तपोधनवरेण्यमनःखलीनैस्तृण्यांमुहुःकवलयन्जगदार्तिरूपाम्॥ नीचान्विधातुमसुरान्निजशृंगतुल्यान्कोपादुदेष्यतिचयःकुहनातुरंगः ॥६३॥ एतैःस्तवैर्हृष्टमनायथार्थैर्मंदस्मितश्रीमधुराधरोष्ठः॥ पीठादुदस्थादथपीतवासामेरोर्नितंबादिव मेघशावः ॥६४॥ आस्थानाद्बहिरित्यकैटभरिपुर्गांगेयमालिंग्यतंपश्चार्द्वैपरिमृश्यभूपमितरानापृच्छ्यसर्वान्कुरून् ॥ आम्नायातिचिरेणमूर्ध्निविदुरंयुक्तंशतांगंहयैरारूढोऽभिययौविराटनगरीमंतःस्मरन्पांडवान् ॥ ६५ ॥ श्रुत्वाततःपरमतंपुरुषोत्तमात्तेफेनायमानरणसन्नहनाब्धिपूराः॥आराधयन्विधिवदस्त्रगणंश्मशानेपीतांबमंतमिवकांतिमिषेणधूम्याम्॥६६॥अत्रांतरे॥ततःपरंजह्नुकुमारिकायास्तटीवनेकृत्यविदांपुरोगा॥ पृथातपस्यंतमवापकर्णंकर्णेप्रवृत्तिस्तुनकिंचिदस्याः॥६७॥ कमनीययशोभरेतनूजेकवचोत्कर्तनझर्झरांगकेऽपि ॥ नलिनान्मृदुलंनरेंद्रपत्न्यानयनंतत्रचिरेणसंचचार ॥६८॥ सतत्रपूनःसवनाभिषेकैस्तपोवसानेतपनस्यसूनुः ॥ श्रोत्रेवितेनेशुचिमक्षमालांनेत्रेचराज्ञींनिकटप्रपन्नाम्॥६९॥ विनतेःपदयोरनंतरंविहिताशीःपरिरभ्यतंसुतम् ॥ परिहर्तुमुवाचपंचतामुभयींधर्मसुतादिसूनुषु॥७०॥ अयिवत्सरवेरनुग्रहादजनिष्ठामयिभाग्यमर्थिनाम्॥ तनुरक्षणमात्रकारिणौतवराधाधिरथौनजन्मभूः ॥७१॥ जहीहिराधातनयत्वबुद्धिंसहैवदुर्योधनसौहृदेन॥ गृहाण

वाण्यासहधर्म्येयामेसहोदरान्धर्मतनूजमुख्यान् ॥७२ ॥ यस्मैक स्मैचनत्वंसहजकवचदःप्रार्थनातुल्यकालंमातुःसाक्षान्निदेशेमम सुकरतमेमाकृथामंदभावम् ॥ पाराङ्मुख्यंविधत्तेगुरुजनवचना नुष्ठितौयस्यचेतोधिक्शब्दस्याभिधेयंजगदिदमखिलंदोग्धितस्मै मुखेन ॥ ७३ ॥

पूतनाराक्षसीविशेषा प्राणानपिपरमोपदंशंप्रविदधेप्राणैःसहस्तन्यपपौ नाकाधिपव-नभूःनंदनवनभूमिः नारीसत्यभामा पदनस्वंपचाकल्पवृक्षच्छायांविनाअतितप्ता ॥६२ ॥ वार्यःवशः वरेण्यःश्रेष्ठः खलीनंमुखरज्जुः तृण्यातृणसंघं आर्तिःपीडानीचःपवनः नि-जशृंगतुल्यः अश्वशृंगसदृशः अश्वावरूपः कुहनातुरंगःकपटाश्वः ॥ ६३ ॥ स्मितंहास्यं श्रीःशोभा पीठंआसनं पीतवासाःश्रीकृष्णः मेरुनितंबःमेरुपर्वतकटकमेघशावःबाल मेघः ॥ ६४ ॥ आस्थानंसभा कैटभरिपुःश्रीकृष्णः गांगेयःभीष्मःपरिमृश्यकरं स्पर्शयित्वा मूर्धाशिरः शतांगःरथः ॥ ६५ ॥ पुरुषोत्तमःश्रीकृष्णः तेपांडवाः फे-नायमानःसंक्षुभितः सन्नहनंसन्नद्धता विधिवत्विधिपूर्वकं धूम्याधूमसंघः कांतिमिषेणपी तांवमतःदेदीप्यमानाः ॥ ६६ ॥ जन्हुकुमारिकागंगा कृत्यविदापुरोगाकर्तव्यज्ञाग्रेस-रा पृथाकुंती कर्णेप्रवृत्तिर्न नश्रुतमित्यर्थः ॥ ६७ ॥ कवचोत्कर्तनंकवचछेदनं क्षुद्रां-रांगःकृशः कमनीयःअल्पः तनूजःकर्णः नयनंचिरेणसंचचारअवलोकयामास ॥६८ ॥ वनाभिषेकपूतःस्नानपवित्रः अवसानःअंतः तपनसूनुःकर्णः प्रपन्नाप्राप्ता राज्ञींवितेने-कुंतींददर्श ॥ ६९ ॥ विनतिःनमस्कृतिः विहिताशीःदत्ताशिर्वादः सुतःकर्णः पंचतां मरणम् पंचसंख्याम् ॥ ७० ॥ रविःसूर्यः अजनिष्ठाःउत्पन्नः अर्थीयाचकः तनुरक्षण-कारिणौपोषकमातापितरौ ॥ ७१ ॥ सौहृदंमित्रत्वं धर्मराजमुख्यान्धर्मप्रमुखान् ॥ ॥ ७२ ॥ निदेशःआज्ञा सुकरंकर्तुंशक्यं मंदभावंमाकृथाः आलस्यंमाकुरु अनुष्ठि-तौकर्तव्यतापांपाराङ्मुख्यंअश्रवणं धिक्शब्दाभिधेयंदोग्धिनिंदांददाति ॥ ७३ ॥

( गद्यम् ) इतिदशनकिरणव्याजादंतश्चिररक्षितंतदंशस्तन्यंप्र काशयंत्याइवकुंत्यानिदेशंकर्णःकर्णदेशाध्वनीनंविधायसाकमंज लिनासमुचितमुत्तरंबबंध ॥ ११ ॥

दशनःदंतः व्याजंकपटं स्तन्यंस्तनदुग्धं निदेशःआज्ञा कर्णदेशाध्वनीनंविहायश्रु-त्वा समुचितमुत्तरंबबंधयोग्यंउत्तरंददौ ॥ ११ ॥

(पद्यम् )भोजान्ववायोभुवनेप्रतीतःकुलंकुरूणांचतथाद्वयेस्मिन्॥ तवांबजन्मोपयमोत्सवौचेत्त्वय्येवजागर्त्युचितज्ञभावः ॥ ७४ ॥

अंगद्वयंमेपरिपालनीयंकर्णत्वयाशूरजनाग्रगेण ॥ एवंवशेमेवित तानयस्तत्तस्यापिसख्यंकिमुपेक्षणीयम् ॥ ७५ ॥ परस्यलोक स्यगतेर्हिविघ्नंकृतज्ञतामेववदंतिसंतः ॥ सानस्पृशेन्मामधुनाय थात्वंतथाप्रसीदांबकृपार्द्रचित्ता ॥ ७६ ॥ इतिवादिनोरवि सुतस्यमानसंननिवर्ततेस्मधृतराष्ट्रनंदनात् ॥ अपितुस्वकीयतन यान्महाभुजादनवाप्यकाममियमेव केवलम् ॥७७॥

इतिभारतचंप्वां अष्टमः स्तवकः समाप्तः ।

भोजान्ववायःभोजकुलं प्रतीतं ख्यातं उपयमः विवाहः उचितज्ञताविचारकर्तव्यता॥ ॥७४॥ अंगंअंगदेशं २ शरीरं अग्रगःश्रेष्ठः वशेविततानआधीनंचकार उपेक्षणोयंत्या ज्यम् ॥७५॥ परलोकगतिःमुक्तिः साकृतज्ञता अधुनाअद्य अंबमातः ॥७६॥ वादिनः उक्तवतः रविसुतःकर्णः नंदनःपुत्रः महाभुजःस्वकीयतनयःबाहुवीर्यशालीकर्णः कामं- इच्छाम् ॥ ७७ ॥

अष्टमःस्तवक समाप्तः ।

अथ नवमस्तवकः ॥

( पद्यम् ) अथोभयेतेकुरवोरणायस्वनामधेयोपपदंप्रसिद्धम्॥ क्षे त्रंव्यगाहंतनिरुद्धपार्श्वाःशतांगमातंगतुरंगयोधैः॥१॥ हिरण्वत्या स्तत्रत्रिदशविनुतायास्तटतरुप्रसूनानांगंधैर्मथितपथिखेदाःकरि घटाः ॥ कृतज्ञत्वेनैवस्वयमपिमदांभोल्हरिभिर्ददुस्तस्यैवल्हीरति सुरभिगंधीःप्रियसुखीः ॥२॥ अस्मज्जन्मभुवःसमानभिधयासप्ता पिसिंधूनिमान्नेष्यामोवयमद्यशोषणमितिस्फीताभ्यसूयाइव ॥ सेनासैंधवपंक्तयःखुरपुटैर्दीप्रक्षुरःगोपमैर्भूमेरुल्लिखितात्स्थलादज नयन्सूर्योरजोमंडलम् ॥३॥ तेषांकुरूणांकलहोदयात्प्राग्रथस्वना नांकरिबृंहितानाम् ॥ आशामशेषांस्ववशेविधातुमन्योन्यमासी त्कलहोमहीयान् ॥ ४॥ नाम्नावानवमग्रहस्यसमतांसोढास्महेमी वयंतुंगत्वंनसहेमहीत्यतिरुषासन्नाहधुर्याइव ॥ उद्दंडाअपिकेतवो दद्दशिरेस्थानंग्रहाणामतिक्रम्यस्पंदनवृंदमौलिकलितामध्येनभ स्तत्पदम्॥५॥ महीपतीनांपटमंदिराणिमार्गेसुराणांलिलिहुःशिरो भिः ॥ वयंहिदूष्याणिशुचीभवेमेत्यभ्रापगावारिमिमंक्षयेव ॥ ६ ॥

स्वनामधेयोपपदंक्षेत्रंव्पगाहंतकुरुक्षेत्रंजग्मुः निरुद्धपार्श्वःयुक्तपार्श्वभागः शतांगः रथः मातंगःहस्ती तुरंगःअश्वः योधःवीरः ॥ १ ॥ हिरण्वतीनदी त्रिदशविनुतादेवस्तुता प्रसूनंपुष्पं मथितंदूरीकृतं पथिखेदःमार्गश्रमः गजघटाहस्तिसंघः मदांभःदानोदकं सुरभिःसुगंधः ॥ २॥ समानभिधासमानाख्या सिंधुःसमुद्रः स्फीताभ्यसूयावृद्धिंप्राताइर्ष्या सैंधवपंक्तिःसिंधुदेशोत्पन्नाश्वपंक्तिः क्षुरप्रोपमदीप्रःक्षुरप्रबाणतुल्यतीक्ष्णः रजः धूलिः ॥ ३ ॥ कलहोदयःरणारंभःस्वनःशब्दः करिबृंहितंहस्तिगर्जना आशादिक् अशेषासकला वशंविधातुंआधीनंकर्तुं महीपान्महान् ॥ ४ ॥ नवमग्रहसमतांसोढास्महेकेतुग्रहसमत्वंसहिष्यामहे तुंगंउच्चं रुषाक्रोधेन सन्नाहधुर्यासनद्धत्वधुरंधरा उद्दंडकेतुःउच्चरथध्वजः स्यंदनवृंदमौलिकलिर्तरथसंघाग्रभागेस्थापितं नभस्वत्पदंआकाशमध्यभागः ॥ ५ ॥ सुरमार्गःगगनं दूष्यंदूषणयुक्तं शुचिःशुद्धः अभ्रापगावारिमंदाकिन्युदकं मिमंक्षास्नानेच्छा ॥ ६ ॥

(गद्यम्) ततःक्षणादेवविशालार्वेनिर्मितवीथीसहस्रविराजमानंविशंकटविपणिविस्तारितविविधपण्याहरणविमर्दसहक्रयिकलोकंविटकुलानुसार्यमाणविलासिनीजननिबिडितवेशवाटंविशिखकृपाणकुंतशक्तिप्रमुखविविधायुधसंस्कारपरवशयोधसंबाधंतत्कुरुक्षेत्रंकुरुनगरमित्रंबभूव ॥ १ ॥ तत्रदुःशासनाग्रजोभगवन्तस्मिन्नुपतस्थुषिवीरभुजविनोदकालेत्वंविवाहविमुखोऽपिमदर्थंप्रत्यर्थिपार्थिवान्विनिहंतुंपृतनाधिपत्यलक्ष्मीमुपयमस्वेतिविज्ञाप्यपितामहस्यचरणनलिनयोःप्रणिपपात ॥ २ ॥

विथीःपंक्तिः निशंकटाविपणिःमहत्पुण्यमार्गः पण्याहरणंक्रेयपदार्थग्रहणं विमर्दः-संघर्षणं विटःजारः निबिडितवेशवाटःव्याप्तजारिणीगृहपरंपरा विशिखःबाणः परवशयोधसंबाधंतत्परवीरव्याप्तं कुरुनगरमित्रंहस्तिनापुरतुल्यम् ॥१ ॥ उपतस्थुषिकालेसंनिधप्राप्तिप्रसंगे भुजविनोदः बाहुवीर्यकौशलं विवाहविमुखःअविवाहितः प्रत्यर्थीशत्रुः पार्थिवःराजा पृतनाधिपत्यंसेनापतित्वं उपयमःविवाहः पितामहःभीष्मः ॥२॥

( पद्यम् ) दुर्योधनेविशतिमौलिभुवापदंस्वंशूराग्रणीष्वचरमःसुरसिंधुसूनुः ॥ अर्धक्षणाद्रिपुभटांस्त्रिदिवेविधास्यन्नध्यक्षतापदमविक्षदनीकिनीनाम् ॥७॥ पार्थास्तुतेद्रुपदनंदनमाशुचक्रुःसेनान्यमुद्धतविरोधिवनानिदग्धुम् ॥ वह्निप्रतापकपटान्निजजन्मकालेसक्तंभुजेवहतियःसततंज्वलंतम् ॥ ८ ॥

मौलिभुवा विंशतिशीर्षभागेन स्पृशति शूराग्रणिः वीरश्रेष्ठः सुरसिंधुः गंगा त्रिदिवे- विधास्यन् हन्निष्यन्नित्यर्थः अनीकिन्यध्यक्षतामविक्ष्यत् सैन्याधिपत्यं स्वीचकार ॥ ॥ ७ ॥ द्रुपदनंदनः धृष्टद्युम्नः आशु शीघ्रं सेनान्यः सेनापतिः उद्धतविरोधी बलवाञ्छत्रुः प्रतापः पराक्रमः वह्निः अग्निः सक्तः संलग्नः ॥ ८ ॥

( गद्यम् ) अथ सदसि महारथपरिगणनकथायामर्धरथायमिति जाह्नवेयेन निह्नुतपौरुषतया रोषचिह्नितवदनरोचिरङ्गांपतिकुमारो ह्यायुधितस्थावधिमेव निजहेतेरसाधारणस्यापि साधारणं प्रतिजज्ञे इदं प्रतिपद्य खिद्यमानं मानधनं सुयोधनं वत्स माभैषीर्महाभुजानपि रिपुमहीभुजः संख्ये खरतरविशिखमुखेन खादिष्यामीति पितामहः प्रसादयामास ॥ ३ ॥

जाह्नवेयः भीष्मः निह्नुतः निंदितः पौरुषता शौर्यं वदनरोचिः मुखकांतिः अङ्गांपतिकुमारः कर्णः अवधिं मरणं हेतिः शस्त्रं महाभुजान्महोभुजः बलवतः क्षत्रियाः खरविशिखमुखं तीक्ष्णबाणाग्रं पितामहः भीष्मः ॥ ३ ॥

( तदनंतरम् ) (पद्यम्) अभ्रापगातनयपार्षतनंदनाभ्यामग्रावनीतिलकिनाधृतकार्मुकाभ्याम् ॥ उच्चावचं निजनिजं विरुदं वहंतो युद्धाय तस्थुरुभयेऽपि कुरुप्रवीराः ॥ ९ ॥ जेता पुराभिव तदा जलजातयोनिं पत्रीश्वराग्रजमिव प्रथमो ग्रहाणाम् ॥ अग्रे निधाय यदुनायकमात्ततोत्रं पार्थो रथी प्रधनभूमिमवाप वीरः ॥ १० ॥ संचिंत्य भीष्ममुखबंधुजनस्य हानिं संतापिनः समरसीमनि शक्रसूनोः ॥ बाष्पांबु चक्षुरधिकं श्वसितं मुखेंदुर्धैर्यं मनः करतलं च मुमोच चापम् ॥ ११ ॥ बलारिसूनुं वसुदेवसूनुर्वचोभिराश्वास्य चिरेण तैस्तैः ॥ असासहिं पावकजाठराग्नेरग्राहयत्तत्र पुनः शरासम् ॥१२॥ देवव्रतस्य जयकेतनचिह्नतालश्यामप्रभावलिरदृश्यत दूरदीर्घा ॥ सख्याः सुतस्य समरे भुजवीर्यलक्ष्मीं संवीक्षितुं रविसुतेव नभोऽधिरूढा ॥१३॥

अभ्रापगा गंगा पार्षदः द्रुपदः अग्रावनीतिलकितः सैन्याग्रभागभूषितः कार्मुकं धनुः अवचं नीचं विरुदं पराक्रमभूषणम् ॥ ९ ॥ पुरां जेता श्रीशंकरः जलजातयोनिः कमलोद्भवः ब्रह्मा पत्रीश्वराग्रजः गरुडाग्रजः अरुणः आत्ततोत्रं गृहीतप्रतोदं प्रधनं युद्धम् ॥ ॥१०॥ भीष्ममुखाः भीष्मप्रमुखाः बाष्पांबु-नेत्रोदकं करतलं हस्ताग्रं चापं धनुः संतापी अनुतापयुक्तः समरसीमनि युद्धभूमौ ॥ ११ ॥ बलारिः इंद्रः वचोभिः युद्धशास्त्रवचनैः

पावकःअग्निः जठराग्निःक्षुद्विकारः असासहिःअसहनकर्ता शरासमग्राहयत्धनुर्ग्राहयामास ॥ १२ ॥ देवव्रतःभीष्मः केतनःध्वजः आवलिःपंक्तिः सव्याःसुतःगंगायाःपुत्रः भीष्मः रविसुतायमुना ॥ १३ ॥

युद्धारंभभटार्भटीपिशुनतामुद्दामयंतस्तदानिःसाणादिमजैत्रवाद्यनिनदानिर्धूतशब्दांतराः ॥ श्रांतिंक्षेप्तुमिवानिदूरपदवीसंपादितामंबुधेर्वेलाशैलमहागुहासुविविशुर्व्योमासुधाराधरैः ॥ १४ ॥ संग्रामदुंदुभिरवश्रवणेनदेवाःसर्वैकपाटघटितानिगृहाणिकृत्वा ॥ आदायनंदनवनादभिषेक्तुमाजौवीरान्प्रसूनचयमप्यभजन्विहायः।१५। सतिघर्मजलेमिथोविमर्दात्सकलंतद्व्यपनेतुमंगकेभ्यः॥ मघवत्प्रमुखाःसुराबभूवुर्मरुतोऽपिस्वयमात्ततालवृंताः ॥ १६ ॥ तत्रतौरिपुगणौशनैःशनैःसंगतौसधनुषौसगर्जितौ ॥ पूर्वपश्चिममरुत्प्रचोदितौपुष्करेनवघनाघनाविव ॥ १७ ॥ धावत्स्यंदनकेतनांशुकमरुद्व्याधूतमंदाकिनीबिंदूनामपिसैन्यकुंजरघटाशुंडासमुत्थायिनाम् ॥ दानांभःपृषतामपिस्फुटशरत्ताराकृतिस्पर्धिनांभेदंग्राहयितुंशशाकगगनेभृंगानुरोधक्रमः ॥ १८ ॥

भटार्भटीपिशुनतामुद्दामयन्वीरसिंहनादकत्वंप्रकाशयन् निनदःनादः क्षेप्तुंदूरीकर्तुं पदवीमार्गः अंबुधिवेलासमुद्रमर्यादा शैलःपर्वतः धाराधरःमेघः ॥ १४ ॥ संग्रामदुंदुभिःयुद्धवाद्यं आदायगृहीत्वा आजिःयुद्धं प्रसूनचयःपुष्पवृष्टिः विहायःगगनम् ॥ ॥ १५ ॥ मिथोविमर्दः परस्परांगघर्षणं व्यपनेतुंदूरीकर्तुं अंगकंअंगं मघवाइंद्रः मरुतः वायवः २ देवाः आत्तंगृहीतं तालवृंतंव्यजनम् ॥ १६ ॥ संगतिःसंमेलनं सगर्जितौ गर्जनायुक्तौ मरुत्प्रचोदितंवायुनुन्नं पुष्करंगगनं घनाघनःवर्षुकजलधरः ॥ १७ ॥ केतनांशुकंध्वजवस्त्रं मरुद्व्याधूतंवातकंपितं कुंजरघटाहस्तिसंघः समुत्थायीऊर्ध्वगामी दानांभःपृषतःमदोदकबिंदवः स्फुटंस्पष्टं शरत्ताराशरत्कालनक्षत्रं शशाकशक्तोबभूव भृंगःभ्रमरः ॥ १८ ॥

आसाद्यद्विपमाहवेरदपथेनारुह्यतीक्ष्णासिनायंतारंविनिपात्यसाट्टहसितंस्कंधेविधायस्थितिम् ॥ कुंभास्फालनकारिणंरिपुभटंदृष्ट्वादिवौकस्त्रियाःकस्याश्चित्कुचकुंभयोःकठिनयोः कंठूरखंडाभवत् ॥ १९ ॥ कश्चिद्गजःप्रतिभटेनकरेविलूनेप्यामूलभागमसिनानमितानग्रकायः ॥ क्षिप्रंप्रगृह्यरदनेननिपादिहस्तात्त्रस्तांसृणिंपुन

रदात्कुशलायनस्मै ॥ २० ॥ भसितलेपसितौकरिणावुभौयुधिप
रस्परदत्तरदौमुखे ॥ हरिवरेक्ष्यवहत्यपिवाहनेसरभसंनिदधेसक
लादृशः ॥ २१ ॥ भग्नैकदंतमुसलःप्रतिदंतघातात्कुंभाग्रलक्ष्य
कुटिलांकुशचंद्रलेखः ॥ कश्चिद्गिरीशसमतांकलयन्करींद्रःसारू
प्यभागिवगणाधिपतेर्विरेजे ॥ २२ ॥

द्विपःहस्ती आहवःयुद्धं असिःखड्गः यंताहस्तिपकः दिवौकस्त्रियःअप्सरसः अखंडंनिरंतरंआस्फालनंनिवारणम् ॥ १९ ॥ प्रतिभटःवैरिवीरः विलूनंछिन्नं अग्रकायः-देहपूर्वभागः रदनःदंतः निषादीहस्तिपकः स्रस्तांसृणिंगलितांकुशम् ॥ २० ॥ भसितं भस्म सितंशुभ्रं करीहस्ती रदःदंतः हरिःइंद्रः वाहनंइंद्रवाहनं ऐरावतहस्ती सरभसंसवेगं सकलादृशःसहस्रनेत्राणि ॥ २१ ॥ प्रतिदंतिघातःशत्रुहस्तिप्रहारः कुंभःगंडस्थलं करींद्रःहस्तिश्रेष्ठः गिरीशःशंकरः समतांकलयन्सदृशतांस्वीकुर्वन् गणाधिपतिःगजाननः अंकुशचंद्रलेखा अंकुशस्यचंद्राकारमुद्रा ॥ २२ ॥

कश्चिन्निर्गत्यवेगादरिनृपतिबलेपातयन्स्वामिनंस्वंतत्रस्कंधाधि
रूढंविमतमपितथाधत्तनीत्वास्वसैन्यम् ॥ इत्थंदुःसाध्यरोधोयुधि
करिकलभोदूरधूतांकुशःसन्विज्ञंमन्यंनिषादिद्वयमपिविदधेहास
पात्रंजनानाम् ॥ २३ ॥ हस्तेनहस्तमथदंतयुगेनदंतौकर्णौचक
र्णयुगलेनपदेचपद्भ्याम् ॥ वालेनवालमभिहत्यचवारणौद्वौतुल्यां
गयुद्धमतिशिक्षितमादधाते ॥ २४ ॥ निषादिनोदंतिशिरस्यधो
मुखंनिपातितांगाल्लगुडस्यताडनैः ॥ व्यथापनोदायमदस्यसौरभं
विनम्यजिघ्रंतइवालुलोकिरे ॥ २५ ॥ तीक्ष्णैःप्रत्यर्थिभल्लैरपहृत
शिरसांहस्तिपानांशरीरादुत्क्रांताःप्राणवाताःकरिमदपयसांसौर
भीमुद्वहंतः ॥ पायंपायंकपोलस्थलकुचकलशस्वेदवारिप्रवाहंच
क्रुःसंमर्दभाजांदिविसुरसुदृशांतालवृंतस्यकृत्यम् ॥ २६ ॥ अ
श्वावुभौतस्थतुरग्रपादावुत्क्षिप्ययुद्धाभिमुखीभवंतौ ॥ परस्पर
स्योपरिहेतिपातात्खसादिनौत्रातुमिवोर्ध्वकायौ ॥ २७ ॥

निर्गत्यपुरतोगत्वा अरिबलंशत्रुसैन्यं विमतःशत्रुहस्तिपकः करिकलभःहस्तिबालः धूतंधिक्कृतं हासपात्रंनिंदायोग्यः ॥ २३ ॥ कर्णयुगलंकर्णद्वयं वालंपुच्छं अभिहत्यताडयित्वा वारणःहस्ती ॥ २४ ॥ निषादीहस्तिपकः दंतीहस्ती लगुडःयष्टिः निपातितांगंपातितदेहं व्यथादुःखं सौरभःसुगंधः आलुलोकिरेविलोकयामासुः ॥ २५ ॥

प्रत्यर्थिभटः शत्रुबाणः अपहृतशिरःछिन्नशीर्षः करिमदपयःहस्तिदानोदकं सौरभीमुद्-हंतःसुगंधधारयंतः पायंपायंशोषयित्वा स्वेदवारिघर्मजलं संमर्दभाजःअंगघर्षणवत्यः सुरसुदृशःअप्सरसः तालवृंतंव्यजनम् ॥ २६ ॥ युद्धाभिमुखःयुद्धार्थप्राप्तः हेतिपातः शस्त्रपतनं सादीअश्वारोहणकर्ता ॥ २७ ॥

एकैववैरिभटखड्गवरस्यधाराधारामुपंचमुसतीष्वपिकंचिदश्वम् ॥ स्कंधेविभिद्यतदसूनितरैर्दुरापान्जग्राहनाल्पमपितत्क्षतजांबुलेशम् ॥ २८ ॥ समरभुविबभासेसादिनोभूषणानांमरकतमणिभासांमध्यगःकश्चिदश्वः ॥ सकलभटविमर्दैश्चंचलाद्बिंबभेदेनिपतितइवरथ्योनेतुरह्नांशतांगात् ॥ २९ ॥ आयोधनांगणजुषामसृगापगानामावर्तगर्भपतिताःकुणपाहयानाम् ॥ संबभ्रमुर्विहितपूर्वमुपाददानाःशिक्षाविशेषमिवमंडलचंक्रमेषु ॥ ३० ॥ धन्वीधानुष्कमारादसिभृतमसिमान्कुंतिनंकुंतधारीचक्रास्त्रंचक्रहेतिर्गदिनमपिगदापाणिरन्योऽन्यमेत्य॥ स्वस्वास्त्राणांप्रयोगेदृढपरिचितयोहंतृवध्यत्वशैलीसाधारण्येप्रतिष्ठामथविदधुरमीद्वंद्वयोधाग्रगण्याः ॥ ॥ ३१ ॥ ततः ॥ धृष्टद्युम्नोत्कृत्तवर्माणमग्रेदृष्ट्वाहाहाशब्ददीनांस्वसेनाम् ॥ कोदंडज्यामास्पृशन्घोरघोषांकोपाद्भीष्मःप्राविशत्पार्थसैन्यम् ॥ ३२ ॥

भटःवीरः अश्वपंचधाराःअश्वस्यमंडलादिपंचगतयः ( आस्कंदितंधौरितकंरेचितंवल्गितंप्लुतं अमूःपंचगतयःअश्वस्य ) विभिद्यछित्वा असुःप्राणः दुरापःदुर्लभः क्षतजंरक्तं अंबुजलम् ॥ २८ ॥ समरभूःरणांगणं सादीअश्वारोहणकर्ता मरकतभासःहरित्कांतयः विमर्दसंघर्षणं बिंबसूर्यबिंबं अह्नांनेतासूर्यः शतांगःरथः ॥ २९ ॥ आयोधनंरणं असृगापगारक्तनदी आवर्तःजलभ्रमणं कुणपंप्रेतं हयःअश्वः विहितपूर्वंकृतपूर्वं आददानःस्वीकुर्वाणः मंडलचंक्रमंमंडलाकारगतिः ॥३०॥ धन्वीधनुर्धरः धनुःप्रहरणंयस्य स धानुष्कः असिभृत्खड्गधारी असिमान्खड्गधरः हेतिःआयुधं गदापाणिःगदाधारी अन्योन्यंपरस्परं शैलीरीतिः साधारण्येप्रतिष्ठांविदधुःस्वपरवध्यत्वनिश्चयोनबभूवेत्यर्थः अग्रगण्यःश्रेष्ठः ॥ ३१ ॥ कृत्तवर्माणिछिन्नकवचानि कोदंडज्याधनुर्गुणः दीनाहतवीर्या ॥ ३२ ॥

ससिंहनादेमरितःकुमारेचापंसमाकृष्यशरैर्विमुक्तैः ॥ परान्परेतुंप्रथमंप्रवृत्तेवरान्वरीतुंववलेऽप्सरोभिः ॥३३॥ पृथासुतानांपृतनां

तराल्लेपृथक्पृथक्तस्यपृषत्कवर्याः ॥ द्विपान्सहस्रंतुरगान्सहस्रंभ
टान्सहस्रंपतितानकार्षुः ॥ ३४॥ सिंधोःसुतस्यविशिखैर्जमदग्नि
सूनोःप्राणान्विलिह्यधिगितिप्रविमुक्तवद्भिः ॥ कृतान्यमुंचतविरो
धिकुलानिकश्चित्कश्चिज्जवेनजगृहेयुधिभूतवर्गः॥ ३५ ॥ देवव्रते
दलितवैरिणिदृष्टमात्रेसारथ्यमात्रकरणेकृतसंगरोऽपि ॥मूलेनकेव
लमहोमुरजिद्रथस्यमध्येऽपिचक्रमतिविभ्रमयांचकार ॥ ३६ ॥
अरिमंडलखंडकैःपृषत्कैरवदीर्णारुधिरापगावलीनाम् ॥ अवनीप
तयोरुपानिजानामधिविन्नांजननीममुष्यचक्रुः ॥ ३७ ॥

सरित्गंगा परान्परेतुंशत्रून्हंतुं वललसज्जोबभूव प्रवृत्तःसिद्धः ॥३३॥ पृतनांतरालंसेनामध्यभागः पृषत्कःबाणः पतितानकार्षुः जघ्नुः ॥ ३४ ॥ सिंधुसुतविशिखः भीष्मबाणः जमदग्निसूनुःपरशुरामः विलिह्यआस्वादयित्वा कृत्तंछिन्नं विरोधिकुलं शत्रुसंघः भूतवर्गःपंचमहाभूतानि २ पिशाचाः ॥ ३५ ॥ दलितवैरीहतरिपुः देवव्रतः भीष्मः कृतसंगरःकृतप्रतिज्ञः मुरजित्कृष्णः ॥ ३६ ॥ अवदीर्णछिन्नं रुधिरापगावलिः रक्तनदीपंक्तिः अवनीपतिःराजा अमुष्यजननीभीष्ममातागंगा अधिविन्नाद्दुःखदात्री सपत्नी ॥ ३७ ॥

( गद्यम् ) तदनुसमरसंमुखीनवैरिभटप्राणपरिमोषणोन्मुखशिली
मुखप्रस्थानसमयसमाप्रच्छनपात्रीकृतकर्णपुटैर्बलवैरिनगरवास्त
व्यवारवनिताजनतापाणिपंकेरुहपरिगलितपारिजातप्रसवसहप
तितचंचरीकपुंजमंजुगुंजितव्यंजितभेदच्चिकुरबंधैर्वेगापतितवि
शिखविघट्टनविपर्यस्तविकटमुकुटविटंकविप्रकीर्णमुक्ताफलशं
कावदान्यरणश्रमवारिशीकरनिकरकोरकितनिटिलभागैरोषाति
रेकव्यतिकरितदशनालिदंशनपुनरुक्तरक्तिमाधरैरयुतेनराज्ञांशिरो
भिःकल्पांतरुद्रबंधुःसुरसिंधुसूनुर्वसुंधरांबंधुरयांचक्रे ॥ ४ ॥

संमुखीनःप्राप्तः परिमोषणोन्मुखशिलीमुखःहरणोत्सुकबाणः पात्रीकृतकर्णपुटःप्रमुक्तः बलवैरिनगरंइंद्रपुरी वारवनिताजनता अप्सरसांसंघः पाणिपंकेरुहंकरकमलं प्रसवंपुष्पं चंचरीकपुंजःभ्रमरसंघः गुंजितंगुंजारवः व्यंजितंप्रकटीकृतं चिकुरःकेशः विशिखविघट्टनंबाणताडनं विकटःमहान् विटंकंकर्णभूषणं वदान्यःदाता वारिशीकरःघर्मबिंदुः कोरकितःयुक्तः रोषातिरेकःकोपातिशयः व्यतिकरितंआरब्धं दशनावलिःदंतपंक्तिः अयुतंदशसहस्रसंख्याकं रुद्रबंधुःशंकरतुल्यः सुरसिंधुःगंगा ॥ ४ ॥

( पद्यम् ) नद्याःसुतेनजरितैर्नवदेववर्गैःसांद्रेस्वधाम्निसतिसंकुचितस्थितीनाम् ॥ स्वर्गौकसामजनिसास्वयमेवकाम्याकूलंकषाकुशिकनंदनकोपमुद्रा ॥३८॥ भीष्मस्यकन्याजनपाणिपीडांपितुर्मुदेत्यक्तवतोऽपितस्य ॥ संघात्सुराणांसतिपुष्पवर्षैसंतानलाभोजनितद्विचित्रम् ॥ ३९ ॥ इत्थंविधायदिनमेकमसौसमीकंपाश्चात्यभूधरमुपेयुषिपद्मबंधौ ॥प्रत्यर्थिनामिवचकारबलापहारंस्वस्यापिचापशिखरादवरोपितज्यः ॥ ४० ॥

जनितंउत्पादितं धामगृहं स्वर्गौकसःदेवाः कूलंकषकामापूर्णकामना कुशिकनंदनः विश्वामित्रः ॥ ३८ ॥ पितृमुदेशंतनुनृपहर्षे कन्याजनपाणिपीडाविवाहः संतानलाभः पुत्रप्राप्तिः २ कल्पवृक्षप्राप्तिः विचित्रंआश्चर्यम् ॥३९ ॥ समीकंरणं पाश्चात्यभूधरःअस्तपर्वतः पद्मबंधुःसूर्यः प्रत्यर्थीशत्रुः बलापहारःसैन्यवधः २ सामर्थ्यापहारः चापशिखरात्अवरोपिताज्यायेनसः चापशिखरादवरोपितज्यः ॥ ४० ॥

( गद्यम् ) इतिनवदिनानिनवनवानिभुजविलसितानिप्रकाश्यदशमेहनिपुनरसौनिजध्वजचिह्नमात्रंवियदारोहतिसतिभगवतिविवस्वतिसमरवर्षासमयशिखंडिनागांडीवधन्वनापुरस्कृतंशिखंडिनंविलोक्यस्त्रीपूर्वोऽयममुनासहनयोद्धव्यमितिनिषिध्यहस्ततलनिरस्तधनुर्लस्तकःप्रथमंस्वदूरापसारकुपितयेवसिंजिन्यापश्चाद्दूरनिष्कासितैर्विजयविपाठैरादिवसावसानमवदारितकलेवरतयानितांततांतःशांतनवःशांतमनाःस्वांतनिहितरमाकांतःसुभटलोकंसमुचितांशरशय्यांक्रमादधिशिश्ये ॥ ५ ॥

भुजविलसितंवीर्यक्रीडा दशमेहनिदशमदिने निजध्वजचिह्नंभीष्मध्वजचिह्नंताल-वृक्षः वियदारोहतिआकाशारोहणंकुर्वति विवस्वान्सूर्यः समरवर्षासमयःयुद्धरूपवर्षाऋतुः शिखंडीमयूरः २ द्रुपदपुत्रः गांडीवधन्वाअर्जुनः योद्धव्यंयुद्धंकर्तव्यं निरस्तंत्यक्तं लस्तकःमध्यभागः सिंजिनीधनुर्गुणः विजयविपाठःअर्जुनशरः निष्कासितःप्रयुक्तः अवदारितकलेवरंछिन्नदेहं नितांततांतःअतिव्याकुलः शांतनवःभीष्मः स्वांतनिहितरमाकांतःचित्तचिंतितश्रीकृष्णः सुभटःसुक्षत्रियः ॥ ५ ॥

( पद्यम् ) पार्थेनाक्षितिविनिखातपुंखकानांबाणानामुपरिपितामहःशयानः ॥ बभ्राजेव्रणविलवांतरक्तबिंदुधाराणांघनइवशक्रकोपवर्षी ॥ ४१ ॥ संवीक्ष्यतत्रतमिमंशयितंशरेपुसांक्रामिकंगुणमि

वप्रतिपद्यमानः ॥ भास्वानपिस्वयमुपात्तकरोष्मशांतिःपाश्चात्य सागरशरेषुशयालुरासीत् ॥ ४२॥ जगतिविनुतकीर्तौजामदग्न्य स्यशिष्येकवलितरिपुवर्गेकालधर्मप्रपन्ने ॥ वद्भुसुरवरलाभाद्वृद्ध कामोत्सवानांश्वशुरमरणदुःखंस्वर्वधूनांबभूव ॥ ४३ ॥ पतितेयु धिवाहिनीसुतेपतदश्रुर्द्विविधापिवाहिनी॥ प्रथमापरितापमुच्छ्रितं पटवेश्मानियथौततःपरा ॥४४॥ अपरेऽहनिकौरवश्चमूनामधिप त्वेपरिकल्प्यकुंभयोनिम् ॥ पुरतोनिजगादभीष्मपाताद्रुदितोच्छू नदृशांनराधिपानाम् ॥ ४५ ॥ कुंभोत्पत्त्याप्रसिद्धोमुनिऋषभ इवक्ष्माधरंविंध्यसंज्ञंलोकेताद्दग्विधस्त्वंयुधिनिजमहसाभूभृतः स्तंभयित्वा ॥ जीवग्राहंगृहीत्वाविनमितवदनंलज्जयाधर्मसूनुंप द्मामेवप्रचारंविदधतमधुनालीलयामेऽर्पयेति ॥४६॥ उदितंतदि दंनिशम्यगोष्ठ्यामुचितज्ञःकरमुन्नमय्याकिंचित् ॥ गुहसन्निभवि क्रमस्तदानींगुरुरेषोऽपिकुरूद्वहंबभाषे ॥ ४७ ॥

क्षितिविनिखातपुंस्तकःभूमिस्थकृतपश्चाद्भागः पितामहःभीष्मः व्रणवांतःक्षतस्रावः घनःमेघः शक्रःइंद्रः ॥ ४१ ॥ सांक्रामिकगुणःसंसर्गजन्यगुणः प्रतिपद्यमानःभास्वान् प्राप्तवान्सूर्यः उपात्तकरोष्मशांतिःस्वीकृतशांतकरः ॥ ४२ ॥ विनुतंप्रशंसितं जामद-ग्न्यशिष्यःपरशुरामशिष्यः भीष्मः कवलितंहतं कालधर्मप्रपन्नःप्राप्तमरणः वद्धःप्राप्तः श्वशुरःभीष्मः ॥ ४३ ॥ वाहिनीसुतःभीष्मः द्विधापिवाहिनीसेना २ नदीभागीरथी उच्छ्रितपरितापःमहाञ्छोकः पटवेश्मशिबिरम् ॥४४॥ चम्वधिपत्वंसेनाधिपत्यं कुंभयो-निःद्रोणः रुदितेच्छूनादृक्रोदनशुष्कादृष्टिः ॥ ४५ ॥ मुनिऋषभःमुनिश्रेष्ठः क्ष्माधरः पर्वतः महसापराक्रमेण भूभृत्राजा धर्मसूनुंजीवग्राहंगृहीत्वायुधिष्ठिरंजीवंतंधृत्वा प्रचा-रविदधतंगमनंकुर्वतं मेऽर्पयमह्यंदेहि ॥ ४६ ॥ गोष्ठीसभा करमुन्नमय्यहस्तमुच्चंकृत्वा गुहःकार्तिकेयः ॥४७ ॥

कर्तुंहिशक्यमखिलंनृपकांक्षितंतेधर्मात्मजेपरिहृतेऽपिधराधिना थैः ॥ शौरिप्रणुन्नहयहेषितशब्दमिश्रोनश्रूयतेयदिनरस्यशरास घोषः ॥ ४८ ॥ सर्वास्त्रविद्यासहवाससौख्यसंकेतभूमेरपितस्य वाचम् ॥ प्रत्युद्ययौतांपरिषद्गतानांतिर्यक्प्रचारःशिरसोनृपा णाम् ॥४९॥ अथद्रुपदजद्रोणौरथद्विपहयावृतौ ॥ वद्धायतसमु त्साहौयुद्धायनिरगच्छताम् ॥ ५० ॥ नामाक्षरांकितनदीसुतबा

णकीर्णैरंगेवनेरतुरुभावपिराजवर्गौ ॥ सक्ष्वेडितौसाविरुदौसमदाट्ट
हासौसंस्फालितांसशिखरौसहवल्गनौतौ ॥ ५१ ॥ अक्षौहिणीर
वनिवल्लभवाहिनीनामेकत्रगाढमिलिताःसुतरामसोढा ॥ सायुद्ध
भूमिरुपरीवसमुत्पतंतीसांद्रारजःपटलिकासमदृश्यताभ्रे ॥ ५२॥
भेरीरवेगगनवाहिनिवाहृत्लीलांद्रोणस्यवीक्षितुमनोभिरदृष्टपूर्वाम्॥
मध्येविसृज्यादिविजंभभिदेवकाशंतस्थेऽभितस्त्रिदशकिन्नरयक्ष
सिद्धैः ॥ ५३ ॥

कांक्षितंइच्छितं धराधिनाथपरिवृतःभूपरक्षितः शौरिभणुन्नहयहेषितशब्दःश्रीकृ-ष्णप्रेरितअश्वकृतगर्जना नरःअर्जुनः ॥ ४८ ॥ परिषत्सभा शिरसःतिर्यक्प्रचारःमत्यु-ग्रयौशिरश्चलनेनअनुमोदनंदत्तवानित्यर्थः ॥ ४९ ॥ द्रुपदजःधृष्टद्युम्नः आयतःमहान् आवृतौअधिरूढौ ॥ ५० ॥ अंकितंचिह्नितं नदीसुतबाणकीर्णःभीष्मबाणव्याप्तः सं-स्फालितांसशिखरंऊर्ध्वंकृतस्कंधाग्रम् ॥ ५१ ॥ अवनिवल्लभवाहिनीनृपसेना सुतराम-सोढःअत्यसहिष्णुः रजःपटलिकाधूलिपटलम् ॥ ५२ ॥ भेरीदुंदुभिः जंभभित्इंद्रः त्रि-दशाःदेवाः अभितःसमंतात् ॥ ५३ ॥

(गद्यम्) ततस्तेसर्वेऽपिनरेंद्रावसुधातलनिहितवामजानुभागाःक्ष्वे
डितमंत्रमुदीर्यतूणीरपेटकसमुत्थापितान्जीवाकर्षणसमुपजातत्व
रान्परुषभीषणविषदिग्धान्विनतातनयनिबद्धस्पर्धाभरान्तक्षकमु
खान्बाणपन्नगान्नभोभुविचिरंनर्तयंतःपरस्परंपरिपंथिनांप्राणपव
मानमपीप्यन् ॥ ६ ॥

नरेंद्रःराजा वसुधातलनिहितःभूतलस्थापितः क्ष्वेडितमुदीर्यसिंहनादमुच्चार्य तूणीरः निषंगः जीवाकर्षणंप्राणापहरणं २ धनुर्गुणाकर्षणं परुषःक्रूरः भीषणःभयंकरः दिग्धः युक्तः विनतातनयःगरुडः तक्षकमुखंछेदकाग्रं २ तक्षकनागप्रमुखं परिपंथीशत्रुः पवमानमपीप्यन्वायुंपाययामासुः ॥ ६ ॥

(पद्यम्) कलशीतनयेऽथकार्मुकंस्वंवलयीकुर्वतिवैरिधान्वियूनाम् ॥
युधिकेवलमेवचापदंडाधृतजीवाजनदृक्पथेष्वातिष्ठन् ॥ ५४ ॥
विधातृसृष्टिंविपरीतरूपांविधातुमुद्युक्तइवैषवीरः॥ शराभिवर्षेणच
कारराज्ञामूर्ध्वंकबंधानिशिरांस्यधस्तात्॥५५॥तावद्घोटैर्वलक्षैर्वल
थिनसविधेतस्थिवांसंशतांगेभारद्वाजोजिघृक्षुर्नृपतिमभिययौभ

ल्लवर्षंविमुंचन् ॥ दंष्ट्रारोचिःशलाकास्तुमुलमवकिरन्दिक्षुसर्वासु घोरःशीतांशुमध्यसीम्निस्थितमिवपरिधेःसिंहिकायाःकुमारः ॥५६॥

कलशीतनयःद्रोणाचार्यः कार्मुकवलयीकृतंधनुःसंधानंकृतं धन्वियूनांतरुणधनुर्धराणां धृतजीवःधृतधनुर्गुणः २ धृतप्राणः ॥ ५४ ॥ विधाताब्रह्मा विधातुमुद्युक्तःकर्तुमिद्धः एषःद्रोणः कबंधंशीर्षरहितकलेवरम् ॥ ५५ ॥ वलक्षःश्वेतः शतांगितस्थिवान्रथस्थितः भारद्वाजःद्रोणाचार्यः नृपतिंजिघृक्षुःयुधिष्ठिरंगृहितुमिच्छुः भल्लवर्षंशरवृष्टिं तुमुलंनिबिडं दिक्षुअवकिरन्दिशासुवर्षन् परिधिःमंडलं शीतांशुःचंद्रः सिंहिकाकुमारःराहुग्रहः॥५६॥

( गद्यम् ) तदीयमार्गणगणाभिघातानिवर्तितमुखैर्निजशिलीमुखैः सहदूरमुपयातान्मातरिश्ववैश्वानराश्विनेयतनयप्रभृतीन्क्षितिप तिरथरक्षिणःप्रवीरानभिवीक्षमाणेनमाधवेनधाव्यमानतुरंगेणशतां गेनप्लवंगकेतनोनगेंद्रोनदीप्रवाहमिवनिर्निरोधरथचर्यंतमाचार्यमु परुरोध ॥ ७ ॥

मार्गणगणाभिघातःबाणसमूहप्रहारः दूरमुपयातःदूरंगतः मातरिश्वतनयःभीमः वैश्वा- नरतनयःधृष्टद्युम्नः अश्विनेयतनयौनकुलसहदेवौ माधवःश्रीकृष्णः शतांगःरथः प्लवंग- केतनःकपिध्वजःअर्जुनः नगेंद्रःपर्वतश्रेष्ठः रथचर्यारथगतिः आचार्यःद्रोणाचार्यः ॥७॥

( पद्यम् ) शिवयुद्धकृतस्तस्यद्रोणयुद्धेप्यभून्मनः॥ सर्वोऽपिजन ताश्रेयःकांक्षतेह्युत्तरोत्तरम् ॥५७॥ दातागृहीताचधनंजयावित्यु द्दामशब्दोभुवनेषुयस्य॥ विस्फारघोषोधनुषोऽस्यभूयान्विजृंभते स्मद्विषतामसह्यः॥५८॥ नाम्नैषांमेज्यायसः पुण्यकीर्तेरासीदिष्टं मात्स्यपुर्यामितीव॥ गांडीवोत्थैरेषबाणैर्हतानांकंकान्क्रव्यैर्विद्वि षांपर्यताप्सीत् ॥ ५९ ॥

मनःमनोरथः जनताजनसंघः श्रेयःकांक्षतेकल्याणमिच्छति ॥५७॥ धनंजयःअर्जु- नः २ अग्निः उद्दामःकठोरः भुवनंभुवनत्रयं विस्फारघोषःप्रत्यंचाशब्दः द्विषतामसह्यो विजृंभतेस्मशत्रूणांअसह्यकारीववृधे ॥ ५८ ॥ मेज्यायसःममज्येष्ठबंधोः मात्स्यपुरी विराटनगरं कंकःगृध्रः क्रव्यंमांसं द्विषःशात्रवः पर्यताप्सीत्तृप्तंचकार ॥ ५९ ॥

( गद्यम् ) तदनुसव्यसाचिशरवीचिनीचीकृतभुजदंभविजृंभःकुं भसंभवःसमरायपरिगृहीतेषुसंविधानेषुतूणीमात्रमेवप्रतिभटाभि मुखंविदधानैर्योधैःसाकंचंडभानुश्चरमगिरेरिवस्वयमपिकटकसीमा नमासीदत् ॥ ८ ॥

सव्यसाचीअर्जुनः वीचिःलहरी नीचीकृतभुजदंभविजृंभःअल्पीकृतभुजमदविकासः कुंभसंभवःद्रोणाचार्यः संविधानंयुद्धसाधनं तूणिर्निषंगः अभिमुखंविदधानःसंमुखंकुर्वाणः चंडभानुःसूर्यः चरमगिरिःअस्ताचलः कटकसीमानमासीदत्शिबिरंप्राप ॥ ८ ॥

(पद्यम्) अन्येद्युर्द्रोणसंचोदितनृपवचनेतस्थिवद्भिस्त्रिगर्तैराहूते न्यत्रयोद्धुंगतवतिविजयेकृष्णकल्पप्रसंगे॥ प्रातस्तेधार्तराष्ट्राःपर बलमभजन्वीतभीकैरनीकैर्दावज्वालेनशून्यंवनमिवचमरावल्गव द्भिःस्वयूथैः ॥६०॥ भारद्वाजोऽपितस्मिन्नहनिकुरुपतेर्वांछिता र्थंविधास्यन्रंध्रान्वेषैकतानोरथमथनिकषास्थापितेधर्मसूनोः॥ कृ ष्णाभ्यांरक्षणायप्रथितभुजमदेसत्यजित्युत्स्फुलिंगंदृष्ट्वोर्युग्मं विधायप्रतिभटपृतनाकुक्षिमाविक्षदेकः ॥ ६१ ॥ युध्वाचिरेणयु गमात्रमपास्यरथ्यान्निर्धूनितेनसरुषागुरुणानिकृत्तम् ॥ तस्याथ रंगभुविसत्यजितोवरांगंबाष्पांबुभिःसहपपातयुधिष्ठिरस्य॥६२॥ उच्चयात्वरयातस्मिन्नुपकंठंसमागते ॥ पार्थस्यपश्यतोऽग्रेतंप्राणा अपितथाचरन् ॥ ६३ ॥ तस्याथहेतृसेनाजलधिकवलनात्कुंभ योनित्वकीर्तिंस्पष्टीकर्तुंस्वकीयामिवकुतुकवतःपार्श्वमभ्येत्यको पात् ॥ भीमोरथ्यानमश्वाद्द्रुपदतनुभवःसूदयामाससूतंकोदंडके तुदंडद्वयमपिशकलीचक्रतुर्दस्रपुत्रौ ॥ ६४ ॥

संचोदितंप्रेरितं तस्थिवांसःत्रिगर्ताःस्थिताःसुशर्मादिवीराः कल्पप्रसंगःकृतसारथ्यं वीताभीःगताभीतिः अनीकंसैन्यं चमरःहरिणः यूथःसंघः दावःदावाग्निः ॥६०॥ रंध्रा-न्वेषणंछिद्रदर्शनं एकतानःएकलक्ष्यः निकषेसमीपे प्रथितंप्रसिद्धं स्फुलिंगःअग्निकणः कुक्षिमाविक्षत्मध्यभागंप्रविवेश ॥ ६१ ॥ रथ्यःरथवहःअश्वः युगमात्रमपास्यहस्तच-तुष्टयमात्रमुच्चाल्य निकृत्तंवरांगंछिन्नंशीर्षं रंगभूःयुद्धभूमिः निर्धूलितंतिरस्कृतम् ॥६२॥ उपकंठंसमागतंसमीपंप्राप्तं प्राणाःतथाचरन्प्राणाःकंठसमीपंप्राप्ताः ॥ ६३ ॥ कवलनं-नाशः कुतुकवान्आश्चर्यकर्ता रथ्यानमश्वात्अश्वान्जघान सूतंसूदयामाससारथिंजघा-न दस्रौअश्विनीकुमारौ ॥ ६४ ॥

(गद्यम्) ततस्तादृशंकुंभसंभवस्याभिषंगमभिवीक्ष्यक्रोधनतया कर्णतालसमीरणसमृद्धिपरिणतचक्रवातगर्भपरिभ्रमद्ध्वजकेतुपता कापटसहस्रसंपादितसमरसागरावर्तवशंवदफेनकूटशोभानिसकल दिङ्मुखघंटापथजांघिकघंटाभरणरणितबाधिरीकृताष्टलोकपाल

पुरजनानिर्निबिडसुरसमाजममाक्रांतगगनमंडपसंधिबंधस्थिरीक
रणायदत्तानिंद्रनीलस्तंभानिवशुंडादंडानुन्नमयमानानिसमस्ता
निहास्तिकानिपुरस्तार्द्दस्तार्यरणमत्तोभगदत्तःसुप्रतीकमधिरू
ढोहठाद्भीममभिदुद्राव ॥ ९ ॥

अभिषंगःपराभवः समीरणपरिणतःवायुसंभूतः गर्भःमध्यमंडलं सागरावर्तवशंवदः-समुद्रजलभ्रमणेनमग्नः फूटःसमूहः घंटापथःविस्तीर्णभागः जांघिकंसजवगतिः घंटाभर-णगणितंघंटावाद्यशब्दः उन्नमयमानंउन्नतंकुर्वाणं हास्तिकंहस्तिसंघः रणमत्तःयुद्धशूरः भगदत्तःवीरविशेषः सुप्रतीकःगजविशेषः हठादभिदुद्राववलात्संमुखंजगाम ॥ ९ ॥

( पद्यम् ) घोरेऽभियातेसतिसुप्रतीकेदूरंससर्पद्विषतांबलौघः॥ पर
श्वधास्त्रेपतितेंबुपूरःपत्युर्नदीनामिवपश्चिमस्य ॥ ६५ ॥ केतून्पा
तयतोरथाञ्छ्लथयतोदंतावलान्कृंततोघोटान्पाटयतोविभिद्यगद
याभीमोद्विपान्विद्विषाम् ॥ संग्रामांगणरक्तवारिलहरीसंलक्ष्यमा
णस्वकच्छायामात्रसहायमेवविदधेतंसुप्रतीकंक्षणात् ॥ ६६ ॥
पादाग्रहस्तरदनप्रतिघातलीलाभग्नारिरक्तमसृणोभगदत्तदंती ॥
आलक्ष्यतक्षितिभृतस्तटवप्रकर्मण्यालिप्तगात्रइवगैरिककर्दमेन
॥ ६७ ॥ तदनुकरटिमल्लंतत्रवीक्ष्यापतंतंदलितपरबलंतंदंतकुंतं
वहंतम् ॥ चकितहृदयवृत्तेःसंगरेवायुसूनोर्जनकगुणसमृद्धिर्जंघ
योराविरासीत् ॥ ६८ ॥

द्विषतांबलौघःशत्रूणांसैन्यसंघः परश्वधास्त्रंपरशुरामास्त्रं नदीपतिःसमुद्रः॥६५॥श्लथ-यतःशिथिलंकुर्वतः दंतावलान्कृंततःहस्तीन्छिंदतः घोटःअश्वः द्विपःहस्ती संलक्ष्यमाणा छायादृश्यमानंप्रतिबिंबम्॥६६॥हस्तःशुंडा रदनःदंतः प्रतिघातलीलाप्रहारक्रीडा रक्त-मसृणःरक्तलिप्तः दंतीहस्ती क्षितिभृत्पर्वतः वप्रकर्मदंतप्रहारक्रीडा गैरिकंपीतमृत्तिकाम् ॥ ६७ ॥ करटिमल्लःगजश्रेष्ठः दलितंनिर्दलनंकृतं चकितहृदयवृत्तिःभीतमनाः वायुसू-नोर्जंघयोःजनकगुणसमृद्धिमाविरासीत्भीमसेनःपलायनंचकारेत्याशयः ॥ ६८ ॥

(ग०) इतिसुप्रतीकसंक्षुभितनिजध्वजिनीचरकोलाहलसमाकर्ण
नसमाकुलमानसोवासवसूनुर्महेषुनिपूदितावशेषसंशप्तकदूरनिरा
सप्रयुज्यमानवायव्यास्त्रवेगार्धविभज्यनिजरथायवितीर्णवाग्निवतू
र्णमासाद्यनिर्वैलभुजगर्वदुर्विलासनोकुंभजातकिरातराजौनिरुध्य
चिरंणयोधयामास ॥ १० ॥

ध्वजिनीसेना समाकुलंव्यग्रं वासवसूनुःअर्जुनः निषूदितःहतः संशप्तकाःवीरविशेषाः वितीर्णदत्तं तूर्णमासाद्यशीघ्रंप्राप्य निर्वलविलसितंअमर्यादचेष्टा किरातराजाभगदत्तः कुंभजातःद्रोणाचार्यः ॥ १० ॥

( पद्यम् ) ततः।। मनश्चपार्थस्यरथंचहंतुंमदावलेंद्रस्यकरेप्रवृत्ते ।।
सारथ्यचातुर्यवशेनशौरेर्भग्नःसतस्यैवमनोरथोऽभूत् ।।६९।। पार्थ
स्यतस्यतदनुप्रहितावधायभंगंययौपथिशौरेर्भगदत्तशक्तिः ।। प्र
स्थानकर्मसमयेभयदायितस्यानागस्यदर्शनमजायतयत्समीपे ।।
।। ७० ।। अथतेनहरेःसुतायमुक्तंह्रदिकृत्यस्वयमात्मदैवमस्त्रम् ।।
तद्दिदंवनमालयामुकुंदःसहवास्तव्यकुटुंबितामनैषीत् ।। ७१ ।।
सफल्गुनस्तत्रचकारबाणैश्चिकीर्षुमंत्याक्षरवर्जितंस्वम्।।क्रौंचाच
लात्पीवरमप्यरातेःकरेणुमाद्याक्षरयोगशून्यम् ।।७२।। मदपंकल
लामगंधिफालंमघवत्सूनुररेर्निपात्यशीर्षम् ।। पृथुलांमुदमादधात्त
तोऽसौपृथिवीगंधवतीतिगौतमोक्तेः ।। ७३ ।। भगदत्तेवधंयातेसह
मत्तेनदंतिना ।। सत्यजिन्नाशशोकार्तिमत्यजन्पार्थसैनिकाः ।।७४।।

मनःमनोरथः मदावलःहस्ती करःशुंडा शौरिःश्रीकृष्णः तस्यसुप्रतीकस्य ॥६९॥ प्रहितात्यक्ता भंगंययौछिन्नाऽभूत् प्रस्थानंगमनंभयदायिनागःभयंकरहस्ती॥७०॥ हरिसुतःअर्जुनः आत्मदैवंवैष्णवं मुकुंदःश्रीकृष्णः कुटुंबितामनैषीत्धारयामासेत्यर्थः॥७१॥ फल्गुनःअर्जुनः अंत्याक्षरवर्जितफल्गुनःफल्गुतुच्छं अचलःपर्वतः पीवरारातिःपुष्टशत्रुः करेणुःहस्तिनी आद्याक्षरयोगशून्यंकरेणुंचकाररेणुंचकारजघानेत्यर्थः ॥ ७२ ॥ मघवाइंद्रः फालःभालदेशः ललामःतिलकः अरिःभगदत्तः पृथुलांमुदंहर्षातिशयम् ॥७३॥ यातःप्राप्तः मत्तदंतासुप्रतीकः सत्यजितनृपविशेषः शोकार्तिःशोकपीडा ॥ ७४ ॥

( गद्यम् ) तदनुनाम्नारुणेतेजसिसंध्ययापिताहशेकलशयोनिःस्व
यंनाम्नागुरुरपिताद्दग्विधस्त्रिभिरेवांगैर्विरलितेनबलेनानुगम्यमान
स्तादात्विकंस्वमनोरथमिवदूष्यतामुपगतमावासंशनैःशनैरावव्रते ११

संध्ययापिताहशःआरक्तः कलशयोनिःद्रोणाचार्यः गुरुव्यथामहद्यथा त्रिभिरेवअंगैःरथाश्वपदातिभिरेवसेनांगैः वलंसैन्यं दूष्यतामुपगतंदोषंप्राप्तं आवासमाववृतेशिबिरमाजगाम ॥ ११ ॥

( पद्यम् )शिबिरमेत्यतदैवसुयोधनःशितशरव्रणमोचितकंचुकम् ।।
मृदुलमंचगतंकलशोद्भवंविरचितांजलिरेवमभाषत ।। ७५ ।।

महारथत्वंममवांछितद्रुफलेग्रहिंनप्रतनोषियस्मात्।। कृपेतिशब्दो ऽपिबभूवनूनंह्रस्वस्त्वयिश्यालद्दवत्वदीये ।। ७६ ।।

शितशरव्रणःतीक्ष्णबाणक्षतं कंचुकंकवचं मंचगतंपर्यंकस्थितं विरचिताकृता॥७५॥ वांछितद्रुःमनोरथवृक्षः फलेग्रहिःफलवान् प्रतनोषिकरोषि श्यालःद्रोणश्यालःकृपाचार्यः कृपाशब्दःनूनंबभूवकृपाअल्पाकृता ॥ ७६ ॥

(ग०)भगवन्निदमिदानींस्मरणपथमधिरोपयचेतसासावधानेन १२॥

भगवन्गुरो सावधानताएकाग्रता श्रवणपथमधिरोपयशृणु ॥ १२ ॥

( पद्यम् ) पितामहःसोऽपिपृषत्कतल्पेवपुर्निजंमाधवमंतरंगे।। तवैवहस्तेममकार्यसिद्धिंकृत्वाहिधामस्वमियेषगंतुम् ।। ७७ ।। तमेतंदयमानेनसमेतंशोकसंपदा।।ऊचेऽथगुरुणातेननीचेतरगुणाब्धिना ।। ७८।। बाष्पातिवृष्टावपिपांडवानांपयोरुहव्यूहवितीर्णमोदान् ।। प्रातःश्वएवाखिलधार्तराष्ट्रान्प्रचारयेयंयुधिवाहिनीषु।।७९।।

पितामहःभीष्मः शरतल्पंबाणशय्या अंतरंगंमनः स्वधाममुक्तिः ॥ ७७ ॥ शोकसंपदासमेतंदुःखातिशयेनयुक्तं तंसुयोधनं नीचेतरगुणाब्धिःमहान्गुणसागरः ॥ ७८॥ बाष्पातिवृष्टिःदुःखाश्रुवर्षणं पयोरुहव्यूहःकमलाकारसैन्यरचना वितीर्णमोदःदत्तानंदः धार्तराष्ट्राःहंसाः २ धृतराष्ट्रपुत्राः वाहिनीसैन्यम् ॥ ७९ ॥

( गद्यम् ) इतिगिरातमाश्वास्यराजानंसदनायविसृष्टवतोमुहुर्मुहुरर्जुनस्यसव्यसाचित्वशैलीमनुचिंत्यहृदिरणरणिकामनणीयसींविश्राणस्यद्रोणस्यसकाशाद्विनिर्गतांनिद्रासखींविचेतुमिवसानिशाऽपितरसानिरगात्।। १३ ।।

गिराप्रतिज्ञावचनेन तंसुयोधनंविसृष्टवान्आज्ञांदत्तवान् सव्यसाचित्वंउभयहस्ताभ्यां बाणप्रक्षेपः रणरणिकाभयोच्छ्वासः अनणीयसीमहती निशारात्रिः तरसाजवेन ॥१३॥

( पद्यम् ) अपरेद्युरसौवृतोबलौघैरथभेरीनिनदैर्नभोविभिंदन् ।। कवचीविशिखीरथीशरासीकलशीसूनुरवापयुद्धरंगम् ।। ८० ।। आश्चर्यस्थूललक्ष्यंतदनुदिविपदामंतरिक्षेस्थितानांक्षोणींद्राणांरिपूणाममुमृगहरणेकूटयंत्रायमाणम् ।। गंधर्वैःकेसराढ्यैर्मदमधुभिरिभैःकेतुपत्रैःशतांगैःपद्मव्यूहंव्यतानीत्प्रधनभुविगुरुःसांपुगीनाग्रगण्यः ।। ८१ ।। समयेऽत्रनिवेद्यवैरिवृत्तंतपसःसूनुरभाषताभिमन्युम्।।अयिवत्सपिताऽन्यतोऽधुनातेतवभारोऽजनिसर्वसैन्य

रक्षा ॥ ८२ ॥ कवचंप्रतिमुंचधत्स्वचापंभजधैर्यपरितोविधेहियो
धान् ॥ अधिरोहशतांगमाविशत्वंकमलव्यूहमरीन्निपूदयस्व॥८३॥

बलौघःसैन्यसंघः अपरेद्युःअन्यस्मिन्दिने निनदःशब्दः कवचीकवचयुक्तः विशिखी-बाणयुक्तः शरासीधनुर्युक्तः कलशीसूनुःआचार्यः ॥ ८० ॥ दिविषदःदेवाः लक्ष्यःद्रा-ता क्षोणींद्रःभूपः असुमृगःप्राणरूपहरिणः कूटयंत्रायमाणःमृगबंधनजालयंत्राकारः गंधर्वःअश्वः केसराढ्यःकेशसंपन्नः मदमधुःमदभूषणः इभःहस्ती केतुःध्वजः शतांगःर-थः पद्मव्यूहंव्यतानीत्कमलं—चक्रव्यूहमकरोत् प्रधनभूःयुद्धभूमिः सांयुगीनाग्रगण्यःरण-शूरश्रेष्ठः॥८१॥तपसःसूनुःयुधिष्ठिरः पिताअर्जुनः तवभारोऽजनित्वदधीनः॥८२॥प्रति-मुंचधारय धत्स्वगृहाण परितोविधेहिभ्रमंतात्स्थापय अरीन्निपूदयस्वशत्रूञ्जहि ॥८३॥

( गद्यम् ) इतिराज्ञोनिदेशंमौलिदेशेनिवेश्ययोद्धुंप्रतिष्ठमानेज
यनिःसाणभेरीपटहपणवाद्यैर्गगनशायिनेगुणायसौख्यशायनिका
यमानेलीलयाव्यूहगर्भमवगाह्यबालेऽपिस्वयमेकाकिनिनिजको
दंडदंडचंडिमसंपदाकौरवचमूंक्षोभयमाणेसौभद्रेयेसिंधुपतिर्व्यूह
मुखंपिधायस्मरहरवरलाभदर्पेणतदनुधाविनींपांडववाहिनींक्रुधा
रुरुधे ॥ १४ ॥

निदेशंमौलिदेशेनिवेश्यआज्ञांशिरसिगृहीत्वा प्रतिष्ठमानःकृतगमनः व्यूहगर्भमव-गाह्यव्यूहमध्यंप्रविश्य चंडिमसंपदाभयंकरकर्तृत्वेन सौभद्रःअभिमन्युः सिंधुपतिःजय-द्रथः स्मरहरःशंकरः वाहिनीसैन्यम् ॥ १४ ॥

( पद्यम् ) उद्यद्भिर्युद्धरंगादपिसुरवनितापुष्पवर्षात्पतद्भिर्वेगाद्दृश्भैः
परागैर्दृढतरघटितेचक्षुषांपक्ष्मयुग्मे ॥ स्थित्वामध्येंतरिक्षंविजय
सुतभुजागर्वलीलायितानिद्रष्टॄणांखेचराणांभृशमनिमिषताक्ष
णंभंगुराऽभूत् ॥८४॥ शरशायितैर्द्विरदशैलमंडलैर्विपुलैर्विधायवि
पमांवसुंधराम् ॥ पृथुचक्रवर्तिपृथुयत्नवैभवंवितथीचकारविजय
स्यनंदनः ॥८५॥ पार्थात्मजोभानुसुतस्यसाभिच्छित्वाशतांगं
शितभल्लवृष्ट्या ॥ पितामहोक्तंकुरुराजगोष्ठ्यांतथ्यंचकारार्धरथ
त्वमस्य ॥ ८६ ॥ अथाभिमन्युर्धृतभीममन्युर्द्रौणिंतदीर्घ्यास्मि
तकांतिलक्ष्यात् ॥ बाल्येनिपीतानिवपिष्टसारानुग्रैःशरैरुद्वमयांच
कार ॥ ८७ ॥ सुतस्यशौर्यात्सुरराजसूनोरुदीर्णदिग्भ्रांतिरुदार
भीतिः ॥ कृपस्वसुर्मंगलतंतुनैवसाकंचकंपेसगुरुर्मुहूर्तम् ॥८८॥

तन्नःसंबद्धः परागःपुष्परेणुः वर्षःवृष्टिः पक्ष्मयुग्मंपक्ष्मद्वयं अंतरिक्षंनभः विजयसुतःअभिमन्युः लीलायितंक्रीडितं खेचराःदेवाः भंगुराऽभूत्भग्नासीत् ॥८४॥ शरशायितःबाणशय्यांप्रापितः द्विरदशैलमंडलंहस्तिपर्वतसंघः विषमाउच्चनीचा वसुंधराभूमिः पृथुचक्रवर्तीपृथुराजा पृथुःमहान् वैभवंवितथोचकारकीर्तिव्यर्थीचकार ॥ ८५ ॥ भानुसुतःकर्णः सामिच्छित्वाअर्धंछित्वा शितभल्लःतीक्ष्णबाणः गोष्टीसभा तथ्यंयथार्थं अर्धरथत्वंअर्धरथीतिवचनम् ॥८६॥ भीममन्युःभयंकरक्रोधः द्रौणिःअश्वत्थामा स्मितकीर्तिः हास्यवर्णःबाल्येबाल्यदशायां लक्ष्यं कपटम् ॥८७॥ सुरराजसूनुःअर्जुनः उदीर्णःउत्पन्नः उदारःमहान् कृपस्वसाकृपीद्रोणपत्नी मंगलतंतुःमंगलसूत्रम् ॥ ८८ ॥

विशिखंमुमुक्षुमथगौतमात्मजेविबुधेंद्रपौत्रमभिवीक्ष्यभीषणम् ॥
जननेविपद्यपिजनारणांगणेशरएवहेतुरितितस्यमेनिरे ॥ ८९ ॥
आश्चर्यकर्मसुकृतेष्वपिहर्षभारान्मोक्तुंमुहुर्मुहुरमुष्यशिरोजबंधे॥
दृष्टास्तदासुमनसोदिविकर्तृभूतानाकेंद्रनंदनवनेनतुकर्मभूताः ॥
॥ ९० ॥ अमुष्यकोदंडमखंडयद्रवेःसुतोरथाश्वानुममाथकुंभ
जः ॥ कृपःकृणत्तिस्मशरेणसारथिंव्यपाटयत्केतुपटान्गुरोःसुतः॥
॥९१॥ एकाकिनःपरिभवायबहून्प्रवृत्तानेतानवेक्ष्यनिखिलोऽपि
निलिंपवर्गः ॥ मंदारशाखिकुसुमानियथाभिमन्यौनिंदारवंरिपुषुत
स्यतथाभ्यवर्षत् ॥ ९२ ॥ रथादवप्लुत्यगदासखस्तदाविदार्यबा
लोविजयात्मसंभवः॥ चकारमंदाक्षभृतोनकेवलंरथानमीषांयुधि
तानपिक्षणात् ॥९३ ॥ बालौततःकृतरणौधृतराष्ट्रपौत्रौभीरूपृथ
ग्गमनकर्मणिमन्यमानः ॥ पार्थात्मजःसतुपरस्परसाध्वसंतौचक्रे
कृतांतपुरवर्त्मनिगंतुमुग्रे ॥ ९४ ॥ अथकर्णमुखामहारथास्तेमि
लिताःकैतवमेत्ययौगपद्यात् ॥ सुरनायकपौत्रमेनमस्त्रैःस्वयशो
भिःसहपातयांबभूवुः ॥ ९५ ॥

विशिखःबाणः गौतमात्मजःकृपाचार्यः विबुधेंद्रपौत्रःअभिमन्युः भीषणःभयंकरः विपद्यपिमरणेऽपि ॥ ८९ ॥ मुहुर्मुहुःवारंवारं अमुष्यशिरोजबंधेअभिमन्युकेशपाशे दिविगगने नाकंस्वर्गं कर्मभूताःमोचनंप्राप्ताः ॥ ९० ॥ कोदंडंधनुः कुंभजःममाथद्रोणःजघान कृणत्तिस्मच्छेदयामास गुरुसुतःकेतुंव्यपाटयत्अश्वत्थामाध्वजंचिच्छेद ॥ ॥९१॥ निलिंपाःदेवाः मंदारशाखीकल्पवृक्षः निंदारवःअपशब्दः॥९२॥ रथादवप्लुत्यरथादुड्डीय गदासखागदाहस्तः आत्मसंभवःपुत्रः मंदाक्षभृतःलज्जावशाः॥९३॥ धृतराष्ट्र-

पौत्रौदौःशासनिलक्ष्मणौ कृतांतपुरवर्त्मनिगंतुंचकेजघान॥९४॥ कर्णमुखाःकर्णप्रमुखाः कैतवमेत्यकपटंस्वीकृत्य यौगपद्यात्एकसमयावच्छेदेन सुरनायकपौत्रःअभिमन्युः॥९५॥

( गद्यम् ) तदनुतत्रतयोःसेनयोःक्ष्वेडितरुदितेअपिस्पर्धाजनितया परस्परविजिगीषयेवव्योमसीमानमुदलंघयताम् ॥१५॥ तदानीं जगतिनियमवृद्धपरिषदूर्ध्वविक्षिप्तकरपुटजलांजलिक्षालनादिव व्यपयातमहोमहोष्मणिपूषणितौद्वावपिबलौघौनिजनिजस्कंधा वारानुसंधानायनिरगच्छताम् ॥ १६ ॥

क्ष्वेडितंकौरवसिंहनादः रुदितंपांडवाक्रोशः जनितःउत्पादितः विजिगीषाजेतुमिच्छा व्योमसीमानंआकाशमर्यादाम् ॥ १५॥ नियमवृद्धपरिषत्स्नानसंध्यादिकर्मशूरसंघः करपुटंहस्तद्वयं महःतेजःमहोष्मणिपूषणितेजस्विनिसूर्ये बलौघःसैन्यसंघः स्कंधावारं शिविरं अनुसंधानंश्रमपरिहारम् ॥ १६ ॥

( पद्यम् )अथत्रिगर्तानपितान्क्षुरप्रैःसहस्रगर्तान्विरचय्यगात्रे ॥ विनैवहेतुंव्यथमानचेताबिडौजसोऽपिन्यवृतत्कुमारः ॥९६॥ बाष्पायतेदृष्टियुगंकराग्राच्चापोगलत्यंतरुदेतितापः॥ फलंकिमेतस्य भविष्यतीतिविचिंतयन्धामविवेशराज्ञः ॥ ९७ ॥ तत्राश्रुनेत्रान थसर्वबंधून्निशाम्यसूनोश्चनिशम्यवार्ताम् ॥ तापापदेशेनधनंजय स्यचित्तंचुचुंबस्वसमानतेजः ॥ ९८ ॥ वीरंतनूजमनुचिंत्यविला पभाजंधारालदृष्टियुगलंधरणौलुठंतम् ॥ वाग्भिश्चिरेणवसुधाधि पसंयुतस्तंविश्वंभरोऽर्जुनमपिव्यदधादशोकम्॥९९॥इंद्रात्मजस्त दनुबाहुमुदस्यकोपात्सिंधूद्वहस्यसमरोद्धपतांसमक्षम्॥हत्यांश्वए वयदितस्यशिरोनकुर्यांनस्यांविशेयमहमित्यकरोत्प्रतिज्ञाम् ।१००।

त्रिगर्तान्सुशर्मादिवीरान् क्षुरप्रःबाणः सहस्रगर्तान्सहस्रव्रणयुक्तान् गात्रंशरीरं व्यथमानचेताःव्यथितचित्तः बिडौजाकुमारःन्यवृतत्अर्जुनःनिवृत्तः॥९६॥ दृष्टियुगंबाष्पायतेनेत्रद्वयंअश्रून्त्यजति अंतरुदेतिमनसिउत्पद्यते राज्ञःयुधिष्ठिरस्य॥९७॥ सूनुवार्तां निशम्यअभिमन्युवधवार्तांश्रुत्वा अपदेशःकपटं धनंजयःअर्जुनः२ अग्निः चित्तंचुचुंबस्व समानतेजःमनसितापोबभूवेत्यर्थः ॥९८॥ वीरतनूजंवीरपुत्रंअभिमन्युं विलापभाजंविलापयुक्तं धारालदृष्टियुगलंअश्रुधारायुक्तंनेत्रद्वयं धरणिःभूमिः वाक्वचनं वसुधाधिपःयुधिष्ठिरः विश्वंभरःश्रीकृष्णः अर्जुनमशोकंव्यदधात्अर्जुनंशोकरहितमकार्षीत्२अर्जुनयु-

वृक्षमशोकवृक्षमकार्षीदित्याश्चर्यम् ॥ ९९ ॥ बाहुमुदस्यहस्तमूर्ध्वंकृत्वा द्विषतांशत्रूणां सिंधूद्वहशिरःजयद्रथमस्तकं हेतिःशस्त्रं२ अग्निज्वाला विशेयंप्रवेशंकुर्याम् ॥ १०० ॥

अथवृत्तमेतदवकर्ण्यभीरवेवितनानसिंधुपतयेप्रतिश्रवम् ॥ नवगु

प्तियुग्ममपिमेभरोर्जुनात्समरेष्वभीरितिगभीरधीर्गुरुः ॥ १०१ ॥

इत्यनंतभट्टकृतौश्रीमतिचंपूभारतेनवमस्तबकः समाप्तिमगमत् ॥ ९॥

अवकर्ण्यश्रुत्वा भीरुःसिंधुपतिःभयशीलःजयद्रथः श्रुतिश्रवःप्रतिज्ञागुप्तियुग्मंरक्षणाच्छादने मेभरःमयिभारः अभीःभीतिरहितःगभीरधीधैर्यबुद्धिः गुरुःद्रोणाचार्यः १०१

नवमस्तबकःसमाप्तः ।

---

अथदशमस्तबकः ॥

( गद्यम् ) अन्येद्युरवलंबितप्रथमशिखरिसानौभानौस्कंधावारयुगवसुंधराधिपतियुद्धसन्नाहपैशून्यलंपटपटहध्वानतरलेसिंधुराजयुगलेशरणागतभरणालंकर्मीणेनभगवतापाणिमित्रतोत्रेणपद्मनेत्रेणसौभद्रवधशोकातिरेकपरिगलितशूरजनबाष्पपूरपंकिलेद्वारतलेसमानीतंसौवीरनायकगोपनस्थलदिदृक्षयेवतुंगतरकेतुश्रृंगमधिरूढेनकपिपरिवृढेनपरिमंडितंमानसमार्गणगरुडगंधवहबांधवैःसैंधवैरोहितबंधनंस्यंदनमधिरुह्यसंक्रंदननंदनःसमरोचितवेषसंपदविकलेनसहप्रतिष्ठमानौनिरुद्धवियत्पथैर्मदबंधुरैःसिंधुरैर्विविधगतिनाटकैर्घोटकैःकृतरणासत्तिभिःपत्तिभिश्चविरचितपरिपंथिजनमोहस्यव्यूहस्यपृष्ठभागेजयद्रथंप्रतिष्ठाप्यस्वयमपिपुरोभागंपरिष्कुर्वाणस्यद्रोणस्यचरणयोर्बाणाभ्यांप्रणीतप्रणिपातस्तेनदीयमानमार्गावकाशश्चंडमारुतइवघनमंडलंतमेवव्यूहंक्षणादेवक्षोभयामास १

प्रथमशिखरीउदयपर्वतः सानुःगिरिशिखरं स्कंधावारंशिबिरं सन्नाहपैशून्यंसन्नद्धतासूचकता तरलंचंचलं सिंधुराजःजयद्रथः २ समुद्रः भरणालंकर्मीणःरक्षणसमर्थः पाणिमित्रतोत्रंहस्तधृतप्रतोदः पद्मनेत्रःकृष्णःपंकिलंकर्दमयुक्तं गोपनस्थलदिदृक्षयेवरक्षणस्थानद्रष्टुमिच्छेव मार्गणःबाणः बांधवःसदृशवेगवान् सैंधवःअश्वः संक्रंदनःइंद्रः अविकलःसहितः वियत्पथःगगनमार्गः मदबंधुरसिंधुरःमदमत्तहस्ती घोटकःअश्वः आसत्तिःसांनिध्यं परिपंथीशत्रुः मोहःगमनप्रतिबंधः प्रणीतप्रणिपातः कृतनमनं घनःमेघः १

( पद्यम् )संशप्तकासुरपलायनवेगभंगींतत्तादृशीमभिनयन्निवशौ
रिनुन्नः॥ वेगेनविस्मयकरेणविरोधिसैन्येविष्वक्चचारविजयस्य
शतांगवर्यः॥ १ ॥ तत्रनिह्नुतदिनेश्वरदीपेजृंभतेतमसिधूलिमिषे
ण ॥ खिद्यतेस्मयुधिपांडवसेनाहृष्यतेस्मसहसाकुरुसेना ॥ २॥
गांडीवमेतेनमुहुर्विकृष्टंह्रस्वंचदीर्घंचबभूवयुद्धे ॥ तुलामिवर्णेन
सहाधिरोढुंस्वनामधेयस्थितिशालिनेव ॥ ३ ॥ अस्तंगतश्चेदरविं
दबंधुर्वंध्याभवेत्सापिमदीयसंधा ॥ इतीवसंक्रंदननंदनोसौतदी
यमार्गंरुरुधेशरौघैः ॥ ४ ॥ मृत्संगतेनोष्ठपुटेनभूभुक्संबंधितांस्पृ
ष्टमिवब्रुवाणैः ॥ धनंजयोऽसौशितभल्लकृत्तैःशिरोभिराच्छादयति
स्मधात्रीम् ॥ ५ ॥ कंकंकंककुलामिषंधृतविपल्लिंगंकलिंगंपुनर्भो
जंभाजनमापदांयमपुरीसीमारुधंमागधम् ॥ चोलंदुःखनिचोल
चित्तमिषुभिःकुर्वन्सुपर्वाधिभूपुत्रस्तत्रदिनावसानसमयेरुंधेस्मसिं
धूद्वहम् ॥ ६ ॥

असुरःदैत्यांशभूतवीरः भंगींक्रमं अभिनयन्दर्शयन् नुन्नःप्रेरितः विस्मयकरःआश्च-
र्यप्रदः विष्वक्समंतात् ॥ १ ॥ दिनेश्वरःनिन्हुतःसूर्याच्छादितः तमोजृंभतःअंधःकार-
वृद्धिंगतः मिषंकपटम् ॥ २ ॥ मुहुर्विकृष्टंवारंवारमाकर्णमाकृष्टं वर्णतुलागांडीवशब्द-
स्यअक्षरसादृश्यं स्वनामधेयस्थितिह्रस्वदीर्घस्थितिः ॥ ३ ॥ अरविंदबंधुःसूर्यः वंध्या-
संधानिष्फलाप्रतिज्ञा तदीयमार्गंसूर्यमार्गम् ॥ ४ ॥ मृत्संगतःमृत्तिकायुक्तः भुवंपृथ्वीं
भुंजतेपालयतिसःभूभुक् स्पृष्टंब्रुवाणःसूचकः शितभल्लकृत्तंतीक्ष्णशरछिन्नम् ॥ ५ ॥ कं-
ककुलामिषंग्रध्रसंघभक्ष्यं विपल्लिंगंमृत्युचिन्हं आपद्भाजनंमरणपात्रं दुःखनिचोलंदुः-
खव्याप्तं इषुःबाणः सुपर्वाधिभूःइंद्रः सिंधूद्वहंरुंधेस्मजयद्रथसमीपदेशंजगाम ॥ ६ ॥

तत्रांतरे॥ भूपस्तूत्तपमानधीर्भयभराज्ज्ञातुसुरिंद्रात्मभूवार्तांसा
त्यकिमाहृतीरिपुचमूव्यूहंप्रतिप्राहिणोत् ॥ जित्वातांरिपुमात्तसिं
हनिनदांसंवीक्ष्यभूरिश्रवाराधेयश्चहठादुभौरुरुधतुःसंक्षोभयंतौकु
रून्॥७॥अथसोमदत्ततनुजोरमापतेरनुजश्चभग्नरथसूतकार्मुकौ॥
परिगृह्यपट्टिशलतांपरस्परंप्रधनंभयानकमुभौवितेनतुः ॥ ८ ॥
अथशिनितनयंनिपात्यभूमावुरसिधृतासिरसौतुसोमदत्तिः ॥ ग
लयितुमिवगर्वसारमंतर्निजचरणेननिपीडयांबभूव ॥ ९ ॥ तदा
हरिर्दूरगतोऽपिनाक्षंव्यापारयामासरथेऽर्जुनस्य ॥ निजानुजातोर

सिदत्तपादेभूरिश्रवस्येवमहारथेऽस्मिन्॥१०॥ चोदितस्यहरिणा
किरीटिनोमार्गणेनहृतहस्तपल्लवः ॥ सोमदत्ततनुजोनकेवलंकौर
वाअपिविहस्ततांययुः ॥ ११ ॥ भूरिश्रवास्तदनुपुत्रममुंबलारेर्भू
योविगर्ह्यपुरुषोत्तमसन्निधाने ॥ आचम्यपावनमसौकुशमेकम
न्यमास्तीर्ययुद्धभुवितत्रशयालुरासीत् ॥ १२ ॥

तपमानधीःभूपः] दुःस्वव्याप्तबुद्धिःयुधिष्ठिरः इंद्रात्मभूःअर्जुनः मारुतिंप्राहिणोत्भीमंप्रेषयामास तौसात्यकिभीमौ आत्तःक्षतः राधेयःकर्णः सोमदत्ततनुजःभूरिश्रवाः रमापतेरनुजःसात्यकिः पट्टिशःखड्गाकारशस्त्रं प्रधनंवितेनतुःयुद्धंचक्रतुः ॥ ८ ॥ शिनितनयःसात्यकिः असिःखड्गः सौमदत्तिःभूरिश्रवाः अंतःचित्तस्थितः ॥ ९ ॥ हरिःतस्मिन्अक्षंव्यापारयामासश्रीकृष्णःभूरिश्रवसंददर्श हरिरथेअक्षंनव्यापारयामासश्रीकृष्णःरथगमनेहस्तचलनंनउत्पादयामास ॥ अनुजातःसात्यकिः ॥ १० ॥ किरिटी अर्जुनः हृतःछिन्नःविहस्तताव्याकुलता मार्गणःबाणः ॥ ११ ॥ बलारिःइंद्रः भूयोविगर्ह्यबहुनिंदांकृत्वा पुरुषोत्तमःश्रीकृष्णः कुशःदर्भः कुशंउदकं शयालुःसमाधिस्थः १२

( गद्यम् ) तदनुहिडिंबवैरीदिननायकसुतसाहाय्यकेनभयानकसा
यकनिकायवर्षिणाममर्षिणांदर्पेणगरीयसांदुःशासनयवीयसामुज्जास
यितुंविदलितविमतमदांनिजगदामष्टाभिःकाष्ठाभिःसमंभ्रामयामास २

साहाय्यकःयुक्तः सायकनिकायःशरसमूहः अमर्षीकोपवान् गरीयान्महान् यवीयान्कनिष्ठबंधुः उज्जासयितुंहंतुं काष्ठादिक् ॥ २ ॥

( पद्यम् ) गांधारजाजठरसीम्निपुराश्मदत्तांदत्वादशांयुधिगदापव
मानसूनोः॥दुःशासनानुजकुलायहियौगपद्यांचक्रेमिथोऽष्टनवतिं
त्रिदशीस्तुयातॄः ॥ १३ ॥ विहयंविरथंविसारथिंविशरासंविपता
किकापटम् ॥ विशिखेनविवस्वतःसुतंविदधातिस्मवृकोदरःक्ष
णात् ॥१४॥ अथान्यमासाद्यरथंक्षणेनकर्णःकुरूणांधुरिकार्मुक
स्य ॥ पूर्वगुणेनाशुगजातमेकंपश्चादटन्याप्यपरंनिरास्यत् ॥१५॥
मारुतिस्तदनुसोमदत्तभूपादपांसुपरिधूसरोरसा ॥ कंसमर्दनकनी
यसासमंशक्रनंदनसमीपमापसः ॥ १६ ॥

गांधारजागांधारी जठरसीम्निहृदये अश्माशिला पवमानसूनुःभीमः त्रिदशीअप्सराः यातृवंधुभार्याअनुजेभ्यःत्रिदशीस्तुयातॄःचक्रेअनुजानजघानेत्यर्थः ॥ १३ ॥विपताकिकापटंध्वजवस्त्रहीनं विशिखःबाणः विवस्वान्सूर्यः वृकोदरःविदधातिस्मभीमः-

चकार ॥ १४ ॥ आसाद्यआरोहणंकृत्वा कार्मुकंधनुः आशुगःबाणः अटनीधनुष्याग्रं अपराशुगःअन्यशरः निरास्यत्‌विससर्ज ॥ १५॥ मारुतिर्नृभीमः पादपांसुः- चरणधूलिः धूसरोरःकिंचित्‌पांडुवक्षस्थलः कंसमर्दनकनीयाःसात्यकिः शक्रनंदनमापसःअर्जुनंप्राप ॥ १६ ॥

( गद्यम् ) तदनुतदनुजपरिपंथिनिशरपुंजेनकुरुकुंजरान्भंजयंतं धनंजयंतंसुतवधेनकृतमंतुंरिपुंनिहंतुमादिश्यदलितदैत्यचक्रेणनिजचक्रेणचंडकरमंडलंपिधानेगभस्तिमानस्तमहास्तेऽतिसमस्तनिजवलकोलाहलमाकर्ण्यदुःशलाजानिर्मुदासनिजवदनमुदास ॥३॥

दनुजपरिपंथीदैत्यारिः श्रीकृष्णः कुंजरान्‌भंजयंतंवीरान्निघ्नंतं कृतमंतुःकृतापराधः रिपुंनिहंतुमादिश्यजयद्रथंनिहंतुमाज्ञाप्य दलितचक्रंहतकुलं चक्रंसुदर्शनं चंडकरपिधानंसूर्याच्छादनं गभस्तिमानस्तमहास्तसूर्यःअस्तमगमत् आकर्ण्यश्रुत्वा दुःशलाजानिःजयद्रथः मुद्‌हर्षः वदनमुदासमुखमूर्ध्वंचकार ॥ ३ ॥

तदाप्रकाशस्यदिवाकरस्यतिरोहितस्यापिजयद्रथस्य ॥ अदर्शनायापिचदर्शनायसुदर्शनंहेतुरभून्मुरारेः॥ १७ ॥ सकलमपिजगंतिचक्रयूथंसवितुरदर्शनतःसखेदमाहुः ॥ समरभुविकथंनुशौरिचक्रंतपनतिरोभवनंतपाचकांक्षे ॥ १८ ॥ तावत्किरीटीतरुणेंदुमौलेर्वदान्यताकीर्तिवदावदेन ॥ शरेणशत्रोरलुनीतशीर्षंसाकंप्रमोदेनसकौरवाणाम् ॥ १९॥ वृद्धक्षत्रांजलौसायंनालमर्घ्यायकंधृतम् ॥ इतीवसिंधुराजस्यजिष्णुस्तस्मिन्न्यपातयत् ॥ २० ॥ एतत्किमित्ययमपास्यसुतस्यशीर्षंशीर्यन्स्वमूर्धनिवरेणशशांकमौलेः ॥ क्षोण्यामवाङ्मुखतयानिपपातवेगाद्राघातुकामइवतत्सुतवत्सलत्वात् ॥ २१ ॥

तिरोहितःगुप्तः हेतुःकारणं मुरारिःश्रीकृष्णः ॥ १७ ॥ चक्रयूथःचक्रवाककुलं २ चक्रगणः सवितर्दर्शनंसूर्यास्तः तपनतिरोभवनमाचकांक्षेसूर्याच्छादनमिच्छतिस्म ॥ ॥ १८ ॥ इंदुमौलिःश्रीशंकरः वदान्यताकीर्तिवदावदः प्रसादलब्धः शीर्षमलुनीतमस्तकमच्छित् ॥१९॥ क्षत्ताजयद्रथपिता सायंसूर्यास्ते नालंनपूर्णं कं उदकं २ मस्तकं अर्घ्यायअर्घ्यदानाय जिष्णुः अर्जुनः सिंधुराजः जयद्रथः॥२०॥अपास्यत्यक्त्वा स्वमूर्निशीर्षन्‌स्वशीर्षेभंगंप्राप्नुवन्‌शशांकःचंद्रः क्षोणीभूमिः अवाङ्‌अधः आघ्रातुंअवघ्राणंकर्तुं कामःइच्छा वत्सलत्वंप्रेम ॥ २१ ॥

( गद्यम् ) अथतस्मिन्वासवसूनौवासरविरामेशिबिरमेत्ययथावृत्तं रणकथांविज्ञाप्यहृष्टरोमाणंराजानमुपतिष्ठमानेसुयोधनस्तुक्रोधनतयाभगिनीजानिनिधननिदानतयासर्वामपिशर्वरींनियोद्धुकामःसन्गंभीरयुद्धारंभभेरीनिध्वानमुज्जृंभयामास ॥ ४ ॥ एतेतदाकर्ण्यसमयवैज्ञानिकाःस्मरणमात्रकृतसंनिधानंनिशिदशगुणितभुजबलावलंबंहिडिंबभागिनेयंपृथक्प्रस्थाप्यस्वयमपिनिजबलानिसन्नाह्यसंयुगायसंयुगायतबाहवःशक्रसुतादयोनिश्चक्रमुः॥५॥

वासरविरामःसायंकालः हृष्टरोमाउद्गतरोमांचः राजाधर्मराजा उपतिष्ठमानः हर्षवान् भगिनीजानिनिधननिदानंशालकजयद्रथवधकारणं शर्वरीरात्रिः निध्वानमुज्जृंभयामासशब्दंप्रकटीकारयामास ॥ ४ ॥ समयवैज्ञानिकःकालज्ञः कृतसंनिधानःकृतसान्निध्यः भुजबलावलंबःभुजबलधारी हिडिंबभागिनेयःघटोत्कचः सन्नाह्यसन्नद्धंकृत्वा संयुगायतौसमानदीर्घौ शक्रःइंद्रः संयुगायनिश्चक्रमुःयुद्धार्थंनिर्जग्मुः ॥ ५ ॥

( पद्यम् ) यातारकामेसततंविरुद्धातांबिभ्रतीमाइतिबद्धरोषम्॥ सर्वेंद्रियेसत्यपिसैनिकानांमार्गंदृशामेवतमोरुरोध ॥ २२ ॥ शर्वर्याश्चिकुरेमनोजशिखिनोधूमेनभोरण्यभूजंबूशाखिनिपेचकांडजदृशामालोकसिद्धांजने ॥ चेलेकालहलायुधस्यतमसामुज्जृंभणे तादृशेप्यह्नोवाहवशिल्पमद्भुततरंचक्रुर्द्वयेसैनिकाः ॥ २३ ॥ प्रधनेद्भुतेऽपिनिशिनारददृष्टेःप्रथमेतरान्यलसदोतिरुदग्रा॥वनिताअपित्रिदशनाथनगर्यावरणस्रजंचिकुरएवबबंधुः ॥ २४ ॥ अमीपुयुद्धदिवसेष्वयमेवहिकामुकः ॥ रणोत्सवेविभज्यार्द्धंरात्रयेऽपिददौयतः ॥ २५ ॥ ततःक्षणादेवघटोत्कचोऽसौसंग्रामसीमोपरिजृंभमाणः ॥ तमीमिमांसांद्रतमांतमोभिर्दंष्ट्राप्रभाभिर्दिवसंवितेने ॥ २६ ॥ तिष्ठद्रोणसुयोधनद्रुततरंधावस्वदुःशासनत्वांमुंचामिकिमार्यभोकृपकृपालेशोऽपिनत्वत्कृते ॥ गांधाराधिपकाकथातवरणेदुर्मेधसामग्रणीःकर्णःक्वेतिघटोत्कचःकटुरवोव्यभ्राम्यदभ्रांतरे ॥ २७॥ हैडंबेयममुंनिजाट्टहसितक्षुभ्यद्दशाशामुखंदंष्ट्रांकूरकरालमात्तपरशुंदृष्ट्वैवकेचिद्भटाः ॥ बिभ्युश्चक्षुरमीमिमीलुरवनौपेतु

र्मुमूर्च्छुर्जह्नुः प्राणानारुरुहुर्विमानममरीः प्रापुः प्रमोदं दधुः ॥२८॥
नभसितमभिवीक्ष्यघोररूपंदिशिदिशितत्रपलायितेनृपौघे ॥ म
रणसमयमुपेत्यलग्नशस्त्रस्तदभिमुखः प्रययौकबंधएव ॥ २९ ॥पि
तुश्चपुत्रस्यचवेदवाक्यैर्यदुक्तमैकात्म्यमिदंहिदृष्टम् ॥ भीमात्म
जोहिस्वयमेवयुद्धेभीमोयदासीदरिसैनिकानाम् ॥ ३० ॥ भिंदी
पालैस्तोमरैः शूलजालैर्वर्षैरुग्रैश्चोभयेषांनगानाम् ॥ दृष्टः कापि
काप्यदृष्टोरिसैन्यंव्योम्निस्थित्वानाम्निशेषंसचक्रे ॥ ३१ ॥ स्व
स्वक्षयंनागमदद्यरात्रौदुर्योधनस्यध्वजिनीतिमत्वा ॥ पितृव्यभ्र
त्त्येवसभीमसूनुस्तत्रैवतस्याः क्षयमाततान ॥ ३२ ॥ तत्रांतरे॥
वाहिन्याएवमेनार्द्धेमेदिन्याअपिनंक्ष्यति ॥ क्षणंयुध्येतचेदेषइ
तिमेनेसुयोधनः ॥ ३३ ॥

तारकानक्षत्रं २ कनीनिका वद्धरोषंतमः धृतक्रोधांधःकारः दृशांनेत्राणाम् ॥२२॥ चिकुरः केशपाशः मनोजशिखीमदनाग्निः नभोरण्यभूः आकाशरूपवनभूमिः शाखीवृक्षः पेचकांडजः उलूकपक्षिः सिद्धांजनंदृष्टिप्रदकज्जलं कालहलायुधचेलंकालरूपबलरामवस्त्रं तमसुजृंभणंअंधःकारप्राबल्यं आहवंयुद्धम् ॥ २३ ॥ उदग्राप्रथमेतरायलसत्महत्य- नावृष्टिः विललास त्रिदशनाथवनिताअप्सराः स्रक्‌माला ॥२४॥ अयंदिनः कामुकः- स्त्रीसक्तः रणोत्सवः युद्धोत्साहः ॥ २५ ॥ संग्रामोपरियुद्धोर्ध्वभागे जृंभमाणःमहाश- रीरंदधानः तमींरात्रिं सांद्रंनिबिडम् ॥ २६ ॥ द्रुतंशीघ्रं कृपः कृपाचार्यः गांधाराधि- पःशकुनिः दुर्मेधाः दुर्बुद्धिः अग्रणीःश्रेष्ठः कटुरवः भयंकरशब्दः अभ्रांतरेव्यभ्राम्यत्आ- काशमध्यभागेभ्रमणंचकार ॥२७॥ हैडंबेयः हिडिंबापुत्रः अट्टहासः भयंकरहास्यशब्दः आशादिक् अंकुरःअग्रं करालंभयंकरं आत्तंधृतं भटःवीरः विष्णुः भीतिंप्रापाः चक्षुमि- मिलुःनेत्रमेलनंचक्रुःअवनीपृथ्वी अमरीअप्सराः ॥ २८ ॥ नृपौघः नृपगणः लग्नंसंलग्नं अभिमुखंसंमुखं कबंधंशीर्षरहितशरीरम् ॥ २९ ॥ ऐकात्म्यंएकरूपता भीमःभीमसेनः २ भयंकरः ॥ ३० नाराचतोमरभिंदिपालाः शस्त्रविशेषाणि जालंसमूहः नगःवृक्षः २ पर्वतः व्योमगगनं नाम्निशेषंनष्टम् ॥ ३१ ॥ ध्वजिनीसैन्यं क्षपंशिबिरं २ नाशं पि- तृव्यःपितृभ्रातासुयोधनः अततानददौ ॥ ३२ ॥ वाहिनीसैन्यं मेदिनीपृथ्वी नंक्ष- तिनक्षयंप्राप्स्यति अर्धंअर्धसैन्यं २ ॥ अधभूमिम ॥ ३३ ॥

( गद्यम् ) इत्थंनितांतचिंतासंतानादार्तस्यसंप्रार्थनगुणनिकयासं
भृतसर्वाभिसारोमिहिरकुमारोवज्रधारयामहेंद्रोमहीध्रमिवतेनद
त्तयावल्लक्षाश्वक्षपणदक्षेयमितिचिररक्षितयामहत्याशक्त्यावक्ष

स्तिनिर्भेद्यक्षणेनतंक्षणदाचरंक्षितौपातयामास ॥ ६ ॥

नितांतंअत्यंतं संतानार्तःजालव्याप्तः प्रार्थनगुणनिकयापुनःपुनःप्रार्थनाकरणेन संभूतःतत्परः मिहिरकुमारःसूर्यपुत्रकर्णः महीध्रःपर्वतः वलक्षाश्वक्षपणःअर्जुननाशः क्षणदाचरःराक्षसः घटोत्कचः क्षितिःभूमिः ॥ ६ ॥

( पद्यम् ) पौत्रस्यतस्यप्रबलप्रसिद्धेःप्रहारपीडांप्रतियोधितत्ताम्॥ अपारयन्द्रष्टुमिवातिघोरामंतःस्थितोवायुरगाद्बहिष्टात् ॥ ३४ ॥ सापिशक्तिरभिहत्यनराशंसांयुगीनजनसन्नुतशौर्यम् ॥ वायुसूनु परिघादिवभीतावासवस्यसविधंप्रतिपेदे ॥ ३५ ॥

वायुपौत्रःघटोत्कचः प्रतियोधीशत्रुः अपारःअशक्तः बहिः बहीर्भागः ॥ ३४ ॥ नराशंघटोत्कचं सांयुगीनसन्नुतंरणशूरस्तुतं परिघःगदा वासवसविधंप्रतिपेदेइंद्रसमीपंजगाम ॥ ३५ ॥

( गद्यम् ) तदानींतेषांकौंतेयकौरवसैन्यानांवाष्पलहरीमुत्पादयितुंमोदविषादयोरहमहमिकयास्पर्धासमवर्धत ॥ ६ ॥ अथजयद्रथघटोत्कचनिधनशोकातिशयगुरून्हयानपिकुरूनाश्वासयितुमिवकुरुकूटस्थेकुमुदबांधवेकुलिशायुधदिशामेत्यकाशनीकाशैरभीषुभिराकाशदिशावकाशंव्याकोचमानेसतिकोपेनकुटिलीकृतचापौद्रुपदविराटभूपौद्रुतमनीचैर्नाराचैराचार्यशललैःशल्यमृगमिव निबद्धतनुमातेनतुः ॥ ७ ॥

कौंतेयःकुंतीपुत्रः बाष्पलहरीअश्रुपरंपरा मोदविषादौहर्षशोकौ अहमहमिकाकृत्यसमर्थताढ्यता ॥ ६ ॥ गुरुःजडत्वयुक्तः हयानपिकुरूनपांडवान् २ धृतराष्ट्रपुत्रान् कूटस्थःमूलपुरुषः कुमुदबांधवःचंद्रः कुलिशायुधदिक् पूर्वादिक् काशनीकाशंतृणसमशुभ्रं अभीषुःकिरणः व्याकोचमानंप्रकाशमानं आचार्यद्रोणं शललंअंगरोम शल्यमृगःपशुविशेषःनिबधतनुमातेनव्याप्तदेहंचकार ॥ ७ ॥

( पद्यम् ) तस्यार्धमग्नानाराचास्तन्वांतद्विक्रमश्रियः॥ रोचंतेस्म प्रत्दृष्यंत्यारोमांचानामिवांकुराः ॥ ३६ ॥ अग्निवेश्येनानिक्षिप्तम थोभौद्रोणपार्षतौ ॥ कोदंडविद्यासर्वस्वंकुर्वातेस्मप्रकाशितम्॥३७॥

तन्वर्धमग्नःअर्धदेहंगतः श्रीःलक्ष्मीः हृष्यंतीहर्षप्राप्नुवती रोचंतेस्मशुशुभिरे ॥ ॥ ३६ ॥ अग्निवेश्यःद्रोणशिक्षकः निक्षिप्तंस्थापितं कोदंडविद्याधनुर्विद्या पार्षतःद्रुपदः सर्वस्वंप्रकाशितंकुर्वातेस्मरहस्यंप्रकटीचक्रतुः ॥ ३७ ॥

(गद्यम्) ततःशरसंभवभगिनीजानेश्चापचतुमुखःसम्बद्धविश्राणि तविकृतवेषयोरपिविशिखमोचनसृष्टिशिल्पेनविलोभनीयविग्रही कृतयोर्विराटपांचाल्ययोरहंपूर्विकःवरणोत्सवयौगपद्येसतिविबुध पुरविलासिनीनांबिडौजःकुटुंबिन्याअपिदुःसमाधांविवादमापाद यामास ॥ ८॥ अथतत्रशर्वरीचरभुजगर्वनिर्वातपर्वतशृंगशिला विभंगपाटितशरीरेवसंध्यारागमिषेणरुधिरधारामुत्सृजंतीसानिशा पिविनाशदशामाशुसमाविवेश ॥ ९ ॥ तदनुकोककुटुंबिनीनांन र्मकरणेमहसिसमारूढविहायसिक्रोधनिद्रानिरोधसाधारणीभवद दरुणिमदृक्प्रतिफलनैरायोधनधरणीरुधिरधुनीषुपंकेरुहाण्यंकुर यंतोघटोत्कचविराटपांचाल्यपंचताप्रपंचद्वैरभारतयागुरोरायुर्हंतुम लीकाक्षरंपरिमार्ष्टुमलीकंवचनमेकंभवताप्रयुज्यतामितिधर्मजात मनुकूलयंतोवसुदेववासवकुमारादयःप्रथमंसन्निकृष्टस्यधृष्टद्युम्न स्यवरूथिनीविमाथिनींवारणधोरणींप्रचेताइवपयोधरपरंपरांपुरो धायभृशंखस्यगुणंशंखस्यपरिपूरणेनदुर्वहंकुर्वंतंकौरवसेनापतिम भिजग्मुः ॥ १० ॥

शरसंभवभगिनीजानिःद्रोणः चापचतुर्मुखःचापरूपविधिःविश्राणितविकृतवेषःदत्त- विकृताकारः विशिखःबाणः यौगपद्यंएककालत्वं विबुधाःदेवाः बिडौजाःइंद्रः दुःसमा- धःसमाधानकर्तुमशक्यः विवादःकलहः ॥ ८ ॥ शर्वरीचरःघटोत्कचः निर्वातःप्रपकः पाटितंविदीर्णकृतं विनाशदशासमाविवेशगताइत्यर्थः ॥ ९ ॥ कोकःचक्रवाकः नर्म- करणेरत्युत्पादके महसितेजसि विहायसिआकाशे अरुणिमदृक्आरक्तदृष्टिः प्रतिफ- लनंप्रतिबिंबं धुनीनदी पंचतामरणं अलीकाक्षरंपरिमार्ष्टुं ललाटलिखितंनाशितुं अली- कवचनंप्रयुज्यतांअसत्यभाषणोच्चार्यं सन्निकृष्टःसमीपप्राप्तः वरूथिनीसैन्यं विमाथिनी- नाशकर्त्री वारणधोरणीगजपंक्तिः प्रचेतावरुणः ॥ १० ॥

(प०) कोपेनतावत्कुटिलःसभीमःकुंभानभांक्षीद्द्रदयाद्द्विपानाम् ॥ नामैकदेशोऽपिचकुंभयोनेरेतैर्धृतोभूदितिमत्सरीव ॥ ३८ ॥

कुटिलंभयंकरं कुंभानभांक्षीत्गंडस्थलानस्फोटयत् द्विपःहस्ती कुंभयोनिःद्रोणः एतैः हस्तिभीः मत्सरीवमत्सरधृतःसन्निव ॥ ३८ ॥

(गद्यम्) तत्रतांकरिघटांपाटयताघटोत्कचजनकेनद्रोणसुतस्य सनाम्निहस्तिनिनिपातितेसतिप्रचुरमदःस्ववशानुवर्तीशुभतरम

णिदेदीप्यमानमस्तकोयमश्वत्थामाहृतइतिधर्मतनयनिगदितंक
र्णारुंतुदमभ्यर्णमाकर्ण्यवैवर्ण्यभरितवदनंसुतशोकमोहेनपरित्य
क्तचापशयंस्थंडिलेशयंभारद्वाजमालोक्यहृष्टधीर्धृष्टद्युम्नोनिज
पितृवंधनस्मृतिजनुषारुषासत्वरमभिहंतुमुदयुंक्त ॥ ११ ॥

करिघटाहस्तिकुलं द्रोणसुतनामहस्तीअश्वत्थामानामधरहस्ती मदःमदोदकं २ गर्वः शुभतरःशुभ्रः अरुंतुदंमर्मस्थानस्पृक् अभ्यर्णसमीपभागं वैवर्ण्यविस्कलिताक्षरं शयःहस्तः स्थंडिलशयःनिषण्णः भारद्वाजःद्रोणाचार्यः हृष्टधीःहर्षवान् अभिहंतुमुदयुंक्त घातयितुंसिद्धोवभूव ॥ ११ ॥

( पद्यम् ) एकेनखड्गंद्रुपदस्यसूनुःकरेणचान्येनकचंगृहीत्वा ॥ वि
लूयशीर्षंगुरुमप्यमुंद्रागंतेवसंतंकलयांचकार ॥ ३९ ॥ तत्तादृशं
तदनुतातवधंनिशम्यकोपातिरेककलुषःकृपभागिनेयः ॥ आग्नेय
मस्त्रममुचत्परसैनिकानामक्षौहिणीशलभतांलभतेस्मयस्मिन् ॥
॥ ४० ॥ ततःसुराधीश्वरसूनुमुक्तब्रह्मास्त्रभासाभृशधिक्कृतेन ॥
अस्त्रेणसार्धंगुरुनंदनस्यमंदायमानद्युतिरासभानुः ॥ ४१ ॥ धृत
राष्ट्रसुतोपिगेहमागाद्दिनदीपांकुरदीनदीनदीप्तिः ॥ शकलीकृत
बाहुकर्णनासैःसहयोधैःसघटोत्कचाश्मवर्षात् ॥ ४२ ॥ इत्यनंत
भट्टकृतौश्रीमतिचंपूभारतेदशमस्तवकःसंपूर्णतामगमत्

कचःकेशः शीर्षविलूयमस्तकंछित्वा अमुंद्रागंतेवसंतंकलयांचकारशीघ्रंद्रोणंजघानेत्याशयः ॥ ३९ ॥ कोपातिरेककलुषःक्रोधक्षुब्धः कृपभागिनेयःअश्वत्थामा शलभतांलभतेपतंगत्वंभाप ॥ ४० ॥ सुराधीश्वरःइंद्रः भाःतेजः द्युतिःकांतिः भानुः सूर्यः ॥ ४१ ॥ दीनदीपांकुरःतेजोहीनदीपः दीनदीनदीप्तिःअतिदीनतेजः अश्मवर्षः शिलावृष्टिः शकलीकृतंत्रुटितं योधःवीरः ॥ ४२ ॥

इति दशमस्तबकःसमाप्तः ॥

---

## अथ एकादशस्तबकः ॥

( पद्यम् ) अन्येद्युरब्धिमिलितैरसृगापगानांपूरैरिवोदयतिपूषणि
शोणितांगे ॥ सेनाधिपत्यसरणौधृतराष्ट्रसूनुःकर्णंसुवर्णघटवारि
भिरभ्यषिंचत् ॥ १ ॥ आभामतानीदभिषेककालेतस्योपरिष्टा
त्तपनीयकुंभः ॥ आघ्रातुमात्मप्रभवोत्तमांगंसमीपयातस्यसरोज

बंधोः ॥ २ ॥ दिङ्मूलशैलकुहरेशयकेसरींद्रसौशप्रमुत्तिकमहाप टहारवेण ॥ कर्णोबलेनकरनर्तितकालपृष्ठोजन्यस्थलीमभिरथेन जवाज्जगाहे ॥ ३ ॥ तावत्परेषांध्वजिनीश्वरोपिपदंव्यधत्तप्रधन प्रदेशे ॥ परिस्फुरत्पट्टिशखेटशक्तिशरासतूणीरशरैर्बलौघैः ॥ ४॥ चमूद्वयीसातदनुप्रगल्भाप्रसृत्वरैर्व्योमनिपांसुपुंजैः ॥प्रागेवशुद्धा मपिसिद्धसिंधुंविचित्रमेतद्व्यतनोदपापम् ॥ ५ ॥ पादातंपादातं रथ्यांरथ्याचहस्तिकंगजता ॥ आश्वंचाश्वीयंद्रागभिदुद्रावप्रकं पितमहीकम् ॥६॥

अब्धिःसमुद्रः असृगापगारक्तनदी शोणितांगःरक्तवर्णः पूषासूर्यः सरणिःपदवी ॥ १ ॥ आभामतानीत्कांतिमुत्पादयामास तपनीयंसुवर्ण आत्मप्रभवाघ्रातुंपुत्रावघ्रा- णंकर्तु उत्तमांगंशीर्ष सरोजबंधुसूर्यः ॥ २॥ शैलकुहरंपर्वतदरी शयःस्थितः केसरींद्रः- सिंहः पटहारवःदुंदुभिशब्दः बलंसैन्यं काठपृष्ठंकर्णधनुः जन्यस्थलींजवाज्जगाहेवेगात्- समरभूमिंप्रविवेश ॥ ॥ ३ ॥ ध्वजिनीश्वरःसेनापतिः धृष्टद्युम्नः प्रधनप्रदेशेपदंव्यध- त्तसमरभूम्यांजगाम ॥ ४ ॥ परिस्फुरत्प्रकाशयत् पट्टिशःआयुधविशेषं बलौघःसैन्य- संघः प्रसृत्वरःप्रसरणशीलः पांसुपुंजःधूलिजालं सिद्धसिंधुःआकाशगंगा अपापापाप- रहिता २ जलरहिता ॥ ५ ॥ पादातंपत्तिसंघः रथ्यारथिसमूहः गजताहस्तिसंघः महीकंपृथ्वीम् ॥ ६ ॥

विरोधिसेनामभिवीक्ष्यकोपाद्विस्फारिताभानुसुतेनचापात् ॥ वि जृंभमाणंतरसागुणंस्वंवियत्समस्तंनशशाकवोढुं ॥ ७ ॥ कुरुच मूपतिबाणविदारितादुदपतन्मणयःकरिमस्तकात् ॥ सुतविदी र्णनिजास्पददुर्दशांद्युमणयेविनिवेदयितुंकिल ॥ ८॥ अनेकधा दत्तभिदास्यबाणैररातिखेटावलिराबभासे ॥ भीमीडखेदावकरा द्गृहीतुंपृथक्तयासून्यमचालनीव ॥ ९ ॥ तदनुबाणगणैर्द्युमणेःसु ताधृतविपत्तिसपत्तिकदंबकं ॥ अतिविषादिनिषादिकुलंव्यधा द्यमपुरीपथिकान्नथिकानपि ॥ १० ॥ अग्रेसरःकर्णहतेषुकश्चि द्भटःप्रविष्टोरविरंध्रमार्ग ॥ निर्लिपजातस्तुतिपुष्टदेहोनिर्गतुमीष्टे नचकिंचिदुच्चैः ॥ ११ ॥ पुष्पप्रदानेनस्फुरद्भुवर्गेश्रांतेमराणांप्रथ मंहतानां ॥ हठेनकंठादपहृत्यमालामद्दृणवताभ्यग्रसुरानमर्षः ॥ ॥ १२ ॥ तंतादृशंतरणिभूभुजचंद्रिमानंसंवीक्ष्यसर्वरिपुदक्षुच

भीतिभाक्षु ॥ आसीत्प्रमोदपरिमेदुरमेकमेवसव्येतरंरणतलेवन मालिनेत्रम् ॥ १३ ॥

विस्फारणंधनुर्गुणटणत्कारः विजृंभमाणंवृद्धिंगतं वियत्आकाशम् ॥७॥ कुरुषभूपतिःकर्णः करीहस्ती निजास्पदंनिजशीर्षं द्युमणिःसूर्यः ॥ ८ ॥ वृत्तमिधाळुवभेदः अरातिःरिपुः खेटंरक्षकचर्म व्रीडखेदःलज्जादुःखम् ॥ ९ ॥ द्युमणिसुतःकर्णः पत्तिकदंबकंपत्तिसंघः विषादिनिषादीदुःखयुक्तहास्तिपकः यमपुरीपथिकंव्यधात्जघान ॥ ॥ १० ॥ भटाग्रेसरःवीरशिरोमणिः रविरंध्रमार्गंसूर्यमंडळं निर्लिंपाःदेवाः इष्टेन नशक्तोबभूव ॥ ११ ॥ सुरद्रुःकल्पवृक्षःप्रथमंवृतानांअमराणांनववीरजन्यानांदेवानांअमरीअप्सराः ॥ १२ ॥ तरणिभूभुजाचंडिमानंकर्णबाहुपराक्रमं प्रमोदपरिमेदुरः-हर्षव्याप्तः सव्येतरःदक्षिणः वनमालीश्रीकृष्णः ॥ १३ ॥

रिक्तेपुष्पैःसिद्धगंधर्वमुख्येमुक्त्वामुक्त्वामूर्ध्निवीरस्यतस्य॥द्वावेवाभ्रेद्योसदांगोष्ठिमध्येपूषाचंद्रौपुष्पवंतावभूताम् ॥१४ ॥ वियत्प्रदेशाद्विशिखैःकठोरैर्दुद्रावदूरंध्रुवमब्जबंधुः ॥ अमुष्यनोचेदचिराद्व्रजेरन्पादाःकथंपाटलिमातिरेकम् ॥ १५ ॥ तरणेःकिरणैस्तदारुणानांपटलंव्योम्निपयोमुचांबभासे ॥ चिरकालबुभुक्षितैःपिशाचैरधिकंमांसमिवाहवादुपात्तं ॥ १६ ॥ अवरोपितज्यमथकर्णकार्मुकंविरतौदिनस्यविजहौविनम्रताम् ॥ अवलोकनायहरिदंतरेभयाद्द्रवतामरातिधरणीभुजामिव ॥ १७ ॥ अप्राप्तनूतनशरक्षतिभिःस्वसैन्यैरस्पंददृष्टिभिरनुक्षणमीक्ष्यमाणः ॥ दुर्योधनाग्रकरसंवलितांगुलीकःप्राविक्षदात्मकटकंसतुभानुसूनुः ॥ १८ ॥

रिक्तःरहितः वीरमूर्ध्निकर्णमस्तके अभ्रंगगनं द्योसदःदेवाः गोष्ठीसभा पूषासूर्यः ॥ ॥ १४ ॥ विशिखःबाणः अब्जबंधुःसूर्यः अचिराद्व्रजेरन्चिरकालंमापुः पाटलिमातिरेकःरक्तवर्णातिशयः ॥ १५ ॥ अरुणःरक्तवर्णः पयोमुक्मेघः आहवादुपात्तंयुद्धाद्गुत्पन्नं तरणिःसूर्यः ॥ १६ ॥ अवरोपितज्यंज्यायुक्तं विनम्रतांविजहौउच्चंबभूव हरित्दिक्अरातिःशत्रुः धरणीभुजःभूपाः ॥ १७ ॥ क्षतिः व्रणः अनुक्षणमीक्षमाणःपुनरपिदृष्टः संवलितंधृतं कटकंप्राविक्षत्सैन्यंप्रविवेश ॥ १८ ॥

( गद्यम् ) अपरेद्युर्विपरिस्फुरत्कमलचक्रव्यूहेप्रकाशमानपत्रिकुलसंचारेप्रकटितधनंजयतेजोवर्धनेभाविनिप्रधनइवप्रभातसमये

प्रादुर्भवतिसतिमधुमथनसारथेर्मघवत्कुमारस्यवधकृतेशल्यसार ध्यमेवसाधनमवधारयताराधेयेनकृतबोधनःसुयोधनोमानधनभा जंमद्रराजमुपगम्यस्वागमननिदानपरिज्ञानेनविमनायमानमर्पितं तैस्तैर्मधुररचनैःवचनैःकोपगिरेरधित्यकाप्रदेशात्कथंचिदवरोप्यक र्णरथनेपथ्यंसारथ्यमधिरोपयामास ॥ १ ॥

पत्रीवाणः २ पक्षिः तेजोवर्धनंवीर्यवृद्धिः प्रधनंयुद्धं मधुमथनःश्रीकृष्णः अवधार-यन्निश्चयंकुर्वन् राधेयःकर्णः मानएवधनंभजतितंमानभाजं मद्रराजःशल्यः कोपगिरे-रधित्यकाप्रदेशात्कथंचिदवरोप्यमहायत्नेनगतक्रोधंकृत्वा रथनेपथ्यंरथसज्जीकरणम् ॥

( पद्यम् ) अथमद्रनायकनिबद्धसैंधवंरथमारुरोहरविभूःपराक्रमी॥ प्रमदश्चकौरवचमूचरान्क्षणाददतिसाध्वसंचपरयोधमंडलम् ॥१९॥ ततःक्षणादेवरथेनतेनसंग्रामसीमानमुपेत्यवीरः ॥ शंखंतदंत्याक्षर वाच्यमेतद्व्यंनिनादैरपुपूरदेषः ॥ २० ॥

मद्रनायकनिबद्धसैंधवःशल्यकृतसारथ्यः सैंधवःअश्वः विभूःकर्णः प्रमदःआनंदः प-रयोधमंडलंशत्रुवीरसमूहः साध्वसंभीतिम् ॥ १९ ॥ संग्रामसीमानुपेत्यसमरभूमिमाग-त्य शंखांत्याक्षरवाच्यंखंआकाशंनिनादैरपुपूरत्शब्दैःपूर्णमकरोत् ॥ २० ॥

( गद्यम् ) तदनंतरंप्रचंडतरदोर्दंडश्चंडकरसूनुर्निजयंतारंमद्रनेतारं प्रतिवचनमित्थमुत्थापयामास ॥ २ ॥ इदानीमयिशल्यतवसार थ्यकौशल्यंनिशम्यविजयसारथेर्वदनंलज्जापयोधौसहमज्जनकृते नाभिकमलवास्तव्यस्यनयनायुधसारथेश्चत्वार्यपिमुखानिसमा ह्वातुमिवभृशमवनतमास्ते ॥ ३ ॥

दोर्दंडःबाहुदंडः चंडकरःसूर्यः यंतासारथीः मद्रनेताशल्यः प्रतिवचनमुत्थापयामा-सभाषणमुवाच ॥ २ ॥ विजयसारथिःश्रीकृष्णः लज्जापयोधिःलज्जासमुद्रः मज्जनं-स्नानं नयनायुधसारथिःश्रीशंकरसारथिःब्रह्मा समाह्वातुंआह्वानंकर्तुं अवनतंलीनम् ३

( पद्यम् ) मरुत्कदंबैरुपलाल्यमानंमहेंद्रदीप्ताखिलहेतिजालम् ॥ शराभिवर्षेणधनंजयंतमिंगालयेदेषभुजः क्षणेन ॥ २१ ॥

मरुत्कदंबोपलाल्यमानंदेवगणसेव्यमानं दीप्ताखिलहेतिजालंसकलप्रखरशस्त्रपंक्तिः शराभिवर्षःजलवृष्टिः २ बाणवृष्टिः धनंजयःअग्निः २ अर्जुनःइंगालयेत्शांतंकुर्यात् २१

( गद्यम् ) ततस्तांश्रवणपुटक्रकचंवाचमाकर्ण्यपार्थेनपुरामार्थि

तमर्थंहृदिकृत्यसमद्रभूपतिरवार्यसूर्यसुतधैर्यगगनकुसुमसोदर्यंवि
धातुमेवमुत्तरमुत्तरंगयामास ॥ ४ ॥

क्रकचंवाचंकर्तनकारीवाणीं पार्थःयुधिष्ठिरः गगनकुसुमसोदर्यंविधातुंनाशंकर्तुं उ-
त्तरमुत्तरंगयामासप्रत्युत्तरमुवाच अवार्यंनिवारणकर्तुमशक्यम् ॥ ४ ॥

( पद्यम् ) पुराविराटस्यपुरोपकंठेरणांगणेसारथिनार्जुनस्य॥उत्पा
ट्यमानेपिरयेणनेत्रेनिद्राकथंतेहृदयंगमासीत् ॥२२॥ आयासले
शरहितंवनसीम्निपूर्वंसंदानितेसुहृदिनेसुरवांशिकेन ॥ कुत्रापिगूढ
वसतिस्त्वमहोनिकुंजेकिंनाबिभेःसविधकीचकरंध्रगानात्॥२३॥
पांचालिकायाःपरिणीतिकालेसंधीभवद्भिःसहधार्तराष्ट्रैः ॥ भवान
भूत्पार्थशरप्रयोगात्कर्णौपिभूत्वाकथमात्तगंधः ॥ २४ ॥ इंद्रात्म
जातेनसतेनगंतुमीष्टेतुलामीश्वरएकएव ॥ तृणायमत्वानिजजी
वितुंयोयुद्धाययेनस्पृहयन्नुदस्थात् ॥ २५ ॥

पुरोपकंठेपुरसमीपे सारथिःउत्तरः उत्पाट्यमानंगृह्यमाणं रयःवेगः नेत्रंनयनं २ व-
स्त्रं हृदयंगमःप्रियकरः ॥ २२ ॥ आयासःयत्नः संदानितःबद्धःसुहृत्दुर्योधनः सुरवां-
शिकःचित्रसेनगंधर्वः निकुंजःलतामंडपः कीचकः वेणुः ॥ २३ ॥ परिणीतिकालःवि-
वाहकालः आत्तगंधःपराजितः २ कर्णेंद्रियगृहीतगंधः ॥ २४ ॥ इंद्रात्मजातःअर्जुनः
गंतुमिष्टेशक्तोभवति ईश्वरःशंकरः स्पृहयन्नुदस्थात्ईर्ष्यंयायुद्धंकर्तुंसिद्धोभूत् ॥ २५ ॥

( गद्यम् ) इतितस्यमद्राध्यक्षस्यताट्टक्षमृभुक्षकुमारेपक्षपातंसमी
क्ष्यकर्मसाक्षिनंदनोपिरौक्ष्यवर्ज्यंपदविभागचमत्कृतिसुभगभावुकं
वचनमेवमभ्राणीत् ॥ ५ ॥

मद्राध्यक्षःशल्यः ऋभुक्षकुमारःअर्जुनः कर्मसाक्षीसूर्यः रौक्षवर्ज्यंकाठिण्यरहितं प-
दविभागचमत्कृतिसुभगःश्लेषयुक्तः ॥ ५ ॥

( पद्यम् ) अयिभागिनेययशसांसुभगंकरणत्वमद्यभुविमद्रपते॥
ममभातुलेतिबहुधावदताविजयेनशंभुमपिमातुलय ॥ २६ ॥ इ
त्युक्तवतएतस्यसौरेर्दंतपटाविव ॥ जवादुभावनीकौतौजघटाते
परस्परम् ॥२७ ॥ सर्वतोपिभुविसैन्यपरागैःशोषितेषुसजलेषुसर
स्सु ॥ केवलंगगनएवतदानीमप्सरःकुलमदृश्यतलोकैः ॥ २८॥

भागिनेयःबंधुपुत्रः सुभगंकरणंवर्णनं, मातुलयतुलनामाकुरु ॥ २६ ॥ सौरिःकर्णः

दंतपटःओष्ठः उभावनीकौकौरवपांडवसैन्ये जघटातेमिमिलतुः ॥ २७ ॥ परागःधूलिः सरःसरोवरं अप्सरसांदेवस्त्रीणां २ जलसरोवराणाम् ॥ २८ ॥

(ग०)तदनुतत्रयोःसेनयोरुभयोरपिपरस्परघट्टनजनितस्फुलिंगव्याजननिपीतपूर्वानूरुधिरशीकरनिकरानजीर्णशंकयावमंती भिरिवपट्टिशवल्लरीभिश्चकबंधोत्पतनसृष्टिपाटवमपिसंग्रामदेशिकसदेशादभ्यसितुमवनीतलमवतीर्णैःपयोधरपटलैरिवखेटकवलयैश्चयुगपदेवबहुविधवीरयोधजनप्रवेशसौकर्यायतरणिरंध्रसरणिमतिविशालयतुमिववियत्तलेदूरंदूरमुच्चलिताभिःशक्तिभिश्चप्रतिक्षणक्षपितविपक्षकुलवृत्तांतंमुहुर्मुहुरटनीमुखेनकथयितुमिवधानुष्ककर्णाभ्यर्णमभ्यागतैःकोदंडदंडैश्चविचित्रतरचक्रचंक्रमणमिषेणपदात्पदमपिनगंतव्यमितिविमतनिरोधकुंडलनामिवकुर्वद्भिरर्वद्भिश्चयुद्धविलोकनबद्धकौतुकसिद्धयौवतकुचमंडलनिजकुंभतारतम्यपरिचिक्षिषयेवदूरंदूरंनभसिकरान्प्रविसारयद्भिःशुंडालमंडलैश्चवेगसंभ्रमंसंविदार्यमाणधरणीरंध्रनिर्गत्वरफणींद्रफणासहस्रमणिकिरणधोरणीमसृणितैरिवशोणितपंकशोणैश्चक्रैःसंक्रीडद्भिःशतांगैश्चभयानकंसकलसुरजनतनूरुहसौखशायनिकंसमीकमभूत् ॥ ६ ॥

निपीतपूर्वापूर्वनिर्गताः शीकराःबिंदवः निकरःपुंजः वल्लरीलता कबंधशीर्षरहितशरीरं २ जलं पाटवंकौशलं संग्रामदेशिकःयुद्धरूपगुरुः खेटकवलयंचर्ममंडलं सौकर्यंसुलभत्वं तरणिरंध्रसरणिःरविमंडलबिलमार्गः विपक्षःशत्रुः अटनिःधनुष्कोटिः धानुष्कःधनुर्धरः चंक्रमणंगमनं अर्वःअश्वः यौवतंस्त्रीमंडलं करःशुंडा शुंडालमंडलःहस्तिगणः संभ्रमःत्वरा फणींद्रःशेषः धोरणीपंक्तिः मसृणितंव्याप्तं शोणितपंकः रक्तकर्दमः शतांगःरथः तनूरुहसौखशायनिकंसमीकंरोमांचोत्पादकंयुद्धम् ॥ ६ ॥

( पद्यम् ) दुःशासनोनयनजृंभितकोपवह्निभीत्येवफालतलमूर्ध्वमुपाश्रिताभ्याम् ॥ भ्रूभ्यांभयानकमुखोरिपुभूमिपानप्यारब्धयोधयितुमेतदतीवचित्रम् ॥ २९ ॥ सकुंतलाल्यंवरधूतिधुर्यःस्वसिंहनादैर्विदधेदुरापः ॥ पराभवंसोमकलास्यहेतोपांचालिकायामिवपार्थचम्वाम् ॥ ३० ॥

जृंभितकोपवन्हिःवर्धमानकोपाग्निः फालतलंभालभागः रिपुभूमिपःशत्रुराजा योध-

यितुमारब्धयुद्धंकारयितुमारभत् अवीवचित्रंअत्याश्चर्यम् ॥ २९ ॥ कुंतलालिःकेशकलापः अंवरधूतिःकेशाकर्षणं २ गगनकंपः लास्यंनृत्यं पार्थचमूपांडवसेना पांचालिकाद्रौपदी कुंवंआदरपूर्वकंलालयतिगृह्णातियःसःकुंतलाल्यः ॥ ३० ॥

(गद्यम्) ततोयाज्ञसेनीकटिनटपटापहारसमयचक्रचंक्रमणवासनानुवृत्तिवशादिवविविधानिरेचकमंडलानिवितन्वन्निजास्पदभेदकोभीमःक्वासमागच्छतीतिवीक्षितुमुन्नतप्रदेशमधिरूढाभ्यांहृदंतररुधिरबुद्बुदाभ्यामिवरोपलोहिताभ्यांलोचनाभ्यांसाध्वसदानशौंडःकलितवंभ्रम्यमाणघनतरगदाविघट्टनविपाटितभटघोटकरटिघटाक्षतजप्रवाहैःसमरसीमांगुल्फद्वयसींविदधानःसुयोधनानुजोवियदध्वनिविजृंभितध्वनिर्वृकोदरदृगध्वनीनोऽभूत् ॥ ७ ॥

याज्ञसेनीद्रौपदी पटापहारसमयःवस्त्रहरणकालः चक्रचंक्रमणंमंडलाकारगमनं अनुवृत्तिःपरावर्तनं रेचकमंडलंवितन्वन्मंडलाकृतिभ्रमणं कुर्वन् आस्पदंहृत्स्थानं रोषलोहितःकोपारक्तवर्णः साध्वसंभीतिं कलितंगृहीतं विघट्टनंताडणंविपाटितःविदारितः भटघोटकरटिघटावीराश्वहस्तिसंघः गुल्फद्वयसींरक्तगुल्फयुक्तां वियदध्वनिगगनभागे वृकोदरदृगध्वनीनःभीमदृष्टिविषयः ॥ ७ ॥

(पद्यम्) बद्धकच्छावपिद्वौतावभीकौभीमकौरवौ ॥ गदागदिरणंघोरंकुर्वातेस्मपरस्परम् ॥ ३१ ॥ निपातितस्यद्विषतःसभूमौसमक्षमक्ष्णांकुरुभूपतीनाम् ॥ गंडेकराभ्यामुदरेपदाभ्यांसंताडनंसाधुसमाचचार ॥ ३२ ॥ निजप्रियाकेश्यरुषोऽस्यशत्रोर्विभिद्यवक्षःपिबतोऽसृगंभः ॥ समीरसूनोश्वपिशाचिकानांसपीतिकेल्यांकलहोबभूव ॥ ३३ ॥ एणीदृशःस्वकीयायावेणीतैरेवशोणितैः ॥ क्षोणीभृतांद्विषामेषःशोणीचक्रेसहाक्षिभिः ॥३४॥ तदनंतरम् ॥ रिपुकुरुक्षेत्रतलेचरंतंतृणायमत्वाद्रुपसेनमुग्रम् ॥ किरीटिगोपःपरधेनुकांतंनिनायकांडैर्यमलोकगोष्ठीम् ॥ ३५ ॥ अवकर्ण्यकिरीटिभग्नमाजावभिमन्योरधिकंसुतंसकर्णः ॥ रिपुरंकुतरक्षुरष्टदिक्षुज्वलयंश्चक्षुरभूदरीन्दिधक्षुः ॥ ३६ ॥ कुंडलीकृतकोदंडश्चंडभानुतनूभुवः ॥ तांडवंविदधेपाणिःपांडवानांबलांतरे ॥ ३७ ॥ युद्धेहतोयोधसमूहएपविंबंपितुर्मेवतभेत्स्यतीति ॥ मत्वेवपत्युर्महसांकुमारःसंछादयामासदिवंशरौघैः ॥ ३८ ॥

अभीकःकामुकः २ भयरहितः रणंकुर्वातेस्मयुद्धंचक्रतुः ॥ ३१ ॥ द्विषतःदुश्शासनस्य गंडःकपोलः साधुसमाचचारअपराधयोग्यंवर्तयामास ॥ ३२ ॥ मिषाद्द्रौपदी तस्याःकैश्यः केशपाशःकर्षतियःतस्यप्रियाकैश्यकृषः वक्षःहृदयं असृगंभःरक्तरूपजलं सप्रीतिकेलिःसहयानक्रीडा ॥ ३३ ॥ एणीदृक्मृगलोचना क्षोणीभृत्राजा शोणीचक्रेरक्तवर्णांचक्रेअक्षिनेत्रम् ॥ ३४ ॥ तृणायमत्वाधिकृत्वा वृषसेनःकर्णसुतः किरीटिःअर्जुनः परधेनुकाःशत्रुहस्तिन्यः गोष्ठीसभा ॥ ३५ ॥ आजौयुद्धे सुतःवृषसेनः रंकुःपशुः तरक्षुःव्याघ्रः अरीन्दिधक्षुःशत्रून्दग्धुमिच्छुः ॥ ३६ ॥ कोदंडधनुः चंडभानुः सूर्यःपाणिःहस्तः बलांतरंसैन्यमंडलम् ॥ ३७ ॥ पितुर्बिंबंसूर्यबिंबं भेत्स्यतिप्रविबंधंकुर्वते ॥ ३८ ॥

करींद्रमंडलेपेतुःकर्णमुक्ताःशरव्रजाः ॥ सदानांबुकरंयांतिस्थूल
लक्ष्यंहिमार्गणाः ॥ ३९ ॥ प्रकाश्यकर्णेयुधिकालपृष्ठंभयंकराभे
चलतिप्रवीरे ॥ तदीयभल्लैर्दलिताःपरेपिप्रकाश्यचेलुर्बतरक्तपृष्ठं
॥ ४० ॥ तत्रतत्रयुधिसंचरमाणःशल्यसारथिमतासरथेन ॥ चू
षितारिमदवारितयासौसूर्यसूनुरपिचंडकरोभूत् ॥ ४१ ॥ रवेःकु
मारस्यरथंनिरीक्ष्यरमाप्रियस्यापितदासमीके ॥ धैर्यंत्त्वदःस्वेद
जलंशरीरात्जगालतोत्रंचजवेनहस्तात् ॥ ४२ ॥

शरव्रजःबाणसंघः दानांबुदानोदकं २ मदोदकं मार्गणःयाचकः २ बाणः स्थूललक्ष्यःविपुलदाता २ पृथुललक्ष्यं (शरसंधानम्) ॥ ३९ ॥ आभाकांतिः भल्लःबाणः दलितःहतःरक्तपृष्ठःरक्तयुक्तपृष्ठभागः ॥ ४० ॥ अरिमदवारिशत्रुमदरूपजलं चूषितंशोषणंकृतं चंडकरःसूर्यः २ प्रचंडकर्मकर्ता ॥ ४१ ॥ रमाप्रियःश्रीकृष्णः समीकंयुद्धं स्वेदजलंघर्मोदकं तोत्रःप्रतोदः ॥ ४२ ॥

(गद्यम्) तदनंतरममर्त्यचक्रवर्तिविकर्तनतनयौपरस्परंसमरंप्राव
र्तयितुमारभेतां ॥ ८ ॥

अमर्त्यचक्रवर्तीइंद्रः विकर्तनःसूर्यः समरंप्रावर्तयितुमारभेतांयुद्धमारब्धवंतौ ॥ ८ ॥

(पद्यम्) राधाकुंतीपुत्रयोःशौर्यभाजोश्चक्रीभूतौचापदंडौज्वलंतौ ॥
मध्यस्थायारंगभूदेवतायास्ताटंकाभामादधातेस्मतत्र ॥ ४३ ॥ अ
वकर्णयंशरासवल्लिघोषंसुतयोस्तत्रसहस्रदृष्टिघृष्ट्योः ॥ दिविवै
णिकतापसस्यचित्रंमहतीप्रीतिरभूच्चनैवचाभूत् ॥ ४४ ॥ उल्लोलक
ल्लोलितदोर्विलासावुपेंद्रमद्रेश्वरसारथीतौ ॥ परस्परंभल्लकुलैरमू

तांरुषापिलीढावरुषापिलीढौ ॥ ४५ ॥ कर्णामरेंद्रसुतकार्मुक वल्लिवांतैर्नीरंध्रमंबरतलेनिबिडैपृषत्कैः ॥ अभ्यागतानमरभावमु पेत्ययोधान्पप्रच्छवैणिकमुनिःप्रधनप्रकारान् ॥ ४६ ॥

चक्रीभूतःवक्रगतिप्राप्तः ज्वलंतःदोर्भिर्मतः रंगभूदेवतामम रांगणदेवी ताटंकाभामादधातेस्मभूषणकांतिंधारयामासतुः ॥ ४३ ॥ शरासवल्लिःधनुर्लता सहस्रदृष्टिःइंद्रः सहस्रवृष्टिःसूर्यः दिविस्वर्गे वैणिकतापसःनारदः ॥ ४४ ॥ उल्लोलःअतिचंचलः कल्लोलःमहालहरी दोर्विलासःबाहुवीर्यं उपेंद्रःकृष्णः मद्रात्मजःशल्यः रुषालीढः कोपेन व्याप्तः अरुषालीढःक्षतेनव्याप्तः वांतःमुक्तः ॥ ४५ ॥ पृषत्कःबाणः अमरभावंदेवत्वं वैणिकमुनिःनारदः प्रधनप्रकारःयुद्धचमत्कारः ॥ ४६ ॥

पाणिनातदनुभानुनंदनेपन्नगास्त्रमचिरेणगृह्णति ॥ पूर्वमेवनिखिलाप्सरःकुलात्सादधौवरणमाल्यमुर्वशी ॥ ४७ ॥ सव्यसाचिहननायशरासेसंहितेरविभुवाभुजगास्त्रे ॥ नंदनद्वितयवस्त्वमभंस्तस्वस्यकल्पकवनेनमहेंद्रः ॥ ४८ ॥ रवितनयविमुक्तशस्त्रमेतद्दिविरसनायुगलंवहिर्हितन्वत् ॥ अहमरिमधुनाद्विधाकरोमीत्यभिनयकेलिमिवादधद्बभासे ॥ ४९ ॥ द्विधाविधातुंविजयंशिरोधावथापतंतंससरीसृपंतम् ॥ निरीक्ष्यभारेणनिजेनशार्ङ्गीनिमज्जयामासरथांगमुर्व्याम् ॥ ५० ॥ आनेमिमग्नस्यहरेरुपायात्तदाशतांगस्यकिरीटिनोऽस्य ॥ गर्भैवकाशंकिलबांधवेनशंभोःशतांगोधरणिर्व्यनानीत् ॥ ५१ ॥ ततःकुरूणामिवपुष्करांतेक्ष्वेडाभटींजृंभयता निजांच ॥ उग्राहिनातस्यकिरिटशृंगमग्राहिनाकेंद्रभयेनसाकम्५२

पाणिःहस्तः भानुःसूर्यः पन्नगास्त्रंसर्पमुखबाणः कुलंसमुदायः ॥ ४७ ॥ सव्यसाचीअर्जुनः संहितःसंधानकृतः नंदनद्वितयं ( नंदनंवनंपुत्रंजयंतंच ) नंदनद्वयं अर्जुनवधात्अवशिष्टम् ॥ ४८ ॥ रसनायुगलंजिह्वाद्वयं अरिंअर्जुनं अभिनयकेलिःसूचनभावः ॥ ४९ ॥ विधातुमापतंतंसरीसृपं कर्तुमागतंसर्पं शार्ङ्गीश्रीकृष्णः उर्वीपृथ्वी रथांगंचक्रम् ॥ ५० ॥ शतांगनेमिःरथधारा किरीटीअर्जुनः गर्भावकाशःमध्यस्थितिः ॥ ५१ ॥ पुष्करंआकाशं क्ष्वेडाभटींदंष्ट्रविषोत्सर्गलीलां २ सिंहनादलीलां उग्राही कालसर्पः किरीटशृंगंमुकुटाग्रं नाकंस्वर्गम् ॥ ५२ ॥

ततःस्नेहरसार्द्रस्तंपक्षपातीभुजंगमम् ॥ तक्षकःकिलपार्थस्यवर्धयामाससायकः ॥ ५३ ॥ दंतींद्रपादातरथाश्वभेदीकुंतीकुमारः

सहरेर्निदेशात् ॥ राधेयकायेविविधास्त्रजालमाधेयमेवव्यधितक्षणेन ॥ ५४ ॥ सर्वेषुयाचकजनेषुबहुप्रदत्वात्स्वर्वेतरोन्नतिरयंस्वमणेःकुमारः ॥ पार्थस्यमार्गणगणंपतितंशरीरेसार्थंव्यधादभिमतंसवितीर्यजीवम् ॥ ५५॥ कर्णोऽपिकर्णेंद्रियमात्रपात्रेदुर्योधनःशोकरसेममज्ज ॥ अभ्यासभूमानमिवाधिरोढुमनागतस्यह्लदमज्जनस्य ॥ ५६ ॥ ततःस्वकीयस्यतनूभवस्यवधादपस्नातुमनाइवद्राक् ॥ मंदायमानद्युतिभारमालीमरीचमालीचममज्जसिंधौ ॥ ॥ ५७ ॥ इतिश्रीचंपूभारतेएकादशस्तबकःसमाप्तिमगमत् ।

स्नेहार्द्रःतैलयुक्तः २ प्रेमयुक्तः भुजंगमःसर्पः तक्षकःनागः २ छेदकः सायकःबाणः ॥ ५३ ॥ निदेशःआज्ञा राधेयकायःकर्णदेहः विविधास्त्रजालमाधेयमेवव्यधितसर्वशस्त्रसमूहमारोपयामास ॥ ५४ ॥ प्रदत्वंदानं स्वर्वेतरोन्नतिःमहत्तराउन्नतिः स्वमणिःसूर्यः मार्गणगणःयाचकगणः २ बाणजालं सार्थंव्यधात्सफलंकृतवान् अभिमतंउचितम् ॥ ५५ ॥ कर्णेंद्रियमात्रपात्रः नामशेषःहतः अभ्यासभूमानंअभ्यासबाहुल्यं अनागतःअप्राप्तः मज्जनंस्नानम् ॥५६॥ तनुभूःपुत्रः द्राक्त्वरितं द्युतिःतेजः मरीचमालीनिममज्जसिंधौसूर्यः अस्तंजगाम ॥ ५७ ॥

इतिएकादशस्तबकःसमाप्तः ।

---

अथ द्वादशस्तबकः ॥

( पद्यम् ) शल्यंततःपरमरातिकुलस्यचित्तेशल्यंदिशंतमनिशंरमणःकुरूणाम् ॥ कल्यंरणेषुपृतनाधिपतिंविधायतुल्यंत्रिविष्टपपतेःस्वममन्यतासौ ॥१॥ तत्तादृशंतदनुबाहुमदेनशत्रुनाकंपयंतममरावलिमस्तकेन ॥ शक्त्यानिहत्ययुधिशल्यमजातशत्रोःपाणिर्दधौप्रथमतःपरहिंसकत्वम् ॥ २ ॥ अथतंसुबलात्मजंक्षणादवगम्यप्रियपाशकंमृधे ॥ यमदापितपाशकंव्यधाद्यमयोःप्राथमिकःपराक्रमी ॥३॥ अथयुद्धतपर्तुदुःसहश्रीर्हरिदभ्यंतरधावदात्मघोपम् ॥ सहतेस्मनकिंचिदप्युलूकंसहदेवस्यभुजप्रतापभानुः ॥ ॥ ४ ॥ ज्वालानुपक्तमिवदाहविधौकृशानोःशोणंदधच्चमरवालमुदस्यचापम् ॥ पार्थेनिहंतरिरिपूनथकांदिशीकाद्रोणात्मभूप्रमुखाःसहसाबभूवुः ॥ ५ ॥

अरातिकुलंशत्रुसंघः वित्तशल्यंचित्तदुःखप्रदं कल्यंकलहनिपुणं पृतनासेना विविष्टपपतितुल्यंइंद्रसदृशम् ॥ १ ॥ अमरावलिःदेवगणः शक्तिःआयुधविशेषः अजातशत्रुः युधिष्ठिरः पाणिःहस्तः ॥ २ ॥ सुबलात्मजःशकुनिः प्रियपाशकःअक्षप्रियः मृधेसमरे यमयोःप्राथमिकःनकुलः यमदापितपाशकंव्यधात्जघानेत्यर्थः ॥ ३ ॥ तपःग्रीष्मः हरिदभ्यंतरंदिगंतरं आत्मघोषःकाकः २ स्वशब्दः उलूकः शकुनिपिता २ पक्षिविशेषः नसहतेस्मजघानेत्याशयः भानुःसूर्यः ॥ ४ ॥ अनुषक्तःयुक्तः कृशानुःअग्निः चमरवालंहरिणपुच्छं चापमुदस्यगांडीवमुच्चाल्य कांदिशीकःभयद्रुतः कृपमुखःकृपाचार्यप्रमुखः द्रोणात्मभूःअश्वत्थामा ॥ ५ ॥

( गद्यम् ) इत्थंसोदरदायादवरूथिनीनांरणक्षितौपरिक्षयमभिवीक्ष्यमहीयसासाध्वसेनमनसिविरचितप्रथमप्रवेशःक्वचनगूढावस्थितिरेवमहतीममायुष्टोमेष्टिरित्यालोच्यझटितिघटितकवचावगुंठनपन्नगकेतनःस्यमंतपंचकसामंतंसागरगंभीरंस्वरितनामानंकंचनमाहाह्रदमासाद्यमङ्क्षुजेनचिरधार्यमाणांक्षोणींत्वय्येवसमर्पयिष्यामीतिपातालवासिनःपन्नगाधिपतेर्द्विसहस्रलोचनेषुरहसिवचसानिवेदयितुमिवदूरंदूरंनिमज्यस्वविद्ययासर्वमप्यंभःस्तंभयामास १

सोदरःबंधुः दायादःपुत्रः वरूथिनीसैन्यं परिक्षयमभिवीक्ष्य संहारंदृष्ट्वा महीयस्साध्वसंमहद्भयं क्वचनगूढावस्थितिःकुत्रचिद्गुप्तस्थानं आयुष्टोमेष्टिःआयुर्वृद्धिकरयज्ञः इत्यालोच्यइतिमनसिविचार्य घटितकवचावगुठनंकृतशरीरवेष्टनं पन्नगकेतनःसुयोधनः स्यमंतपंचकातीर्थविशेषं सामंतसमीपप्रांतं ह्रदमासाद्य जलाशयंप्राप्य पन्नगाधिपतिः शेषः विद्याजलस्तंभिनीशक्तिः अंभःजलं क्षोणीपृथ्वी रहसिएकांते ॥ १ ॥

( पद्यम् ) बकहंतापुराद्यासीधार्तराष्ट्रवधोद्यतः ॥ इतिभीतस्यराज्ञोऽस्ययुक्तंकासारमज्जनम् ॥ ६ ॥ दरीषुवाशिखरीसरिज्झरीषुवापुरीषुवाघनवनवल्लरीषुवा॥तिरोभवेदयमितितंसमार्गितुंरणस्थलात्पवनसुतोऽथनिर्ययौ ॥ ७ ॥ अपरैरपिसोदरैस्तदानीमनुजातस्यजयार्थसिद्धयेऽस्य ॥ शतमन्युभुवःपुरेवदिष्ट्याशबरःकश्चनसंन्यधाद्वनांते ॥ ८ ॥

बकहंताभीमः धार्तराष्ट्रःदुर्योधनः २ हंसः बकःपक्षिविशेषः कासारमज्जनंसरोवरांतःप्रवेशः ॥ ६ ॥ सरित्नदी झरीप्रवाहः शिखरीपर्वतः घनवल्लरीनिबिडलता समा-

गितुंदुर्योधनमन्वेष्टुम् ॥ ७ ॥ अपरसोदरःअन्यबंधुः वनांतेवनमध्ये सैन्यधातृसमीपं प्राप शतमन्युःइंद्रः ॥ ८ ॥

(गद्यम्) अथतेनकृतांजलिनासविनयंनिवेदितायांसार्वभौमल क्षणोपेतायांपदपंक्तौलक्ष्यमाणैःसलिलमाहर्तुंवनदेवताभिरानीतै रिवकलशैरंकितावतारपथात्संगररंगप्रयुक्तविविधायुधसविधाधी ततैक्ष्ण्यानीवपरुषाणिसरोषाणिमारुतिवचनानिनिशम्यविशालैः क्रोधनिश्वासैरुपरिकोरकितबुद्बुदकल्लकल्लोदयात्तस्माज्जलाशयादु त्तीर्यमानिनामग्रणीःसुयोधनोधीरधीरमनास्तादृशेनभीमेनसहभ यानकंगदागदिकलहायितुंसरभससमुपचक्रमे ॥ २ ॥

लक्षणोपेतालक्षणयुक्ता पदपंक्तिःचरणपरंपरा सलिलमाहर्तुंउदकमानेतुं अंकितंचि-ह्नयुक्तं सविधाधीतंसकाशात्कृतं तैक्ष्ण्यंतीक्ष्णभावः परुषंक्रूरं सरोषःकोपसहितः मा-रुतिःभीमः उपरिकोरकितःऊर्ध्वमुद्भूतः मानिनामग्रणीःमानिवीराणांश्रेष्ठः सरभससमुप-चक्रमेसवेगंप्रारेभे ॥ २ ॥

(पद्यम्)आजगामससरस्वतीतटादाजिसीम्निबलवान्बलस्तदा॥ जायतेखलुयदाख्ययाऽनिशंभद्रदेवपदयोःसमागमः ॥ ९ ॥ तत्र विस्मयकरंगदाहवंपश्यतोऽस्यसहसंमदाश्रुभिः॥पुष्पवृष्टिरुभयो रुपांतयोःपुष्करात्सुरभिगंधिरापतत् ॥ १० ॥ प्रावदेवकुशलाश्च क्रवद्भ्रमतोस्तत्रतयोर्द्वयोर्भिदाम ॥ नबलोनहरिर्नपांडवानसुरा नाश्वमुखानचारणाः ॥ ११ ॥ मन्नामधारिमृदुलंवसनंविमृद्नात्ये तत्सदेत्यनिरुपेवयदूद्वहस्य ॥ नेत्रेणसूचितमरेरथसक्थियुग्मं चूर्णीचकारगदयाश्वसनस्यसूनुः ॥ १२ ॥ तत्राथतारकमिवाद्रि सुताकुमारोजित्वासुयोधनमसौशिबिरंदिनांते ॥ वर्गःपृथातनुभु वांमधुभित्समेतःषड्भिर्मुखैर्जनितशंखरवोजगाहे ॥ १३॥ भूयो ऽपिसायमनलायमहःप्रदानेभासांप्रभोरिवकराद्दिशिविप्रकीर्णैः॥ धूमैरिवाक्षिपथरोधिभिरंधकारैःप्रापेकुरुक्षितिभृतांपटमंडपौघः ॥ ॥ १४ ॥ तस्मिन्कालेविचिंत्यक्षितिपतिमसुभिर्युक्तमासाद्यरंगे तैस्तैराश्वास्यलापैर्निजमपिसमरेभाविकृत्यंनिवेद्य ॥ मुक्तस्तेना

र्द्धमार्गैर्हरवरमुदितोद्रोणभूश्चापमौर्व्याधृष्टद्युम्नंनिकृत्यस्वसुरपित
नयानस्यचिच्छेदशूरान् ॥ १५ ॥

आजिसीम्निरणांगणे बलःबलभद्रः आख्याप्रसिद्धिः भद्रंकल्याणं अनिशंनिरंतरं पदसमागमःचरणस्पर्शः ॥ ९॥ गदाहवंगदायुद्धं मदाश्रुआनंदाश्रु उपांतःसमीपभागः पुष्करंगगनं सुरभिगंधःअतिसुगंधः ॥ १० ॥ द्वयोर्भिदांभीमदुर्योधनयोःन्यूनाधिक्यं प्रविवेदजानातिस्म ॥ ११ ॥ सदाविमुद्राविचिरकालंचूर्णयति यदूद्वहःश्रीकृष्णः सक्थियुग्मंऊरुयुग्मं अरिःसुयोधनः श्वसनसूनुःभीमसेनः ॥ १२ ॥ मन्त्रामधारिवसनंनेत्रपर्यायनामवसनं तारकःतारकासुरः अद्रिसुताकुमारःकार्तिकेयः मधुभित्श्रीकृष्णः पृथातनुभुवःपांडवाः शंखरवःशंखघोषः ॥ १३ ॥ अनलःअग्निः महःप्रदानंतेजोदानं भासांप्रभुःसूर्यः विप्रकीर्णःगलितः अक्षिपथरोधीनेत्रमार्गप्रतिबंधकः कुरुक्षितिभृत्दुर्योधनः ॥ १४ ॥ क्षितिपतिःसुयोधनः असुःप्राणः युक्तंसमयोचितं आसाद्यसंनिधंगत्वा रंगेयुद्धभूमौ लापःमधुरभाषणं हरवरःशंकरवरदानं द्रोणभूःअश्वत्थामा चापमौर्वीधनुर्गुणःनिकृत्यकंठेछित्वा स्वसृतनयान्द्रौपदीपुत्रान् ॥ १५ ॥

( गद्यम् ) इत्थंनिशीथेभयानकनिजसायकशतधाशकलितद्विष
दनीकात्कुरुनायकपटनिकेतनात्स्वभुजाभ्यामिवप्रविष्टकटका
भ्यांकृपकृतवर्मभ्यांसहपुनरपिसरस्तीरमागत्यदुष्करंस्ववृत्तांतंक
थयंतमश्वत्थामानमयिसखेसंप्रतिममप्रीतिरेतावतीत्यभिनेतु
मिवतिर्यक्प्रसारितेनबाहुयुगुलेनयत्नादाश्लिष्यत्वमेवखलुममप्रा
णोभवसीत्यौपचारिकवचनंप्रयुंजानंतंराजानंकोपादिवतदीयाः
प्राणास्तदानीमत्याक्षुः ॥ ३ ॥

सायकःबाणः शकलितंद्विपदनीकं छिन्नंपांडवसैन्यंनिकेतनंगृहं कटकंसैन्यं २ वलयं निशीथेमध्यरात्रौ अभिनेतुमिवभावेनदर्शयितुमिव बाहुयुगुलंहस्तद्वयं तदीयाःप्राणाः तत्याक्षुःदुर्योधनप्राणाःदुर्योधनंअमुचन् ॥ ३ ॥

( पद्यम् ) कृपस्ततःकुरुपुरींकृतवर्माकुशस्थलीम्॥प्रययौद्रोणसूनु
श्चपाराशर्यतपोवनीम् ॥१६॥ अथदीप्तिभिरात्मनोविजेतुर्विमत
द्रौणिशिरोमणेर्भवित्रीम्॥ सहजास्पदभंगमानहानिंसविताद्रष्टु
मिवोदयाद्रिमागात् ॥ १७ ॥

कुरुपुरीहस्तिनापुरं कुशस्थलीद्वारका पाराशर्यःश्रीव्यासः ॥ १६ ॥ आत्मदीप्तिः

स्वकीयकांतिः विमतःक्षौणिः शत्रुःअश्वत्थामा भवित्रीभाविनी आस्पदंस्थानं भंगःप-राभवः सवितासूर्यः उदयाद्रिःउदयपर्वतः ॥ १७ ॥

( गद्यम् ) ततःपरमात्मसोदरसूतमुखाच्छ्रवणकालकूटमपत्या त्ययमधिगम्यनिपीदंत्यायाज्ञसेन्यामूर्छांधकारंरत्नदीपालोकेनदूर मुत्सारयितुमुत्सुकइवगुरुसुतचूडामणेराहरणायशतांगमभिरुह्यमौ र्वीविस्फारयद्भिर्मघवत्कुमारादिभिर्मांसलितपार्श्वभागोमारुतिस्त पस्यतस्तस्यैवाश्रमपदंप्रतस्थे ॥ ४ ॥

आत्मसोदरःआत्मबंधुः कालकूटंविषं अपत्यात्ययमधिगम्यपुत्रवधंज्ञात्वा निषीदं-त्याःदुःखंप्राप्नुवत्याः याज्ञसेनीद्रौपदी आलोकःप्रकाशः गुरुसुतःअश्वत्थामा चूडामणिः शिरोरत्नं शतांगःरथः मौर्वीधनुर्गुणः मघवाइंद्रः मांसलितःमांसपुष्टः तपस्यतःअ-श्वत्थाम्नः ॥ ४ ॥

(पद्यम् )तत्रागतेषुयुधितेषुतपोधनोऽयमेकोऽपिधीरतरधीरिषुवर्षके षु ॥ निष्पांडवास्तुवसुधेतिनिजव्रतेनसाकंव्यमुंचदभिमंत्र्यज वादिपीकाम् ॥१८॥ अथब्रह्मशिरोस्त्रस्यप्रहितस्यकिरीटिना ॥ योगात्तूलपदस्येवह्रस्वभावंजगामसा ॥ १९ ॥ अथाहृतोमारु तिनाहठेनभग्नस्यशीर्षाद्गुरुनंदनस्य ॥ दत्तोमणिःपार्षतनंदनायाः शोकाग्निदाहप्रतिबंधकोऽभूत् ॥ २० ॥

तपोधनःअश्वत्थामा धीरतरधीःदृढबुद्धिः इषुवर्षकःबाणवृष्टिकर्ता वसुधापृथ्वी जवः वेगः इषीकाअस्त्रम् ॥ १८ ॥ प्रहितंमुक्तं किरीटीअर्जुनः ह्रस्वभावंजगामपराभूताब-भूव ॥ १९ ॥ मारुतिःभीमः गुरुनंदनः अश्वत्थामा मणिःचूडामणिः पार्षतनंदना-द्रौपदी ॥ २० ॥

( गद्यम् ) ततःसंवर्तसमयसच्छात्रेनाष्टशीकुरूणामुभयेषामपिसं प्रहारेकृष्णावेणीबंधायुषासहपरिसमाप्ते ॥ ५ ॥

संवर्तसमयःप्रलयकालः सच्छात्रःसदृशः संप्रहारंयुद्धं कृष्णाद्रौपदी बंधायुषासहबं-धनकालेनसह ॥ ५ ॥

( पद्यम् ) स्वंदुःशल्याशेषमपत्यवर्गपांडोश्चविज्ञायसमस्तशेषम् ॥ दृशासदांधोजरठोमहीपश्चिरंतदाचेतनयापिजज्ञे ॥ २१ ॥

दुःशलाशेषंदुःशलाकन्यावशिष्टं जरठःमहीपः वृद्धःधृतराष्ट्रः चेतनाबुद्धिः दृक्दृष्टिः समस्तशेषंसकलपांडवावशिष्टम् ॥ २१ ॥

( गद्यम् ) तदानींविदुरसंजयाभ्यांव्यजनादिभिरुपचारैर्विश्राणितसंज्ञोहासुयोधनदुःशासनेतिबहुधाविलपन्नुत्थायरणनिहतस्वजनमुखेंदुस्मरणमात्रादुल्लोलकल्लोलितशोकसिंधुभिर्बंधुभिःसहनगरान्निर्गतोभवत्समेषुगतेष्वपियूयमद्यापिननिर्गताइतिरोषेणप्राणान्बहिरुत्सारयितुमिवहृदिपुनःपुनर्विरचितकरास्फालनाभिःसविधमागम्यमज्जन्मभूसोदर्यभ्रातिभट्यमियमाचरंतीत्यसहिष्णुतयेवकपोलमकरिकामुन्मूलयंतंबाष्पप्रवाहंनयनैरुत्सृजंतीभिरनवरतमस्मान्कुसुमैरामोदभरितान्विदधानाःसुयोधनादयःक्वेतिगवेषयितुमिवभुविदूरमवतीर्णैश्चिकुरहस्तैरुपलक्षिताभिःपवनसुतपरिघोपालंभनपरिपूरितार्थैर्विलापैर्दिगंतरंनिरंतरयंतीभिःस्नुषाभिःपरिवार्यमाणयागांधारसुतयाशनैःशनैरनुगम्यमानःसंग्रामभुवमवगाह्यपंक्तिभिःपरिशीलितदीर्घनिद्रेषुपाकशासनपरिमुक्तपारिजातप्रसवपरिमलितकचबंधेषुवीरेषुतनयेषुनिपत्यपरितोलुठन्सकुरुभूपश्चिरमरोदीत् ॥ ६ ॥

विश्राणितसंज्ञादत्तचेतना उल्लोलंचंचलतरं कल्लोलःमहालहरी सिंधुःसमुद्रः विरचितंकृतं करास्फालनंहस्तताडनं सविधंसमीपभागं भ्रातिभाट्यंप्रतिशत्रुत्वं असहिष्णुता-असहनबुद्धिः मकरिकाकुंडलं बाष्पंदुःखाश्रु अनवरतंसततं आमोदःहर्षः विदधानःकुर्वाणः गवेषितुंअन्वेषितुं अवतीर्णःगलितः चिकुरोपलक्षितंकेशयुक्तं पवनसुतपरिघोपालंभनं भीमगदा निंदायंतीपूरयंती गांधारसुतागांधारी संग्रामभुवमवगाह्यरणांगणंप्रविश्य परिशीलितदीर्घनिद्रास्वीकृतमरणं पाकशासनःइंद्रः प्रसवपरिमिलितःपुष्पगंधितः कूपःधृतराष्ट्रः ॥ ६ ॥

( पद्यम् ) रुष्टंपितृव्यममुमागतमाजिभूमौद्रष्टुंभयाकुलधियाऽथ युधिष्ठिरेण ॥ अभ्यर्थितौहरिपराशरनंदनौद्रागाजग्मतुस्तमपनीतरुषंविधातुम् ॥ २२ ॥ तंव्यासकृष्णावतितप्यमानंशोकेनशांतंमुतरांव्यधत्ताम् ॥ नभोनभस्याविवदावदक्षंदंदह्यमानंदवपावकेन ॥ २३ ॥

पितृव्यःधृतराष्ट्रः आजिभूमिःरणांगणं आकुलधीःव्यग्रबुद्धिः अभ्यर्थितःप्रार्थितः पराशरनंदनःव्यासः अपनीतरुषंविधातुंगतक्रोधंकर्तुम् ॥ २२ ॥ तप्यमानंपीडितं वं

धृतराष्ट्रं शांतंव्यधत्तांशांतिमकुरुतां नभस्यःभाद्रपदमासः नभःश्रावणमासः दाववृक्षः व-नवृक्षः दवपावकःदावाग्निः दह्यमानःज्वलन् ॥ २३ ॥

( ग० ) अथसहजैःसममाहवभुवमागत्यस्वामिन्ननेकविधापराधकरणेनतवशापपात्रंजनोऽयमागतइतिचरणयोःप्रणमंतंधर्मात्मजंप्रथमतोमृदुलमालिंगितवंतंपश्चाद्भावज्ञेनमुकुंदेनपुरस्थापितलोहभीमसेनेनसहनिजवैरमपिचुर्णीकृतवंतंप्रज्ञादृशंतंपुरस्कृत्यस्मृतवद्गुलकरणीयजातोयुधिष्ठिरःपुराभगीरथइवप्रेतभूयंगतायसर्वस्मैज्ञातिजनायनिर्मलैर्निर्लिपनिम्नगासलिलैर्निवापांजलिनिर्वपणंविधिवदेवनिर्वर्तयामास ॥ ७ ॥

सहजःबंधुः आहवःयुद्धं प्रणमंतंप्रणिपातंकुर्वंतं धर्मात्मजःयुधिष्ठिरः भावज्ञःमुकुंदः अभिप्रायवेदीश्रीकृष्णः लोहभीमसेनःभीमस्यलोहमयपुत्तलिका प्रज्ञादृक्धृतराष्ट्रः चू-र्णीकृतवंतंत्यजंतं करणीयजातःकर्तव्यपरंपरा प्रेतभूयंगतःप्रेतत्वंप्राप्तः निर्लिपनिम्नगा-सलिलंगंगोदकं अपांजलिनिर्वपणंजलांजलिदानं विधिवत्शास्त्रवत् ॥ ७ ॥

( पद्यम् ) सुधाब्धिवीचीरिवतोरणावलीस्ततोवहंतींततवाद्यनिस्वनाम् ॥ हरिंपुरोधायसमंसहोदरैरविक्षदात्मीयपुरींयुधिष्ठिरः॥२४॥

वलग्नसूतंद्रुपदात्मजायावितानितेधाम्निसतत्रचेलैः ॥ स्थित्वा पितृव्यस्यदिनंतदेकंपरेऽह्निपार्थःप्रययौस्वगेहम् ॥ २५ ॥ ततः॥

राज्याभिषेकसलिलादिवसंगतंद्राग्गावर्तमुद्वहतिमूर्ध्निधर्मसूनोः ॥ कृष्णादयःशुभगुणेकृतिनोमुहूर्तेहैमंन्यधुर्मुकुटमुज्ज्वलरत्नजालम्॥ ॥ २६ ॥ द्विजप्रणामेषुनृपस्यलग्नाभूरेणराजिर्भुजसीम्निरेजे ॥ एकाधिकद्वादशहायनेषुक्षितिःकृशांगीविरहादिवास्य ॥ २७ ॥

सुधाब्धिवीचिःअमृतसमुद्रलहरी तोरणावलिःतोरणपंक्तिः वाद्यनिस्वनावाद्यशब्द-युक्ता आत्मीयपुरीमविक्षत्हस्तिनापुरंप्राविक्षत् ॥ २४ ॥ वलग्नसूतंवलंकटिभागोत्प-न्नवस्त्रं धामगृहं परेह्निद्वितीयेदिने पार्थःयुधिष्ठिरः ॥ २५ ॥ सलिलंउदकं द्राक्शी-घ्रं आवर्तःजलभ्रमणं मूर्धनिमस्तके शुभगुणमुहूर्तःसुमुहूर्तः कृतीकुशलः हैमंसौवर्णं मु-कुटंन्यधुः मुकुटंस्थापयामासुः ॥ २६ ॥ द्विजःब्राह्मणः लग्नायुक्ता रेणुराजिःरेणुपं-क्तिः एकाधिकद्वादशहायनेषुत्रयोदशवर्षेषु क्षितिःभूमिः रेजेशुशुभे ॥२७ ॥

( गद्यम् ) तदानीमेवपराशरसुतविदुरसंजयैःसहसंभाषमाणंरमा रमणमग्रतोविधायसविनयंबीभत्सुनादीयमानहस्तावलंबोभूभा रलघुकरणोपकारेणप्रीयमाणैर्दिग्वारणैःप्रेषितमिवमहांतंकंचिद्दि पमुपवाह्यमधिरूढः शशिमंडलेनशरद्राकाशर्वरीप्रथमयामइवधव लातपत्रेणपरिष्क्रियमाणोपरिभागोलालनवशेनपार्श्वयोरागम्य प्रमोदतरलपक्षपुटाभ्यांमरालदंपतिभ्यांचतुर्मुखइवचामराभ्या मुपवीज्यमानोहर्म्यशिखरावलंबिनीनांनितंबिनीनांकपोलस्खल नदूरविप्रकीर्णैरानंदबाष्पबिंदुमुकुलैरिवलाजांजलिभिरवकीर्य माणःपुरस्सरविविधमंगलवाद्यगुरुजनशिष्यायमाणगवाक्षपरंपरां तांपुरींप्रदक्षिणीकृत्यद्वारभुवमवतीर्णौनिजमणितिलकप्रतिबिंबानी वदीपांकुराणिकनकपात्रमध्येवहंतीभिर्वारसीमंतिनीभिर्विरचिता र्तिक्यमंगलःपांडुसूनुर्निबिडवितानमाल्यधूपपरिमलसुरभितेमंड पेकुरुकुलक्रमादागतंसर्वतोभद्रंनामसिंहासनमध्यवात्सीत् ॥ ८ ॥

बीभत्सुःअर्जुनः उपकारःउपकृतिः प्रीयमाणःकृतज्ञः दिग्वारणःदिग्गजः द्विपमुप-वाह्यंहस्तिवाहनं राकापौर्णिमा शर्वरीरात्रिः यामःप्रहरः धवलंशुभ्रं आतपत्रंछत्रं प-रिष्क्रियमाणोपरिभागःशोभायुक्तोर्ध्वभागः प्रमोदतरलःहर्षचंचलः मरालःहंसः चतुर्मु-खःब्रह्मा हर्म्यशिखरावलंबिनीगृहोपरिभागस्थिता नितंबिनीस्त्री विप्रकीर्णःप्रक्षिप्तः शिष्यायमाणाप्रतिध्वनिंकुर्वती कनकंसुवर्णं वारसीमंतिनीवेश्या निबिडवितानंसांद्रप्र-सरणं परिमलसुरभिःसुगंधः कुलक्रमादागतवंशपरंपरयाप्राप्तं सिंहासनमध्यवात्सीत्सिं-हासनारोहणंकृतवान् ॥ ८ ॥

( पद्यम् ) सौधंकदाचिदधिरुह्यसमंसुहृद्भिर्भूपश्चिराद्विरहितस्य पुरस्यतस्य ॥ वापीषुवीथिषुवनीषुचतुष्पथेषुनृत्यालयेषुचनिम ज्जयतिस्मदृष्टीम् ॥ २८ ॥ तदानींखलु ॥ क्षोणींकोशगृहाणि गोधनततिंघोटान्रथान्कुंजरानन्यासंपदमप्यदात्पणमिषादस्मा कमीशाययः ॥ तादृक्षःशकुनेःकरोविजयतामित्यालपंतीःशुकी रुद्यानेऽथनिशम्यधर्मतनयोमंदंजहासानुजैः ॥ २९॥ कृत्यज्ञःपां डवोऽसौसुतशतविरहादंतरत्यंतमार्तंभक्त्यासाकंपितृव्यंप्रतिदिनम

नुजैरग्रतःस्थापयित्वा ॥ कृत्वाधस्तात्कुशाग्रंविजितमिवधिया प्रांजलिःसर्वधमान्भीष्माद्वर्णाश्रमाणामविकलमशृणोत्स्वास्पदं गंतुमिच्छोः ॥ ३० ॥ आलंकायास्तदनुसहजैराहिमाद्रेर्जितश्रीः शौरेर्दोष्णाघटितनिजदोर्धर्मभूर्वेदिपार्श्वे ॥ साहस्रीणांशतमख दृशांसंदधानोभ्यसूयामन्यादृक्षंनियमपरधीराजहाराश्वमेधम् ॥३१॥ राज्ञांमौलिपरंपरांचरणयोःपाणौभदानश्रियंबुद्धौराजनयोदयंहृदि कृपांसत्यंचजिह्वांचले ॥ ३१ ॥ बाहौसागरमेखलांवसुमतींमस्ते किरीटंमुदाकुर्वन्धर्मतनूभवश्चिरमसौगोपायतिस्मप्रजाः ॥३२॥

सौधःराजगृहशिखरं सुहृत्मित्रं पुरंहस्तिनापुरं वीथिःगृहपंक्तिः वनीआरामः चतुष्पथःराजमार्गः नृत्यालयंनृत्यशाला दृष्टिंनिमज्जयतिस्मअवलोकयामास ॥ २८ ॥ क्षोणीपृथ्वी ततिःपंक्तिः घोटःअश्वः कुंजरःहस्ती अस्माकमीशःसुयोधनः पणमिषात् द्यूतात् करोविजयतांहस्तोत्कर्षोभवतुः आलपंतीशब्दंकुर्वंती शुकोशुकस्त्री ॥ २९ ॥ पांडवःयुधिष्ठिरः अंतःमनसि आर्तदुःखितं पितृव्यःपितृबंधुः कुशाग्रंअधस्तात्कृत्वादर्भासनेउपविश्य स्वास्पदंस्वर्गस्थानं प्रांजलिःअंजलियुक्तः अविकलंसंपूर्णम् ॥ ३० ॥ आलंकालंकापर्यन्तं आहिमाद्रि हिमालयपर्यन्तं श्रीःसंपत् शौरिदोष्णाश्रीकृष्णभुजबलेन धर्मभूःयुधिष्ठिरः वेदिपार्श्वेयज्ञवेदिपार्श्वभागे शतमखःइंद्रः असूयाईर्ष्या अन्यादृक्षंअश्वमेधमाजहार लोकविलक्षणंअश्वमेधयज्ञंचकार ॥ ३१ ॥ मौलिपरंपरा मस्तकपंक्तिः श्रियंलक्ष्मीं नयःनीतिः जिह्वांचलःजिह्वाग्रभागः सागरमेखलावसुमती समुद्रवलयांकितापृथ्वी मस्तंशीर्षं किरीटःमुकुटः मुदाआनंदेन धर्मतनूभुवःप्रजाःगोपायतिस्मधर्मराजालोकान्ररक्ष ॥ ३२ ॥

दिगंतरलुठत्कीर्तिरनंतकविकुंजरः ॥ प्राणैस्तुल्यंसरस्वत्याःप्राणैपीचंपुभारतम् ॥ १ ॥ उन्मीलदंबुजकदंबकसौरभीणामुन्मृत्यदीशमुकुटीतटिनीसखीनाम् ॥ आचांतवैरियशसाममृतोर्मिलानांवाचामतिंसुकवेर्वसुधैवमौल्यम् ॥ २ ॥ इतिचंपूभारतेद्वादशस्तबकः ॥

कविकुंजरःकविश्रेष्ठः प्राणैस्तुल्यंप्राणप्रियं प्राणैपीचंपुभारतंचंपुभारतंरचयामास ॥ ३१ ॥ उन्मीलदंबुजकदंबकःप्रफुल्लकमलपंक्तिः सौरभिःसुगंधः ईशमुकुटीतटिनी सखीभागीरथी यशःकीर्तिः अमृतोर्मिःअमृतलहरी वाचां वाणीनां वसुधापृथ्वी कविःअनंतभट्टः ॥ ३२ ॥ द्वादशस्तबकःसमाप्तः ।

---

समाप्तोऽयंग्रंथः

